# SARASVATIBHAVANA-STUDIES

[ Vol. XXV ]

**VAIYĀKARANĀNĀM ANYESĀM CA MATENA**

**ŚABDASVARŪPATACCHAKTIVICĀRA**

**by**

Dr. KĀLIKĀ PRASĀDA ŚUKLA
Professor in the Vyākaraṇa Department
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.



Chief Editor of the Granthamālā
DR. BHĀGIRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya.

VARANASI
1979

सरस्वतीभवन-अध्ययनमाला

[ २९ ]

# वैयाकरणानामन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः


लेखकः सम्पादकश्च

**डॉ० कालिकाप्रसादशुक्लः**

आचार्यो व्याकरणविभागस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये






ग्रन्थमालाया मुख्यसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



वाराणस्याम्

२०३६ तमे वैक्रमाब्दे  १९०१ तमे शकाब्दे  १९७९ तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,
वाराणसी ।

[ गवेषणाप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'वाचस्पतिः' ( डी० लिट्० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनार्थिकसाहाय्येन मुद्रापितश्च ]

प्राप्तिस्थानम्—
प्रकाशनविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी–२२१००२.

प्रथमं संस्करणम् : १००० प्रतिरूपाणि
मूल्यम् : २६-५० रूप्यकाणि

मुद्रक :—
सुदर्शनमुद्रक,
उत्तरबेनिया, वाराणसी.

# प्रास्ताविकम्

वेदाङ्गेष्वन्यतमं मुख्यं व्याकरणमुपनिषत्सु वेदाना वेदतयाऽपि प्रथते। यथा प्रकृतिप्रत्ययप्रदर्शनपूर्वकं पदसाधुत्वलक्षणं व्याकरणं वैदिकीषु संहितासु स्मर्यते, तथैव तस्य दार्शनिकं स्वरूपमपि 'चत्वारि शृङ्गा' इत्यादिश्रुतिवचनेषु स्पष्टमभिव्यज्यते। तत्र 'चत्वारि शृङ्गाणि = दिक्-क्रिया-साधन-कालात्मकानि; पादा: = सम्बन्धव्यक्तिजातिकालरूपा:, द्वे शीर्षे = बाह्याभ्यन्तरभेदभिन्नौ स्फोटौ, सप्त हस्तास = पुरुष, गुण, वृत्ति., लिङ्गम्, संख्या, उपग्रह., द्रव्यम् इति, त्रिधा बद्ध: - पश्यन्त्यां मध्यमायां वैखर्यां चेति तिसृषु वाक्षु बद्ध इत्येतादृशोऽर्थो व्याकरणदर्शनपरतयाऽवगम्यते। वागेवार्थं पश्यति, वागेवार्थं ब्रवीति, वागेवार्थं निहितं सन्तनोति, 'ओमिति ब्रह्म' इत्यादिश्रुतिभि: शब्दस्वरूपताया शब्दब्रह्मण एव जगत्कारणत्वमभिधीयते। शब्दब्रह्मस्वरूपाधिगमोपायस्तु व्याकरणादृते नान्योऽस्ति कश्चन। एवं खलु पदसाधुत्वलक्षणात्मकव्याकरणस्य चरम: पक्षो दर्शने पर्यवस्यति। तत्र शब्दार्थयो: परस्परं वृत्त्यपरपर्यायसंबन्धविचार., तज्ज्ञानमेवार्थबोधजनकम्, शब्दो नित्योऽनित्यो वेत्यादयो विविधा दार्शनिका: पक्षा विचारपदवीमवलम्बन्ते।

मीमांसकैर्वैशेषिकैर्नैयायिकैर्बौद्धदार्शनिकैश्च शब्दविषयका. स्वस्वसिद्धान्ता: प्रकटिता। तत्र पातञ्जलमहाभाष्यमाश्रित्य भर्तृहरिकैयटभट्टोजिदीक्षित-कौण्डभट्ट-नागेशभट्टप्रभृतिभिर्व्याकरणतत्त्वमर्मज्ञैर्दर्शनान्तरीयसिद्धान्तपर्यालोचनपूर्वकं स्वसिद्धान्तस्थापनरूपा शब्दार्थसबन्धादिचिन्तनसरणिरग्रेसारिता। यद्यपि परत: श्रीरामाज्ञापाण्डेयमहोदयेन व्याकरणदर्शनभूमिकायाम्, व्याकरणदर्शनपीठिकाया ाकरणदर्शनप्रतिमायां चेति त्रिषु ग्रन्थेषु व्याकरणदर्शनस्य परिनिष्ठितं स्वरूप पूर्ववर्त्तिवाङ्मयं निर्मथ्य निर्धारयितुं यथायथ प्रयत्न: समास्थित, तथापि तत्र वैयाकरणानामन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचाराय मुख्यतो ग्रन्थरचना नासीत् पाण्डेयमहोदयानामुद्देश्यम्।

पक्षस्यास्य सम्पूर्त्यर्थं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य नव्यव्याकरणविभागीयाचार्यपदमलङ्कुर्वाणेन पण्डितश्रीकालिकाप्रसादशुक्लमहोदयेन प्रवृत्तिरासादिता वाचस्पत्युपाधिव्यपदेशेन। एवं तावदिह शब्दनित्यानित्यत्व-शब्दार्थसंबन्ध-शब्दार्थसंबन्धनित्यत्व - देववाणीप्राचीनतमत्वादिविविधैर्विचारतरङ्गै-र्गवेषणाप्रबन्धे पूर्ववर्तिनां सर्वेषां दार्शनिकानां मतानामालोचनपूर्वकं भाषाविज्ञानमतस्यापि युक्तायुक्तत्वं निर्धारितं वागम्बुधिमन्थनं च विहितमिति नूनमग्रे-

सारिता पूर्वविचारधारापरम्परा स्वकीयानुसन्धानकार्येणानेन। परीक्षकाणामावेदनेन गवेषणाप्रबन्धस्य च पर्यालोचनेन बंहिष्ठा समज्ञा विन्दति श्रीशुक्लमहोदयः।

गवेषणाप्रबन्धस्यास्य मुद्रणाय विश्वविद्यालयानुदानायोगेन वैत्तिकं साहायकमर्पितमिति तत्रत्यान् अधिकारिणो विश्वविद्यालयस्यास्य पक्षतः साधुवादैः सभाजयन् विरमति

सं० संस्कृतविश्वविद्यालये
कोजागर्या २०३६ वै०
( ५-१०-७९ ख्री० भृगौ )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

श्रुत्वा वीणां शिशुनिनदितां कुप्यते नैव वाणी
दृष्ट्वा नृत्यं नियमरहितं शङ्करोऽशङ्करो न।
वीणापाणेः सरसिजपदध्यानमात्रैकलक्ष्यं
शोधग्रन्थं गहनविषयं पण्डिता मर्षयन्तु॥



# विषयानुक्रमणिका

| क्रमसं० | पृ० सं० |
|---|---|

# उपोद्घातः

**शोधविषयस्य महत्त्वम्**

लोके प्राणिना प्रायः सर्वोऽपि व्यवहारः शब्देरेव प्रचालितो दृश्यते। यद्यपि मूकानां व्यवहारश्चेष्टादिना सम्पद्यते, तथापि तत्रापि ध्वन्यात्मक. शब्दोऽनुभूयत एव। यत्रापि ध्वनिर्न श्रूयते, तत्रापि हृद्देशावच्छेदने ध्वनिर्वर्तत एव, रोगादिना बहिर्निर्गन्तुं न शक्यते। पशुपक्षिणामपि व्यवहारो ध्वन्यात्मकेन शब्देन भवतीति सार्वजनीनमेव। मौनिव्यवहारोऽपि परश्रवणागोचरसूक्ष्मशब्दमूलक एवेति नास्ति शङ्कापङ्कावकाश.।

कस्कोऽपि मनुष्यः स्वमनोगतान् भावान् सत्यवसरे मनुष्यान्तरं यदा बोधयितुं वाञ्छति, तदा मनुष्यान्तरमनसा सम्बन्धुं प्रयतते। तत्र योगिनोऽन्तरा सामान्यस्य जनस्यान्यदीयमनसा साक्षात् सम्बन्धो भवितुं नार्हति। वक्ता च विदधाति प्रयत्नं तथा कर्तुम्। स च प्रयत्नः कर्मेन्द्रियजन्यव्यापाररूपः। तेन च यत्नेन वर्णात्मकः शब्दः प्रादुर्भवति। तस्यैव शब्दस्य श्रोत्रेन्द्रियद्वारा परकीयमनसा सम्बन्धो भवति। तच्छब्दद्वारैव परः परकीयमनोगतान् भावान् वेत्ति।

यद्यपि श्रोत्रेन्द्रियग्राह्यता ध्वन्यात्मकस्य वर्णात्मकस्य च शब्दस्य, तथापि शास्त्रे प्रायो वर्णात्मकः शब्द एव शब्दत्वेन गृह्यते, तत्रैव शास्त्रीययोगात्। तथा चोक्तम्—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते[1]... ... ... ... ... ... ... ... ॥

एवञ्च सिद्धं यत् शब्दा एव प्राणिनां विशेषतो मनुष्याणां परस्परं व्यवहार-हेतवः।

---

१. ( पा० शि० ६ )

तत्र लोकव्यवहारे 'गामानय' इति वाक्यश्रवणानन्तरम् 'गोकर्मकमानयनं मत्कर्त्तव्यम्' इत्यर्थमवगच्छन्ति श्रोतारः। तत्र शब्दस्यार्थेन समं कः सम्बन्धः स्यात्, येन शब्दविशेषादर्थविशेषः संप्रतीतो भवेत् ?

अयमाशय—विषयेण सह सम्बद्धानामेव प्रमाणानां चक्षुरादीनां ज्ञानोत्पादकत्वं दृश्यते। न हि घटेन सह सम्बन्धं विनैव चक्षुरादिज्ञानं जनयति। यथा प्रत्यक्षस्थले संयोगसंयुक्तसमवायादिसन्निकर्षेण घटादिना सम्बद्धानामेव चक्षुरादीना प्रत्यक्षप्रमाजनकत्वम्, अनुमितौ धूमादिश्च व्याप्त्यादिना सम्बन्धेन वह्न्यादिकम्, तथैव प्रमाणत्वेन व्यवस्थापितस्य शब्दस्यापि स्वप्रमेयेण सार्कं भवितव्यं केनचित् सम्बन्धेन।

स च कः सम्बन्ध. ? विचारणायाञ्चास्याम् 'शब्दार्थयोस्तादात्म्यं सम्बन्धः' इति शाब्दिकसंप्रदायः।

'अस्माच्छब्दादयमर्थो बोद्धव्यः इतीश्वरेच्छाविषयत्वमेव सः' इति नैयायिकनय.।'

प्रत्याय्यप्रत्यायकभावापरपर्यायमनुभाव्यानुभावकत्वं शब्दार्थयोः सम्बन्ध इति मीमासकाः।

शब्दस्यार्थोऽनुभाव्यः, अर्थस्य चानुभावकः शब्दः। श्रूयमाणानि च पदसमुदायात्मकानि हि वाक्यानि अर्थविशेषमवगमयन्ति। तत्र शब्दस्यार्थः प्रत्याय्यः, अर्थस्य शब्दः प्रत्यायकः।

अत्र पदार्थस्मृतेः प्रत्ययशब्देन ग्रहणं मा भूदिति इदमेव प्रत्याय्यप्रत्यायकत्वमनुभाव्यानुभावकशब्देन व्यवह्रियते।

एवमेव 'बोधजनकता शक्ति.' इति प्राचीनवैयाकरणा; 'वाच्यवाचकभावापरपर्यायरूपा सा' इति नव्यवैयाकरणाः, 'ईश्वरेच्छाशक्तिः' इति तार्किकाः; 'इच्छामात्रं सा' इति केचन नैयायिकाः।

तथा 'स्फोटात्मकः प्रणवरूपः शब्द एव वाचक, वाच्यश्च' इति शाब्दिकाः। 'पदसमुदाय एव वाचक.' इति नैयायिका·, 'अवर्णादीना वाचकत्वम्' इति मीमासकाः, केचन वैयाकरणाश्चेति अनेके विकल्पा आचार्याणा तेषु तेषु शास्त्रेषु प्रसिद्धा· सन्ति शाब्दबोधविषये।

एवमेव केचन शाब्दबोधे तात्पर्यज्ञानं कारणं मन्यन्ते; केचन च शाब्दबोधे प्रामाण्यप्रयोजकत्वं तस्याभ्युपगच्छन्ति, केचिदासत्ति न स्वीकुर्वन्ति, केचन च स्वीकुर्वन्ति।

**शब्दस्य प्रकृतशोधप्रबन्धप्रवृत्तिहेतुः**

शाब्दबोधकारणीभूताना वृत्तिज्ञानादीना च शास्त्रेपु स्वरूपविषये ऐकमत्याभावदर्शनेन चेतसि मे महान् कुतूहलः समजनि । विषयश्चायमतीव दुरूहः सामान्यबुद्धयविषय. । तत्रापि यस्य शास्त्रस्य यन्मतम्, तदपि तत्र विप्रकीर्णं पारिभाषिकशब्दजालजटिलं परपराजयमात्रफलकं बुद्धिवैशद्योन्नतशिखरद्योतकमासीत् । अतो मया तत्तदाचार्याणा तानि तानि मतानि यथामति सम्यगाकलय्य समीक्ष्य तत्र युक्तायुक्तत्वञ्च विविच्य सिद्धान्तपक्षो व्यवस्थापितोऽस्मिन् शोधप्रबन्धे । अतः परम्—

नीरक्षीरविवेकानामसूयाऽस्पृष्टचेतसाम् ।
विदुषामेव सन्तोषो निबन्धस्यास्य गौरवम् ॥

इति विदुषां पुरो विनिवेद्य विरमामि ।

**कृतज्ञताप्रकाशः**

प्रथमं तेषां विश्वविश्रुतयशसां कोविदकुमुदकलानिधीनामहर्निशं नमद्विद्वदन्तेवासिनिवहाना पदवाक्यप्रमाणपारावारीणां श्रीमता सभापतिशर्मोपाध्यायानां पादपद्मे नतिकृतज्ञतामुपहरामि, येभ्यः कमपि बोधलवमासाद्य शोधप्रबन्धममुं निबन्धुं साहसं व्यधाम् । तथा हि—

विद्यारण्यविहारिणं बुधगजे शार्दूलविक्रीडितं
शिष्यौघे कुमुदे कलानिधिमहो वाग्देवताविग्रहम् ।
विद्वद्वन्द्यपदं सभापतिगुरुं भास्वद्यशोमण्डलं
वन्दे पूर्तिमगाद् यदीयकृपया शोधप्रबन्धोऽञ्जसा ॥

प्रसङ्गेऽस्मिन् संस्कृतसमाजस्य भूरिभागधेयेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदं भूषितवतां श्रीमतां करुणापतित्रिपाठिमहाभागानां तमुपकारं विस्मतुं कथङ्कारं शक्नुयाम्, यैर्महानुभावैर्निबन्धस्यास्य साधनायाहं भूयो भूय उद्बोधितः, पदे पदे आपतितामनेकविधां बाधां सम्बाध्य समुचितेन सौविध्येन संयोजितश्च । येनेदं कार्यं पूर्तिमगात् । अतोऽहम्—

विद्याकुलख्यातयशोविभूते
स्वरूपसंकीर्तितचित्तवृत्ते ।
शोधप्रबन्धे करुणापते ते
महोपकारं नहि विस्मरामि ॥

येषा शुभाशिषा शोधप्रबन्धोऽयं प्राकाश्यं प्राप्तस्तेषां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतीनां सर्वतन्त्रस्वतन्त्राणामाचार्यश्रीबदरीनाथशुक्लमहाभागाना पादपद्मेषु नतिकुसुमाञ्जलय. सादरं समर्प्यन्ते—

वेदान्तादिसमस्तशास्त्रगहने कण्ठीरवो वादिना
न्यायग्रन्थिविभेदने सुरगुरुस्तर्कार्णवे दुस्तरे।
पोत शिष्यसभाजित कुलपतिर्दुर्भेद्ययुक्तिर्बुधां
विद्याशासनतुल्यबुद्धिबदरीनाथ· सदा स्तूयते॥

अनवद्यविद्याद्योतितान्त.करणानां समवाप्तव्याख्यानपाटवानां गभीरध्वनिरसितदिङ्मुखानामप्रतिमप्रतिभामण्डिताना नमदनेकान्तेवासिपरिवृतानां विश्वविद्यालयस्यास्य व्याकरणविभागाध्यक्षचराणा श्रीभूपेन्द्रपतित्रिपाठिमहोदयाना महान्तमुपकारं शिरसा वहामि। येषा निर्देशनेन निबन्धस्यास्य गूढतमोऽपि विषयः सारल्यमुपगतः। अतस्तान् प्रति स्वकीयां सम्भावनां विशदीकरोमि।

तथा हि—

शास्त्राभ्यासप्रथितयशसा कुन्तला दिग्वधूनां
श्वैत्यं नीताः सदसि महसा पण्डिता मण्डिताश्च।
सिंहध्वानैर्भयमुपगता दम्भिनो यस्य युक्त्या
श्रीभूपेन्द्रं विशदपथदं साधु सम्भावयामि॥

श्रुतिसारसम्प्राप्तानां साहित्यपाथोनिधिपारगाणां विनेयनिनादितदिङ्मण्डलानां प्रशासनपटूनां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलीनानां कुलसचिवानां श्रीविश्वम्भरनाथत्रिपाठिमहाशयानामपि कृतज्ञता प्रकाशयामि। यैर्हि स्वकीयैरनेकैर्महार्हैः शास्त्रीयैर्विचारैर्निबन्धोऽयं साफल्यं नीतः। अतः—

प्रशासने यस्य मतिर्निगूढा-
शिष्योपदेशे सरला सुबोधा।
प्रसन्नचित्ताय बुधाय तस्मै
विश्वम्भरायापि हि साधुवादाः॥

येषां सद्भावनया ग्रन्थोऽयं पूर्तिमगात् ते गवेषणालयनिदेशकपदमलङ्कुर्वन्त सत्कुलप्रसूता विविधविद्याविशारदा· डॉ० भागीरथप्रसादत्रिपाठिमहाभागा अनेकै. साधुवादै सत्क्रियन्ते—

शास्त्रावगाहनपटुर्व्यवहारशील
संगीतफुल्लनवकैरवकोविदोव ।
योगक्रियाक्षपितमानसमानसाधि-
र्भगीरथो विजयता मृदुहासभाष. ॥

निबन्धस्यास्य गौरववर्द्धनाय शुद्धतासम्पादनाय स्थाने स्थाने विमलविचार-निबन्धनाय येन भूयान् प्रयत्न आचरितः, व्याकरणानेकशास्त्रावगाहननिर्मलमति समासादितपाठनपाटवं छात्रप्रियं विनयान्वितं हिन्दूविश्वविद्यालयकलासङ्कायविभागा-ध्यापकपदमधितिष्ठन्तं तं श्रीजयशङ्करलालत्रिपाठिनमपि—

शब्दशास्त्राप्तनैपुण्यं साहित्यार्णवपारगम् ।
जयशङ्करलालाख्यं संयुनज्मि शुभाशिषा ॥

यस्य सत्प्रयत्नेन शोधप्रबन्धस्यास्य सम्यक् सम्पादनं समपद्यत सोऽयं प्रकाशनाधिकारिपदं सभाजयन् व्याकरणाचार्य डॉ० हरिश्चन्द्रमणित्रिपाठी भूयोभिराशीर्वचनै। सनाथीक्रियते—

शब्दागमप्राप्तपदप्रतिष्ठो
बुधै. सदानन्दितसाधुवृत्तः ।
शुभाशिषा युज्यत एव धीमान्
श्रीलो हरिश्चन्द्रमणिर्मणीव ॥

यस्य भूयसा प्रयत्नेन ग्रन्थस्यास्य मुद्रणादिदोपाः परिहृता सोऽयं श्रीपरमेश्वरपाण्डेयोऽनेकैः साधुवादैः सभाज्यते—

शब्दार्णवक्षालितशेमुषीकः
साहित्यकासारकृतावगाहः ।
पालिप्रकाशाहतमोहजालः
युङ्क्तां श्रिया 'श्रीपरमेश्वराख्यः' ॥

प्राप्तशब्दशास्त्रवैचक्षण्यमनुशासनप्रियं व्याकरणविभागीयकार्यसम्पादननिपुणं डॉ० गिरिजेशकुमारदीक्षितम् आशिषां ततिभिः संयुनज्मि, यस्य ग्रन्थस्यास्य सम्पादने महानुपकारो वर्तते—

नीत्यानिवारितविपक्षकुचक्रजालः
शब्दानुशासनविशोधितशब्ददोषः ।
प्रीत्यानुशासनरतो विरतोऽपथाद् यः
जीयात् सदा स 'गिरिजेशकुमारनामा' ॥

श्रीसुदर्शनमुद्रणालयाधिकारिणोऽपि साधुवादशतै. सम्भाव्यन्ते येषां साहाय्येन द्रुतं ग्रन्थोऽयं मुद्रितः।

ये चान्येऽत्र शोधप्रबन्धप्रकाशने कृतभूरिश्रमास्तेऽप्यनेकैः साधुवादैः संयुज्यन्ते ।

विदुषां वशंवदः

**कालिकाप्रसादशुक्लः**

# भूमिका

## १. व्याकरणशास्त्रस्य दर्शनशास्त्रत्वम्

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः[1]"
श्रुत्या–प्रत्यगात्मसाक्षात्कारस्यैव मोक्षंहेतुत्वं समर्थितम्, तादृशसाक्षात्कारसाध
वेदान्तादीनि शास्त्राण्येव दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति; न तु पदसा
साधुत्वसाधनेन शब्दसाक्षात्कारसाधकव्याकरणशास्त्रं दर्शनपदव्यपदेश्यं

इदमत्राकूतम्–येषु येषु शास्त्रपदवाच्येषु प्राधान्येनात्मविषयाः प्रतिप
सन्ति, तत्र प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विश्लेषणस्य तात्प
अध्यात्मविषय एव पर्यवस्यति, तदा तान्येव दर्शनशास्त्रपदव्यवहार्यता समुपय
पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा जागर्ति। नैवम्भूतं व्याकरण
केवलमत्र पदसाधुत्वासाधुत्वाख्यानमेव विजयत इति कथमस्य दर्शनशास्त्र
संशीतिः कदाचिद् विदुषोऽपि चेतसि मनाक् स्थानं लभेत। परन्तु श
प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वाद् दर्शनशास्त्रत्वे
शङ्कापङ्कावकाशः।

अयमाशयः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्[2]।'
सर्वम्'[3], 'आत्मैवेदं सर्वम्[4]' इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत
ब्रह्मत्वम् आत्मत्वञ्च यदा प्रतिपाद्यते, तदा 'वागेवार्थं पश्यति, वागेवार्थं
वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रवि
भुङ्क्ते[5]', 'ओमित्येतदक्षरमिदं[6] सर्वम्', 'ओमिति ब्रह्म[7]' इत्यादिश्रुतिभि
स्वरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम्।

शब्दतत्त्वाख्यं ब्रह्म प्रथमं स्वलिङ्गं त्रिमात्रमोङ्कारम्, ततोऽक्षरसमा
ततश्चतुरो वेदान् विरच्य सर्वं जगद् व्यरीरचत्। इदमेव शब्दतत्त्वाख्यं
सूक्ष्मप्रणवरूपं परब्रह्मपदेन, त्रिमात्रमोङ्कारं च अपरब्रह्मपदेन शब्दब्रह्
व्यपदिशन्ति पुराविदः। तथा च श्रुतिः' 'एतद् वै सत्यकाम परं चापरं ब्र
ङ्कारः। तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति'[8] इति।

एतेनायतनेन परब्रह्मप्राप्तिसाधनेन ओङ्कारेण एकतरं परब्रह्म अ
नेदिष्ठं ह्यालम्बनं परब्रह्मणो यदोङ्कार इति तत्तात्पर्यम्। अत एव च

---

१. बृहदा० २।४।५। २. छान्दोग्य० ६।२।१। ३. मुण्ड० २।२।११
४. छान्दोग्य ७।२५।२। ५. नृसिंह० ६।२। ६. प्रश्नोपनिषत् ५ प्र०
७. ८.

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥[१] इति स्मृतिः।

शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते। शब्दब्रह्मप्राप्त्युपायत्वं च—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञो ब्रह्मामृतमश्नुते ॥[२]

इति कारिकया शब्दसंस्कारद्वारा व्याकरणस्यावगम्यते। शब्दसंस्कारस्य च सिद्धित्वं सिद्ध्युपायत्वात्। व्यवस्थितसाधुभावेन रूपेण शब्दे संस्क्रियमाणेऽपभ्रंशोपघातापगमाद् धर्मविशेषाविर्भावे सति साधुशब्दप्रयोगज्ञानपूर्वकं तस्य शब्दब्रह्मणः प्रवृत्तितत्त्वं व्यवहारानिमित्तरूपं समस्तशब्दार्थकारणभूतं पश्यन्त्याख्यं यो जानाति स तद्द्वारा अविवृत्तं ब्रह्म प्राप्नोतीत्याशयः। एवञ्च व्याकरणस्य दर्शनशास्त्रत्वे न काचनापि विप्रतिपत्तिः।

व्याकरणदर्शनमित्यस्य कोऽर्थः? एवं प्रश्ने तद्घटकदर्शनशब्दस्यार्थः प्रथमं निर्णीयते। अयं हि दर्शनशब्दो भावसाधनः करणसाधनश्च। तत्र भावसाधनत्वे दृष्टिरित्यर्थस्तस्यावबुध्यते। करणसाधनत्वे तु दृश्यते प्रत्यक्षीक्रियते, न तु अनुमीयते, नापि शब्दजन्यबोधविषयीक्रियते अनेनेति व्युत्पत्त्या दर्शनसाधनमित्यर्थः। एवं सति यैर्यैरुपायैर्दृश्यते ते सर्वेऽपि उपाया दर्शनपदव्यपदेश्या भवितुमर्हन्ति। भावसाधनत्वे तु—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥[३]

इत्युक्त्या श्रुतिवाक्यश्रवणमन्तरा यत् किञ्चिद् ग्रथ्यमानं वस्तु दर्शनमेव नहि भवितुमर्हतीति कथंकारं दर्शनपथव्यपदिष्टाना दर्शनपदव्यवहार्यता इति चेत्, उच्यते सर्वेषामपि दर्शनानामुद्भावकाना चेतसि सैव भगवती श्रुतिः साक्षात् परम्परया वा स्वीयं कार्यं विदधती वर्तते एव। तामन्तरा तस्याश्रितः प्रकाशस्य खपुष्पायमाणत्वात्। एवं च दर्शनहेतूनां दर्शकं प्रतिपादकं वा शास्त्रं लक्षणया दर्शनपदभाग् भवेदेव, किमुत करणसाधनत्वे? तथा च व्याकरणमेव दर्शनमिति कर्मधारये सर्वव्याकरणं दर्शनमेव भविष्यति। भावसाधनत्वे षष्ठीसमासे व्याकरणस्य दर्शनमित्यर्थः। तत्रापि व्याकरणपदेन व्याख्यानोपसंख्यानादिविशिष्टं शास्त्रं व्याकरणपदेन ग्राह्यम्। तस्य दर्शनमित्यत्र कर्त्तरि षष्ठ्या समासे शास्त्रेण यद् यद् दृश्यते तत् सर्वमपि दर्शनमेव भवेत्। अधिकरणस्य सम्बन्धत्वेन विवक्षया षष्ठ्यन्तेन समासे तु व्याकरणशास्त्रे यत्परात्मनः तत्सम्बन्धिनो वा दर्शनस्य साधकम्, तदेव दर्शनं

---

१. मैत्र्यु० ६।२२।        २ वाक्य० ब्रह्म० श्लो० १३२।
३. साख्य० प्र० भा० अ० १ सू० १।

स्यात् । एवं सति उक्तासु व्युत्पत्तिषु यः कोऽपि व्याकरणसम्बन्धी विषयः, स सर्वोऽपि दर्शनपदव्यपदेश्यः सिद्ध्यति । अस्या स्थितौ पञ्चाना वृत्तीनामन्येषां वा प्रकृतिप्रत्ययसन्धिसमासकारकादीना सर्वेषा दर्शनत्वे न काचिद् बाधा पतिष्यति। किञ्च, येन केनापि वैयाकरणेन दृष्टो व्याकरणे पदार्थो व्याकरणदर्शनपदव्यपदेश्यो भवेत् । तथा चेदं शास्त्रं व्याकरणदर्शनं कथयितुं शक्यत इत्याहुः[१] ।

## २. शाब्दिकसम्मतानि प्रमाणानि

तदेवं व्याकरणस्य दर्शनशास्त्रत्वे व्यवस्थापिते प्रमाणचिन्तापादलेष्ठुका भवति । प्रमाणचर्चा हि शास्त्राणा प्रधानविषयतामादधाति, यतो हि प्रमाणादेव प्रमेयसिद्ध. । अत एव शास्त्रकारैः प्रथमं प्रमाणान्येव व्यवस्थाप्यन्ते । शाब्दिकशिरोमणिभिश्च कुत्रापि नैतत् प्रतिपादितं यत् ते. कियन्ति कीदृशानि च प्रमाणानि स्वीक्रियन्ते, प्रत्युत, तत्र तत्र पदार्थविवेचनावसरे कदाचित् तार्किकाः, कदाचिद् मीमांसका., कदाचिच्च वेदान्तिनोऽनुस्रियन्ते । अतो यद्यपि शाब्दिकसम्मतानि प्रमाणानि इयत्तया इदमाकारकत्वेन च परिच्छेत्तुं दु.शकानि, तथापि भाष्यादिपर्यालोचनेन प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्धयः प्रमाणत्वेन वैयाकरणमतेऽपि निर्धारयितुं शक्यन्ते । तथाहि, लोकव्यवहारार्थं शाब्दिकैरकामेनापि प्रत्यक्षप्रमाणस्य सार्वभौमत्वं स्वीक्रियेतेव । अन्यथा शब्दानां श्रावणप्रत्यक्षविषयत्वाभावे स्वहस्तेनैव स्वपादे कुठाराघात आपतेत् । अनुमानमन्तराऽपि अनुमानेन सिद्धाना तासां परिभाषाणां विलयापत्तिः स्यात् । वाक्यपदीयादपि अनुमानस्य प्रामाण्यं सिद्ध्यति, यतः कश्चिदपि किञ्चिदपि वस्तु नहि सर्वतोभावेन प्रेक्षितुं शक्नुयात् । एककालावच्छेदेन सर्वावयवदर्शनस्यासम्भवात् सकलविषयकं ज्ञानमानुमानिकमेव । तथा चोक्तं वाक्यपदीये—

दुर्लभं कस्यचिल्लोके सर्वावयवदर्शनम् ।<br>
कैश्चित् त्ववयवैर्दृष्टैरर्थः कृत्स्नोऽनुमीयते[२] ॥

प्रत्यक्षमाख्यानमुपदेशो गुणैश्च प्रापणमुद्देशः[३], 'ननु च प्रत्यक्षमुपलभ्यते[४]', अन्यथाजातीयकः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययोऽन्यथाजातीयक· सम्बन्धात् । राज्ञः सखा राजसखः । सम्बन्धादेतद् गन्तव्यं नूनं राजाऽस्य सखेति[५] । 'एते प्रत्यक्षं कंसं घातयन्तीति[६]' उपरि निर्दिष्टभाष्ये प्रत्यक्षस्य प्रमाणस्य स्पष्टमुक्तत्वात्, 'सम्बन्धादेतद् गन्तव्यम्[७]' इत्यनेन, कोऽसावनुमानः[८]' क्रियापृथक्त्वे च द्रव्यपृथग्-

१. व्याकरणदर्शन भू० पृ० १-२, टि० ।
२. वा० का० २ श्लो० १५८ ।
३. पा० सू० १।३।२ ।
४. पा० सू० १।२।३० ।
५. महाभा०, पा० सू० २।१।२४ ।
६. महाभा०, पा० सू० ३।१।२६ ।
७. महाभाष्य, पा० सू० १।१।६ ।
८. महाभा० पा० सू० १।३।१ ।

दर्शनमनुमानमुत्तरत्रानेकशेषभावस्य[1], धूमं दृष्ट्वा अग्निरत्रेति गम्यते' त्रिविष्टब्धकं दृष्ट्वा परिव्राजका इति[2], इत्यादिना चानुमानस्य सूचनात् स्पष्टमुक्तत्वाच्च प्रत्यक्षानुमानयोर्वैयाकरणानां पक्षपातो वर्तत एव । 'नह्यन्यदुपलभ्यते, इति भाष्यात्[3]' 'एवञ्चानुपलब्धिप्रमाणेनान्यत्वाभावनिश्चय इत्यर्थः.' इति तत्रत्यकैयटाच्चानुपलब्धिरपि प्रमाणान्तरं वैयाकरणानाम् । 'सम्बन्धिशब्दैर्वा तुल्यम्[4]' इति वार्त्तिकभाष्यादिपर्यालोचनेनार्थापत्तेरपि प्रमाणान्तरत्वं सिद्ध्यति । 'उपमानानि सामान्यवचनैः.'[5] इति सूत्रे भाष्ये—'मानं हि नाम अनिर्ज्ञातार्थमुपादीयते' अनिर्ज्ञातमर्थं ज्ञास्यामीति तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानं गौरिव गवय इति। गौर्निर्ज्ञातः, गवयो निर्ज्ञातः' इति स्पष्टत उपमानस्य मानसामीप्यप्रतिपादनात्, नोपमानस्य प्रमाणान्तरत्वमभिप्रेतं शाब्दिकानाम् ।' 'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्' इति भाष्येण शब्दाना प्रामाण्ये तु विवाद एव नास्ति। यद्यपि 'शब्दप्रमाणका वयम्[6] इति भाष्यस्वारस्याद् वाक्यपदीयपर्यालोचनाच्च[7] शब्दप्रामाण्ये एव वैयाकरणाना पक्षपात प्रतीयते, नानुमानादिषु, तथापि इतरप्रमाणापेक्षया शब्दप्रमाणस्य बलवत्त्वबोधन एव भाष्यादितात्पर्यविसानम्, न तु तेषा प्रत्याख्याने। तेषा सिद्धिप्रकारस्तु उपरिष्टात् प्रदर्शित एवेत्यधिकं जिज्ञासुभिर्व्याकरणदर्शनभूमिका द्रष्टव्या ।

इदमत्र तत्त्वम्—यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव च चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमति। अयं परिणाम एव 'वृत्ति' उच्यते। स एव प्रमाणम् । एवञ्च वैयाकरणानां प्रमाणस्यापि प्रमेयान्तःपातित्वमेव । यद्यपि ज्ञानोत्पत्तिप्रक्रियाऽत्र शास्त्रे नैव प्रतिपादितास्ति, तथापि योगभाष्ये तादृशज्ञानप्रक्रियाया एवोक्तत्वादत्र तदङ्गीकारे नास्ति काचनापि विप्रतिपत्तिः ।

## ३. अन्यशास्त्रसम्मतानि प्रमाणानि

प्रमाणप्रदर्शनप्रसङ्गेऽस्मिन्नन्यशास्त्रसम्मतप्रमाणप्रदर्शनं सहृदयान् विदुषो नोद्वेजयिष्यतीति दृढं विश्वसिमि। प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः । प्रत्यक्षानुमाने द्वे एवेति सौगता वैशेषिकाश्च। वैशेषिका शब्दमनुमानेऽन्तर्भावयन्तीति विशेषः । प्रत्यक्षानुमानोपमानशब्दाः चत्वारि प्रमाणानीति गौतमीयाः। इमान्येवार्थापत्त्या सह पञ्च प्रमाणानीति प्राभाकराः। एभिरेवानुपलब्धिं संयोज्य षट् प्रमाणानीति

१. भा० वा० पा० सू० १।४।१०८ । २. महाभा० पा० सू० ३।२।११ ।
३. पा० सू० १।१।१६ । ४. पा० सू० १।१।७१ । ५. पा० सू० २।१।५५ ।
६. महाभा० पस्प० पृ० ५५ । ७. न सोऽस्ति प्रत्ययो लोके—वा० प० १।१२३ ।

भाट्टा.। व्यवहारदशायां प्राय इमान्येवानुसरन्ति वेदान्त्येकदेशिनः। संभवैति-ह्याभ्या सह इमान्येव षट् प्रमाणानि पौराणिका मन्यन्ते।

## ४. नागेशसिद्धान्तस्य वाक्यपदीयमुपजीव्यम्

वाक्यपदीयमुपजीव्य नागेशभट्टो भाष्यादिसाहाय्येन तार्किकादिपरिशीलित-परिष्कारशैल्या व्याकरणसिद्धान्तान् मञ्जूषाया प्रतिपादितवान्। परन्तु यत्र तत्रान्यशास्त्रवासनावासितान्त करणतया वाक्यपदीयसिद्धान्तमन्यथितवानपि। यथा सर्गाद्यकालेऽनादिनिधनं सर्वग्राह्यग्राहकाकारवर्जितं पश्यन्तीवाग्रूपं शब्दब्रह्म सृज्य-मानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतमपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितं सद् नामरूपात्मकं निखिलं पप्रञ्चं प्रथमं बुद्धावकलय्य इदं करिष्यामीति संकल्पयति। ततो निजया कालाख्यया स्वातन्त्र्यशक्त्या समेतमाकाशादीनि अपञ्चीकृतानि तन्मात्रपदवाच्यान्युत्पादयति। ततो भूतादय इति शब्दब्रह्मणः सृष्टि., सृष्टेश्च शब्दब्रह्मणि लय इति भर्तृहरिमतम्। तथा चोक्तम्—

तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते[१]॥

अथ नागेशाभिमत. सृष्टिक्रमः—"प्रलये नियतकालपरिपाकाना सर्वप्राणि-कर्मणामुपभोगेन प्रक्षयाल्लीनसर्वजगत्का माया चेतने ईश्वरे लीयते। लयश्चाय-मपुन.प्रादुर्भावफलको नात्यन्तिको नाशः, उत्तरसर्गानुत्पत्तेः। नापि सर्वथा भानम्, प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति, कार्यप्रवृत्त्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलाद् भासमानाप्यभातप्रायैव। ततो परिपक्वप्राणिकर्मभिः कालवशात् प्राप्त-परिपाकः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिदंशो बिन्दुरिति। अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते। अस्माद् बिन्दो. शब्दब्रह्मापरनामधेयम्, वर्णादिविशेषरहितम्, ज्ञानप्रधानम्, सृष्ट्यु-पयोग्यवस्थाविशेषरूपम्, चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव 'ख'-'परा'-आदिशब्दैर्व्यवह्रियते—

---

१. वा० प० टी० उद्धृतम् पृ० १०।

'बिन्दोस्तस्माद् भिद्यमानाद् खो व्यक्तात्मकोऽभवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते'[१] ॥

इत्युक्तेः ।

एतत्सर्वगतमपि प्राणिना मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते । ज्ञातमर्थं विवक्षो पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दम् 'परावाग्' इत्युच्यते । तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत.[२] ॥

नागेशस्यायं सृष्टिप्रकारः प्रपञ्चसारकाशीखण्डादितान्त्रिकग्रन्थानवलम्बते । भाष्कररायकृते ललितासहस्रनामस्थद्वात्रिंशदधिकशततमश्लोकीये भाष्ये, शारदातिलके, सूतसंहिताया चायं क्रमो विस्तरेण वर्णितोऽस्ति ।

## ५. भर्तृहरिनागेशयोर्मतभेदः

वाक्यपदीयकारो व्याकरणागममनुसृत्य नित्यं शब्दब्रह्म शब्दभावेन विवृत्त सदर्थभावेन विवर्तते इति 'अनादिनिधनम्'[३] इति कारिकया प्रतिपादयन् शब्दब्रह्मण एव सर्वजगदुपादानत्वं मन्यते ।

नागेशभट्टस्तु तन्त्रशास्त्रमनुसृत्य शब्दब्रह्मणो नित्यत्वमास्थायार्थसृष्टौ तज्जन्मानुपलम्भात् यावत् सृष्टिस्थित्या व्यवहारनित्यतया वा नित्यत्वं न तु कूटस्थनित्यत्वमिति प्रतिपादयन् 'अनादि निधनम्' इति कारिकामन्यथैव व्याचष्टे । परन्तु व्याख्यानमिदम्—

इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम् ।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्[४] ॥

इति शिवदृष्टिग्रन्थेन,

नाशोत्पादासमालीढं शब्दब्रह्ममयं च तत् ।
तत्तस्य परिणामोऽयं भावग्रामः प्रतीयते[५] ॥

इति शान्तरक्षितकृततत्त्वसंग्रहेण प्रमेयप्रकरणेऽपवर्गनिरूपणप्रस्तावे 'अनादिनिधनम्' इति कारिकामुद्धृत्य तत्रानादिनिधनपदनिवेदिता पूर्वापरान्तरहिता वस्तुसत्ता नित्यत्वञ्च इति न्यायमञ्जरीग्रन्थेन च विरुद्धम् । परमप्राचीनग्रन्थेषु अनादिनिधनपदस्य स्वारसिकमर्थमपलप्यान्यथार्थकरणं नागोजिभट्टस्य तन्त्रागमेऽन्धश्रद्धां द्योतयति । नागेशः शब्दब्रह्मपरब्रह्मणोर्भेदम्, भर्तृहरिश्चाभेदं मन्यते । हरिमते

१. प्रपञ्चसा० तं० पट० १ श्लो० ४३ ।
द्र० ल० म० पृ० १४१–१४८ ।
२. वा० प० १ । १) ।
३. वा० प० १।१ ।
४. द्वि० आ० २ ।
५. तत्त्वसं० का० १२८ ।

शब्दब्रह्मण सिद्धिः परब्रह्मणः प्राप्तिरस्ति। एवञ्च शब्दब्रह्मोत्पत्तिवादस्तन्त्रागमसिद्धोऽपि न व्याकरणागमसिद्धः। एवं भर्तृहरिः प्रतिपादयति यत् 'प्रपञ्चोऽयं शब्दस्य परिणामः। आदौ जगदिदं छन्दोभ्यो व्यवर्तत' इति शास्त्रकारा वदन्ति।

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत[1]॥

"वागेव विश्वा भुवनानि जज्ञे[2], वाच इत्सर्वममृतं यच्च मर्त्यम्[3]"। इयञ्च वाग् पश्यन्ती, मध्यमा, वैखरी चेति त्रिविधैव। पश्यन्ती वागेव जगदुत्पादयति। सैव पराशब्देनाप्युच्यते, सैव च शब्दब्रह्म, सा च नित्या।

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥

नागेशभट्टः सिद्धान्तममुमेव विशदयति। परन्तु वाचश्चतुर्विधत्वं स्वीकरोति। अयमत्राभिसन्धिः—सिद्धान्तशैवानां मतम्—

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥

इति तन्त्रशास्त्रञ्चाश्रित्य मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या वैखरी वागुच्यते इति वाचश्चतुर्विधत्वं नागेशभट्टो मन्यते।

भर्तृहरेश्चेदमत्राकूतम्—पश्यन्ती मध्यमा वैखरी चेति त्रिविधैव वाक्। त्रिविधापि सा स्थूला सूक्ष्मा परा चेति भेदत्रयेण भिद्यता इति वाचो नव भेदाः सम्पद्यन्ते। वर्णादीना प्रविभागरहिता स्वरप्रधाना संगीतरूपा वाक् स्थूला पश्यन्ती। जिज्ञासारूपा सैव सूक्ष्मा पश्यन्ती। जिज्ञासाहीना संविद्रूपा परा पश्यन्ती। चर्मावनद्धे मृदङ्गादौ करघातादिना समुद्भूता ध्वनिरूपा वाक् स्थूला मध्यमा। एवं परस्परवैलक्षण्यापादनेन स्फुटीकृता वर्णरूपा वाक् स्थूला वैखरी। विवक्षारूपा सैव सूक्ष्मा। विवक्षारहिता परसंविद्रूपा सा परा इति। सगुणनिर्गुणादिभेदेन परापरभेदेन वा द्विविधतया वर्णितस्यापि ब्रह्मणो यथा एकत्वं न विरुद्धम्, तथा एकैव प्रत्यवमर्शिनी

---

१. वाक्य० का० १, १२०। २. वाक्य० का० १।१४३। ३. द्र० ल० म० पृ० १४८।

वाग् गुणभूमिमतीत्य कदाचित् पश्यन्तीति कदाचिच्च परेति संज्ञयोपवर्ण्यते इति पश्यन्त्येव परा इति स्वीकार्यम्। अत एव "इत्याहुस्ते परं ब्रह्म[१]" इति शिवदृष्टौ वैयाकरणमतानुवादावसरे पश्यन्त्येव परात्वेनोपवर्णिता। वाचा त्रित्वे सत्येव मध्यमा वागिति व्यपदेशः संगच्छते।

तन्त्रशास्त्रवासनावासितान्तःकरणो नागेशभट्टो वाक्यपदीयमुपजीव्याप्यत्र-तत्सिद्धान्तमुपेक्षमाण 'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः' सूक्तिमिमां चरितार्थयति।

> प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित्।
> स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते[२]॥

अस्याः कारिकाया हेलाराजीयं व्याख्यानमनुसृत्य नागेशेनापि शब्दार्थ-योस्तादात्म्यं स्वीकृतम्। तत्र वास्तविको भेद, आरोपितश्चाभेदः। अत एव गुडशब्दोच्चारणे माधुर्यापत्ति, अग्निशब्दोच्चारणे दाहापत्तिश्च। शब्दार्थयो-र्बौद्धत्वेऽपि वाक्यपदीयमेवानुसृतं नागेशेन—

> व्यपदेशे पदार्थानामन्या सत्तोपचारिकी।
> सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका[३]॥

शब्दार्थयो सम्बन्धसत्त्वे वाक्यपदीयस्य तृतीयकाण्डस्य 'सति प्रत्ययहेतुत्वे[४]' इति श्लोको नागेशेन शक्तिनिरूपणे प्रमाणत्वेनोद्धृतः।

अत्रेदं रहस्यम्—अर्थस्य बाह्यत्वे यावन्त आक्षेपा भर्तृहरिणोद्भाविताः, तावन्तः सर्वेऽपि नागेशेनापि आवर्तिताः, परन्तु बुद्धिसत्ताविशिष्टत्वमेव समर्थितम्। नागेशेन स्पष्टं प्रतिपादितं यत् 'वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि बौद्धम्, तयोरभेदः। न च बौद्धे दाहादिशक्तिमत्त्वम्[५]। बौद्धार्थनिरूपणे शक्यार्थोऽपि बुद्धिसत्ताविष्ट एव, न तु बाह्यसत्ताविष्टः[६]' इति प्रतिपादयता नागेशेन सर्वथा बाह्यार्थः प्रत्याख्यातः। इदमेव समर्थयमानेन तेन सर्वस्यापि जगतो मिथ्यात्वं ब्रह्मणश्च सत्यत्वं साधयितुं परमार्थसारस्य कूर्मपुराणस्य च वचनमुद्धृतम्।

> 'मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्।
> तैमिरिकचन्द्रयुगवद् भ्रान्तमखिलं जगद्रूपम्[७]।
> विप्र पृथिव्यादि चित्तस्थं न बहिस्थं कदाचन।
> स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते[८]॥

१. शिवदृष्टि पृ०। २. वा० प० का० ३ पृ० ६६।
३. व० प० का० ३, पृ० ११५। ४. व० प० ३।३।३७। ५. ल० म० पृ० ३८।
६. ल० म० पृ० २०३। ७. परमार्थसा० २२। ८. कूर्मपुराणम्।

'सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन[1]'। एवञ्च शब्दार्थौ निरूपयता नागेशेन अद्वैतवेदान्तसम्मतः 'ब्रह्म सत्यं जगन्मिथ्या[2]' इति सिद्धान्तो निरूपितः। परन्तु एवं प्रतिपादयता नागेशेन स्वपाण्डित्यप्रौढ्या शब्दशास्त्रसम्मतः सिद्धान्तोऽपहस्तितः। यत एवं व्याकरणस्यैकाङ्गित्वं समापद्यते। भगवता पतञ्जलिना व्याकरणं वेदाना दर्शनानाञ्च सर्वस्याः शाखाया अङ्गमिति प्रतिपादितम्। हरिणापि तथैव समर्थितम्। नागेशमते शब्दार्थयोः सर्वथा काल्पनिकत्वे सम्बन्धस्य नित्यत्वं शशशृङ्गायमाणं स्यात्। अस्मिन्नेव प्रकरणे तेन प्रतिपाद्यते 'पदपदार्थाद्यसत्यमेव' 'शास्त्रमप्यसत्यव्युत्पादकमेव[3]' शब्दार्थयो. सम्बन्धं निराकुर्वद्भिर्बौद्धैः स्थापितात् सिद्धान्तात् स्वस्यातिरिक्तत्वख्यापनाय जगतो व्यवहारे प्रतीति स्वीक्रियते नागेशेन प्रतिपाद्यते च। 'सत्यमिव इति' इवेन तस्यारोपितत्वात्। व्यवहारकाले तत्प्रतीते सत्यमिवेत्युक्तम्। स्वमतस्य बौद्धमतप्रवेश-निराकरणाय नागेशेन प्रतिपाद्यते यत् बौद्धैरारोपितसत्त्वमपि नाङ्गीक्रियते, आत्मनश्चानित्यत्वं स्वीक्रियते। पतञ्जलिः "उपदेशेऽजनुनासिक इति[4]" इति सूत्रे उपदेशोद्देशयोर्व्याख्याया बाह्यबौद्धयोरपि सत्त्वं स्वीकृतवान्। 'ज्ञानं प्रयोक्तुर्बाह्योऽर्थं स्वरूपं च प्रतीयते[5]' इति प्रतिपादयता भर्तृहरिणा तु शाब्दबोधे तत्त्वत्रयस्योल्लेखं कुर्वता बाह्योऽर्थ स्पष्टतयाऽङ्गीकृत.। तदेवं नागेशस्योभाभ्यामपि प्रामाणिकाभ्या-माचार्याभ्या सह विरोध। भट्टपादाभिमतान्विताऽभिधानखण्डनमपि नागेशस्य भर्तृहरिखण्डनानुसार्येव। स्फोटनिरूपणमपि वाक्यपदीयवचनानुसारि।

यद्यपि स्फोटायनऋषेरयं स्फोटवादः भर्तृहरिप्राग्वर्तिभिरनेकैर्व्याडिप्रभृति-भिराचार्यैर्व्याख्यातस्तथापि भर्तृहरिणा यथा स्पष्टीकृतस्तथा प्राक्तनैर्न कृतः। नागेशेन तु स्वप्रतिभाबलेन सर्वेऽपि नैयायिकमीमासकादयो विरोधिनाऽप्रत्याख्येयोपपत्तिभिः प्रत्याख्याताः। एवञ्च नागेशो भृशमुपकृतो भर्तृहरिणा। यदि वाक्यपदीयं नाभविष्यत् तदा नागेशभट्टस्तथा सफलो नाभविष्यत्। एवं कौण्डभट्टस्यापि महान् प्रभावो लक्ष्यते नागेशे स्फोटनिरूपणे, न केवलं कौण्डभट्टस्य पद्धतिरेवादृता, अपि तु तदुदाहृतानि प्रमाणान्यपि स्वग्रन्थे नागेशेन निःसंकोचं स्वीकृतानि। क्वचित् क्वचिच्चाविकलानि भूषणकृतो वचनान्यपि स्वग्रन्थे नागेशभट्टेनोद्ध्रियन्ते। वाक्यार्थस्यापूर्वत्वेन तत्र शक्तिग्रहो न स्यादिति परोक्तं प्रत्याचक्षाणेन नागेशेन—

अर्थे विशिष्य सम्बन्धाग्रहणं चेत् समं पदे।
लक्षणादधुना चेद् तत् पदेऽर्थेऽप्यस्तु तत्तथा[6]॥

---

१. परमार्थसा०। २. उपनि० निरालम्ब नं० २८। ३. ल० म० पृ० ३८८।
४. पा० सू० १।३।२ ५. वा० प० ३।३।१ ६. वैयाकरणभूषणसारः, श्लो० ६३।

अयं श्लोकः प्रमाणत्वेनोद्धृत.। अष्टौ स्फोटा. कौण्डभट्टेन स्वीकृताः, नागेशेनापि तथैव स्वीकृताः। समासे अपभ्रंशे च शक्तिस्वीकारे समानैव सरणी समवलोक्यते द्वयोः। धात्वर्थतिङर्थलादेशाद्यर्थनिरूपणेऽपि भूषणकारप्रदर्शित· पन्था एव स्वमतस्थापने दर्शनान्तरीयराद्धान्तप्रत्याख्यानेऽनेनादृत.। वृत्तिविवेचनादिकमपि भूषणविवेचनसमानमेव। धात्वाद्यर्थविवेचने भूषणकारपद्धतिमङ्गीकुर्वतापि नागेशभट्टेन तत्र तत्र तन्मतं प्रत्याख्याय स्वीयः पृथक् सिद्धान्तः स्थापित·।

तथाहि—'फलव्यापारयोर्धातु.'[१] इति कारिकास्थफलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातो पृथक् शक्तिरिति, 'एकवृन्तगतफलद्वयन्यायेन' पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरिति वा। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदसम्बन्धेनान्वय इति कौण्डभट्टः[२]।

नागेशस्तु 'फलविशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः। पृथक्शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्यापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकाया· पृथगुपस्थितेः सत्त्वात्[३]' इत्याह। एवं शक्तिनिरूपणे अर्थविषयकबोधजनकतात्वावच्छिन्नप्रकारता निरूपितविशेष्यतानिरूपकेश्वरेच्छारूपा, तादृशेच्छीयविशेष्यतारूपा वा शक्तिरिति नानाविधा. पक्षा अवलम्बितास्तार्किकै.। नागेशेन च, इच्छायाः विशेष्यताया वा सम्बन्धत्वस्य क्वचनाप्यदर्शनात् शाब्दबोधात् प्रथमं तथाविधस्य सम्बन्धस्यावर्तमानत्वेन कार्याव्यवहितप्राक्क्षणावच्छेदेन वर्तमानस्यैव कारणतावच्छेदकतया तार्किकाभिमतशक्ते. सम्बन्धत्वं वक्तुमशक्यमित्याद्यनेकदोषैः तेषां शक्तिलक्षणं कौण्डभट्टाभिमतं घटादिविषयकबोधजनकघटादिपदाना सामर्थ्यरूपं शक्तिस्वरूपञ्च शक्तेर्भिन्न एव सम्बन्धः शक्ते· कार्यजनकत्वनियामकत्वेन दृष्टः, यथा दीपगतप्रकाशकत्वशक्ते. कार्यजनकत्वे दीपवस्तुनोः प्रकाशकत्वशक्त्यतिरिक्तसंयोगादिसम्बन्धसत्त्व एव वस्तुप्रकाशकत्वं नान्यथा, घटपटादिगतशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्वे एवार्थबोधकत्वं नान्यथेत्यादिदोषैश्च निरस्य वाच्यवाचकभावापरपर्याया खण्डसम्बन्धरूपा शक्तिर्व्यवस्थापिता। शब्दशक्त्या बोध्योऽप्यर्थो बुद्धिस्थ एव न तु बाह्यः, 'न सत्तां पदार्थो व्यभिचरति'[४] इति 'मतुप्'[५] सूत्रे भाष्यात् सत्ताविशिष्टघटादीनामेव घटादिप्रातिपदिकार्थतया 'अस्ति' 'नास्ति' इत्यादिप्रयोगानापत्तेः, गतार्थत्वात्, सत्तया विरोधाच्च।

किञ्च, 'शशशृङ्गं नास्ति' 'बन्ध्यापुत्रो नास्ति' इत्यादिवाक्यजन्यबोधे भ्रमत्वस्य सर्वानुभवविरुद्धतया प्रातिपदिकत्वाय बौद्धार्थस्वीकार आवश्यकः।

१. वै० भू० का० २ पृ० ११। २. द्र० वै० भू०सा० पृ० १०८। ३. द्र० ल०म० पृ० ५४३। ४. म० भा० ५।२।९४। ५. पा० सू० ५।२।९४।

अत एव 'बुद्धिसिद्धं तु तदसत्'[१] इति गौतमोक्तिः सङ्गच्छते। अनया रीत्या नागेशेन बौद्धार्थत्वं साधितम्। अद्वैतमतवादिभिः 'परत्र पूर्वदृष्टाऽवभासोऽध्यासः'[२] इत्यध्यासस्वरूपं निरूप्य तदतिरिक्ताऽविद्या साधिता। तत्राध्यास एवाविद्या। 'तमेतमेवं लक्षणं पण्डिता अविद्या इति ब्रुवते'[३] इति भाष्यादध्यास-विषयकप्रश्नोत्तरवदविद्याविषयकप्रश्नोत्तरानुपलब्धेश्चेत्यादिहेतुभिरविद्याया अध्यास-रूपत्वं सिद्धान्तितम्।

अद्वैतवादिभिश्च अविद्याया अजन्यत्वं विनाशित्वञ्च स्वीकृतम्। 'एकेन विज्ञातेन सर्वं विज्ञातं भवति' इति प्रतिज्ञाभङ्गप्रसङ्गात्, ब्रह्मातिरिक्तस्याजन्यत्वा-सम्भवात्, वियदादीनामजन्यत्वे 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य'[४] इति सूत्रेण प्रतिज्ञाभङ्गापादनाच्च तन्मतं दूषितं नागेशेन। 'अजामेकाम्'[५] इत्यादिश्रुतेरविद्याया अनादिबोधकत्वपरतेव। अपरञ्च 'सदसद्विलक्षणमनिर्वचनीयम्'[६] वेदान्तिभिः स्वीकृतम्। तदपि न, तादृशपदार्थाप्रसिद्धेः। किन्तु उभयरूपमेव। तत्र सत्त्वमारोपितम् असत्त्वन्तु वास्तविकमिति न विरोधः। इत्थं तदभिमतानिर्वचनीय-ख्यातिरपि निरस्ता।

ज्ञानलक्षणप्रत्यासत्तिः नव्यनैयायिकैः स्वीकृता। नागेशेन तु अविद्यमानस्य प्रत्यासत्तित्वासम्भवात् सा प्रत्याख्याता। ज्ञानविषयत्वस्य प्रत्यासत्तित्वे तु विषयताया ज्ञानविषयोभयरूपत्वमते ज्ञाननाशे तस्यास्तत्त्वासम्भवात्[७]।

अनुव्यवसायस्य ज्ञानग्राहकत्वमप्यसङ्गतम्, ज्ञाने सति "जानामि न वा" इति संशयाननुभवात्, "घटं जानामि" इतिवत् "ज्ञानं जानामि" इत्यनुभवाभावात्, अनवस्थापाताच्च। किन्तु ज्ञानस्य स्वतःप्रकाशकत्वमेवेति नागेशेनाङ्गीकृतम्[८]। तार्किकमते संयोगस्य सम्बन्धत्वं प्रसिद्धम्। नागेशस्तु सम्बन्धस्य पदार्थयोजनामात्र-हेतुत्वात्, संयोगस्य च स्वतः पदार्थत्वात् तत् प्रत्याख्यातवान्। सम्बन्धस्य सांसर्गिकविषयतया पदबोध्यत्वमेव। केवलं षष्ठ्यादिविभक्त्या, वाक्येन वा बोध्यत्वम् इति नास्ति संयोगस्य सम्बन्धत्वम्[९]। तार्किकैः द्रव्यगुणकर्मस्वेव जातिः स्वीकृता। सा च सत्तारूपा, गोत्वादिरूपा च। "सामान्यं विशेष इति बुद्ध्यपेक्षम्"[१०] इति कणभक्षवचनात्, "समानप्रसवात्मिका जातिः[११] इति गौतमवचनाच्चानुगतप्रतीतेरेव

१. न्या० द० अध्या० ४ आह्नि० १ सू० ५०। २. वे० सू० भामती पृ० १८ प० १।
३. ल० म० पृ० २६२ तमे उद्धृतम्।
४. वे० द० अध्या० २, पा० ३ सू० ६।
५. ब्रह्मसूत्र०।३।६।
६. श्वेताश्वतरो० ४।५।
७. द्र० ल० म० पृ० २१८।
८. द्र० ल० म० पृ० ३१७।
९. द्र० ल० म० पृ० १३१२।
१०. वै० सू० अ० १ आ २ सू० ३।
११. न्या० सू० २।२।७१।

जातिसाधकत्वाज्जातेरैक्यसर्ववृत्तित्वे एव समुचिते। एकैव जातिः गवादिप्रतिनियतव्यञ्जकव्यञ्जिता तत्तज्जात्यवच्छिन्नकार्यसाधिका भवतीत्यपि साधितं नागेशेन। आकाशसमवायादेश्चोपाधिकानेकत्वात्तत्रापि जातिः सिद्धयति। एवमन्ये पदार्थाः शास्त्रान्तरे प्रसिद्धाः प्रमाणनिरपेक्षाः स्ववासनाकल्पिताः कौण्डभट्टेनानिराकृता नागेशभट्टेन प्रबलाभिर्युक्तिभि. प्रत्याख्याता इति मञ्जूषापर्यालोचनेनावगन्तव्यम्। यद्यपि महाभाष्यादिव्याकरणशास्त्राकरग्रन्थं निखिलमपि समालोड्य नागेशभट्टेन मञ्जूषा लिखिता, तथापि भर्तृहरे. कौण्डभट्टस्य च महानुपकारो लक्ष्यते नागेशे इति नास्ति शङ्कालेश·। भर्तृहरेः पदार्थजातं कौण्डभट्टस्य पदार्थनिरूपणशैली च सर्वत्र नागेशमञ्जूषाया परिलक्ष्यते।

## ६. स्फोटविचारः

नैयायिकनये परमाणोरिव, वेदान्तिमते ब्रह्मण इव च शाब्दिकसिद्धान्ते स्फोटस्य महती चर्चा विद्यते तत्र तत्राकरग्रन्थेषु। शाब्दिकाना दार्शनिकत्वप्रासादः स्फोटभित्तिमेवावलम्बते। परन्तु स्फोटवादस्य कुतः प्रारम्भो जातः? इत्यस्य समाधाने इतिवृत्तस्य पृष्ठानि मौनमेवावलम्बन्ते। परन्तु सूक्ष्मेक्षिकया पर्यालोच्यमाने 'वागेव विश्वा भुवनानि जज्ञे' 'ओमित्येतदक्षरमिदं[१] सर्वम्' 'वाचो ह वाक्[२]' इत्यादि श्रुतिरूपाणि स्फोटस्रोतांसि वेदब्राह्मणादिवारिधिषु समुपलभ्यन्ते। शाब्दिका अमुमेव सूत्रात्मकमर्थं सुगमता सरलताश्च नयन्ति। वेदब्राह्मणादिषु ग्रन्थेषु शब्दगोवागादिशब्दाः शब्दरूपेऽर्थे प्रयुज्यन्ते, न तु स्फोटशब्दरूपेऽर्थे। अतो वादत्वेन स्फोटवादस्य कदा प्रारम्भ इति प्रश्नोऽद्यापि न समाहितोऽभूत्।

"अवङ् स्फोटायनस्य[३]" इति सूत्रे स्फोटशब्दो दृष्टिगोचरीभवति। अस्य स्फोटायनशब्दस्य हरदत्तः पदमञ्जर्यां विवरणं करोति—'स्फोटोऽयनं पारायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः[४]। नागेशेनापि स्फोटवादे अन्ते स्फोटायनऋषेरेव सिद्धान्तः स्फोटवाद इति प्रतिपादितम्—

"वैयाकरणनागेशः स्फोटायनऋषेर्मतम्।
परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः[५]॥"

यास्काचार्योऽपि प्रारम्भे निरुक्ते शब्दनित्यत्वं व्यवस्थापयतामाचार्योदुम्बरायणाना मतं प्रत्याख्याय शब्दस्य नित्यत्वं व्यापकत्वमणुत्वं च स्थापितवान्। अत्र दुर्गाचार्यः—'व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च[६]।' इति स्फोटं प्रतिपादि-

१. मुण्डकोपनिषत् १।१। २. छान्दोग्यो० ६।२।२। ३. पा० सू० ६।१।१२३।
४. पदमञ्जरी, काशिका ६।१।१२३। ५. स्फोटवाद., पृ० १०२ अड्यारलायब्रेरी, मद्रास, सीरीज नं० ५५। ६. निरु० १।२।

तवान् । एवं स्फोटस्यैतिहासोऽतीव प्राचीनो वर्तते। अमुं स्फोटमुद्दिश्य विभिन्न-शास्त्रेषु विभिन्नानि मतानि शास्त्रकाराणामुपलभ्यन्ते ।

## ७ स्फोटविषयकं मीमांसकमतम्

मीमांसकाः—"अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीयाः इति भगवान् उपवर्षः[१], इति कण्ठताल्वाद्यभिघातानां श्रवणेन्द्रियविषयाणां वर्णानामेव शब्दत्वं वाचकत्वं चास्ति। प्रकरणपञ्चिकायां शालिकोऽपि...... 'कः शब्दोऽभिमतः ? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात्[२]' इति। तथा च भाष्यम् 'श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः[३]' इति। अन्यस्मिन् दिनेऽनुभूतेऽद्यानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे 'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति[४]' इति न्यायात् पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्व-पर्यवसानम्। सर्वदेशेषु तदुपलम्भाद् विभुत्वम्। लाघवाच्चैकत्वम्। आनुपूर्वीघटकम् अव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञान-विषयत्वम्। यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवा-देकत्वं तद्वद् ज्ञानानामप्येतद्विषये स्थिरत्वम्।

ननु न तावद् वर्णाना प्रत्येकमर्थबोधकत्वम् एकैकस्मादर्थप्रतीतेः। नापि समुदि-तानां क्षणविनाशिनाम् समुदायानुपपत्तेः। प्रतिवर्ण च संस्कारकल्पने गौरवापत्ति.। अतो वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति, सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते। स एव पदात्मा शब्द। एवं वाक्यस्फोटोऽपि। अप्रत्यक्षो-ऽप्ययमर्थः प्रतीतिलक्षणकायानुपपत्त्या गम्यते। न च वर्णा एवानुभूयन्ते न तदतिरिच्यमानस्वरूपं वस्तुतत्त्वमिति वाच्यम्, पदमेकं वाक्यमेकमिति चैकरूपस्यानु-भवात्। नचेयं बुद्धिः वर्णावगाहिनी, तेषां परस्परभिन्नत्वात्। नचैकत्र नानात्वैकत्वे संभवत. विरुद्धत्वात्। एकार्थविषयत्वेनैकत्वमिति चेत्, न, परस्पराश्रयात्। एकपदत्वेनैवैकार्थविषयत्वात्। तस्मान्न वर्णात्मकः शब्दः, किन्तु स्फोटरूप एवेति चेत्, न, वर्णातिरिक्तवाचककल्पनायामर्थापत्तिः प्रमाणम्, प्रत्यक्षं वा ? नाद्यः, अर्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वात्। नेतरः, तद्भावात्। नचैकं पदमित्येक-वस्त्ववगाहिनी नानावर्णेष्वनुपपद्यमाना बुद्धिरेव प्रमाणमिति वाच्यम्, वर्णेष्वप्ये-कार्थविषयत्वेन तदुपपत्तेः। अस्ति खल्वेकाभिधेयधीहेतुभावत्रयाणामपि वर्णाना-मेकस्मरणोपारूढानामश्मनामिवैका पिठरधारणे। नाप्यन्योन्याश्रयः, समधिगतैका-

---

१. मी० द० अ० १ पा० आ० ५ सू० श० भा०  २, प्रकरणपञ्चिका।
३. शाबर।  ४. श्लोकवार्तिकम्, पृ० ८३३, श्लोक ३६६।

भिधेयधीहेतुभावानां तेषां पश्चात्पदत्वावधारणात् । कारकविशेषाभिधायी हि पदशब्दः पद्यतेऽनेनेति, स च कार्यसम्बन्धज्ञाने सत्येव भवति नान्यथा । अत एकार्थविषयत्वज्ञाने सत्येव एकपदत्वज्ञानम् । यदाहुः 'अर्थैकत्वादेकं वाक्यम्[१]' इति । पदमप्यर्थैकत्वादेकम् । श्रोत्रग्राह्ये च वस्तुनि शब्दशब्दः प्रसिद्धो वर्ण एव च श्रोत्रग्राह्यो न स्फोटः । अतो नासौ शब्दशब्दवाच्य. कथमर्थप्रत्यायक. स्यात्, शब्दादेवार्थप्रतीतेः सर्वलोकसंभवात् । आशुतरविनाशिना साहित्यासंभवात् कथं गमकत्वमिति चेत्, संस्कारेणेति । यदाह भाष्यकारः—'पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक[२]' इति । व्यापारस्य चाव्यवधायकत्वात् शब्दादर्थं प्रतिपद्यामह इत्युपपद्यते । अथवा भाष्यपर्यालोचनया अन्त्यवर्णस्यैव प्रत्यायकत्वम् । एवञ्च शब्दादिष्वेकवचनमप्युपपन्नम् । तथा चोक्तम्—

> यदि वा[३] पूर्वसंस्कार इति कर्तव्यतेष्यते ।
> वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत् ॥

केचित्तु—सद्रूपान्यवर्णविषयप्रत्यक्षं पूर्वेषु चातीतेषु वर्णेषु स्मृतिरूपेति चित्रस्वरूपा बुद्धिः सर्वार्थप्रतीतिहेतुरित्याहुः । तथाचोक्तम्—

> चित्ररूपा[४] च ता बुद्धि सदसद्वर्णगोचराम् ।
> केचिदाहुर्यया वर्णे गृह्यतेऽन्त्य पदे पदे ॥
> अन्त्यवर्णेऽपि विज्ञाते पूर्वसंस्कारकारितम् ।
> स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥

स्फोटवादिनापि शब्दतत्त्वं कल्पयित्वा पुन संस्कारकल्पनावश्यं कर्तव्या । ध्वनयो हि प्रत्येकं स्फोटमभिव्यञ्जन्ति साहित्यञ्च क्रमवर्तिना संस्कारद्वारमेवेति तुल्यं तत्कल्पनम् । प्रत्युत, स्फोटवादिन. स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने निरवयवत्वमित्यधिका कल्पना स्यात् । तस्मात् वर्णा एव वाचका., न तदतिरिक्तः स्फोटो युक्तिसिद्ध इत्याहुः ।

गुरुमतानुयायिनस्तु—"वर्णेष्वेव[५] प्रत्यक्षेष्वर्थप्रतीत्युपपत्तये कश्चित् विशेष आश्रयितुं युक्तः, सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य । उपलम्भस्य च क्षणिकतया स्वतो विशेषयितुमशक्यत्वात् पूर्वपूर्ववर्णोपलम्भजन्यः संस्कार एवाश्रीयते । स च

---

१. जै० सू० २।१।४६ । २. शाबरभाष्यम् १।१।५,

३. श्लोकवार्तिकम् १३०, पृ० ५७२ मद्रास युनिवर्सिटी-संस्कृत सीरीज,

४. श्लोकवार्तिकम् १११, ११२ पृ० ४६८ ।

५. प्रकरणपञ्चिकाप्रमाणपारायण पृ० ८१, चौखम्बा सीरीज १७ ।

स्मृतिहेतो. संस्काराद् भिन्न एव। स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलम्, नार्थान्तरमित्यर्थविषया :प्रतीतिस्ततोऽनुपपन्नेति तदतिरेकिण: संस्कारस्याश्रयणम्" इति संस्कारद्वयं स्वीकर्तव्यम्। एक. स्मृतिहेतु', अर्थप्रतीतिहेतुरपर., येन क्रमेण विषया अनुभूता: तेनैव क्रमेण स्मर्यन्त इति तु प्रमाणविरहितम्, एकैकेशो दृष्टेष्वपि घटेषु 'सहस्रं घटा:' इति समुदितस्य स्मरणात्। तदित्थं वर्णा एव शब्द:। ते च व्यापका नित्याश्च। सर्वोऽपि ककार एक एव। पदवाक्यानामपि वर्णसमुदायरूपत्वं प्रत्येकमेकत्वं नित्यत्वं विभुत्वञ्च। पदादीनामनित्यत्वे 'औत्पत्तिकस्तु[1] शब्दस्यार्थेन सम्बन्ध:' इति तत्सम्बन्धनित्यत्वप्रतिपादकं व्याकुप्येत। तथा चोक्तम्—

> 'तस्मान्न[2] पदधर्मोऽस्ति विनाशी कश्चिदीदृश:।
> तेन नित्‍ं पदं सिद्धं वर्णनित्यत्ववादिनाम्॥ इति।

शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धवेद्यत्वात्, घटवदित्यनुमानेन चैषां वर्णानां द्रव्यत्वम्। शब्दो ध्वन्यात्मको वर्णात्मकश्च। वर्णव्यञ्जको ध्वनिर्वायुगुण:। वर्णस्तु द्रव्यं ध्वनिव्यङ्ग्यमित्याहु.।

पातञ्जलयोगास्तु, पदस्फोटस्य वाक्यस्फोटस्य च वाचकत्वं स्वीकुर्वन्त: वर्णाना वाचकत्वं प्रत्याचक्षते।

अयमभिसन्धि:—तेषामर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परसम्भवद्भिरशक्य. कर्त्तुम्। न च संस्कारद्वाराऽग्नेयादीनामिव परमापूर्वं वा स्वर्गं जनयितव्ये नियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति साम्प्रतम्, विकल्पासहत्वात्। स खल्वयं वर्णानुभवजन्य: संस्कार स्मृतिप्रसवहेतुरन्यो वाऽऽग्नेयादिजन्य इवापूर्वाभिधानो, न तावदनन्तर:, कल्पनागौरवापत्ते। स एव तावददृष्टपूर्व: कल्पनीयस्तस्य च क्रमवद्भिवर्णानुभवैरेकस्य जन्यत्वं न संभवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेऽतिगौरवम्। न चैष ज्ञापकहेत्वङ्गतामनुभवतीति। न खलु सम्बन्धोऽर्थप्रत्यायनाङ्गतामुपैति। स्मृतिफलप्रसवानुमितस्तु संस्कार: स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते, अन्यथा यत्किञ्चिदेवैकैकमनुभूय सर्व. सर्वं जानीयादिति। न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णा. समधिगतसहभावा वाचका इति साम्प्रतम्, क्रमाक्रमविपरीतक्रमानुभूताना तत्र विशेषेणार्थधीजननप्रसङ्गात्। नचैतत्स्मरणज्ञानं पूर्वानुभववर्तिनी परापरता गोचरयितुमर्हति। तस्माद् वर्णेभ्योऽसम्भवन्नर्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति, नचैष पदेऽपि प्रसङ्ग:, तद्धि प्रत्येकमेव प्रयत्नभेदभिन्ना

१. मीमासासूत्रम् १।१

२. श्लोकवार्तिकम् १००८।७ श्लोक ३०५, चौखम्बा स० सीरीज ३।

ध्वनयो व्यञ्जयन्त. परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरणनिष्पन्ना: सदृशा सन्तोऽन्योऽन्यविसदृशे. पदे. पदमेक सदृशमापादयन्त: प्रतियोगिभेदेन तत्तत्सादृश्याना भेदात् तदुपधानादेकमप्यनवयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति। यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति न परमार्थत.। सादृश्य.पधानभेदकल्पिता भागा एव निर्भागस्य पदस्य वर्णा., तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवालम्बते। अतो गोपदस्फोटभेदस्यैकस्य गकारभाग: 'गौ:' इत्यादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्योकारेण विशिष्टो निर्धारयति, एवमोकारोऽपि भाग: शोचिरादिपदसदृशतया न शक्तो निर्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्धारयति। असहभाविनामपि च संस्कारद्वारेणास्ति सहभाव इति विशेषणविशेष्यभावोपपत्ति:। इति।

## ८. स्फोटविषयकं वेदान्तिमतम्

वर्णानामेव वाचकत्वं स्वीकुर्वन्ति, तेपा मते स्फोटाभावात्। इदं तेपामभिप्रेतं यदि वर्णाना वाचकत्वं न संभवेत्, स्फोटश्चानुभवपद्धतिमध्यासीत्, तदैव वर्णातिरिक्त: स्फोटोऽभ्युपेयेत। वर्णानामवाचकत्वं क्षणिकत्वेनाशक्यसंगतिग्रहत्वात् व्यस्तसमस्तप्रकारद्वयाभावाद् वा वर्णाना क्षणिकत्वे मानाभावेन प्रथम. कल्पस्तावन्निरस्त:। ननु वर्णाना प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धमिति चेत्, न, प्रत्यभिज्ञायमानत्वात्। नचासत्यप्येकत्वे ज्वालादिवत् सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति साम्प्रतम्, सादृश्यनिबन्धत्वमस्य बलवद्बाधकोपनिपाताद् वा स्थीयते, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद् वा। नचेदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न गादिव्यक्तिविषयम्, तासां प्रतिनरं भेदोपलम्भात्। अत एव शब्दभेदोपलम्भाद् वक्तृभेद उन्नीयते, सोमशर्माधीते न विष्णुशर्मेति युक्तम्। यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभव. परीक्ष्यताम्। यथा कालाक्षीं च स्वस्तिमती चेक्षमाणस्य व्यक्तिभेदप्रथाया सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति, किं वा यथा गोत्वमाजानत एकं भिन्नदेशपरिणामसंस्थानव्यक्त्युपधानभेदाद् भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव तथा गव्यक्तिराजानत एकापि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथत इति भवन्त एव विदाङ्कुर्वन्तु।

तत्र गव्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयास:, स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन। सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य: पिपीलिका: पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णा. पदबुद्धिमारोपयन्ति। अतो जारा राजा कपि: पिक इत्यादौ पदविशेषप्रतिपत्तौ नास्ति काचनापि विप्रतिपत्ति:। वृद्धव्यवहारे चेमे वर्णा: क्रमाद्यनुगृहीता

गृहीतार्थविशेषसम्बन्धा. सन्त: स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना।

स्फोटवादिनस्तु, दृष्टहानिरदृष्टकल्पना च कर्तव्या भवति। वर्णाश्चेमे क्रमेण गृह्यमाणा: स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अतो वर्णा एव वाचका नित्या विभवश्चेति।

अत्रेदं विचारणीयम्—स्वसिद्धान्तभङ्गभिया वर्णाना नित्यत्वं सापेक्षमेव स्वीकार्यमिति वस्तुतो वर्णानामनित्यत्वमेव सृष्टिप्रलयमध्ये विनाशित्वाभावरूपमेव तत्। एवञ्च सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंसप्रागभावादिकल्पनाया गले पतितत्वाल्लाघवं शशशृङ्गायमाणमेव। किञ्च गकारादिषु गत्वादिजातेरभावेन गकारादिज्ञानस्य निर्विकल्पकात्मकत्वेन प्रत्यक्षत्वानापत्ति.। ध्वनिगतगवादिभान-स्वीकारे तु तदभाववति तत्प्रकारकज्ञानत्वेन भ्रमत्वापत्तिर्दुर्वारा। किञ्च गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्वस्वीकर्तुस्तव गकारतो घकारादिभेदस्य स्वत: सिद्धतया स्फोटखण्डनाय प्रवृत्तेन त्वया वर्णैकत्वरूपमूलधनमप्य-पहारितम्।

तस्माद् ध्वनिभेदा एव वर्णा:, न तु ध्वन्यतिरिक्ता नित्या:। क्वचिद् भाष्ये 'वर्णा नित्या:' इत्युक्तिस्तु स्फोटपरा। वर्णानामनित्यत्वे च तत्र वाचकत्वस्य तु दुरुपपादतया तदतिरिक्तस्फोटकल्पना वेदान्तिनोऽपि स्वीकार्या। वैयाकरणनये तु स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनिगतधर्माणामध्यस्तत्वाद् ब्रह्मणि प्रपञ्चाध्यासे भिन्नभिन्नरूपेण तत्प्रतीतिरिव वर्णभेदप्रतीतिर्नानुपपन्ना। न च त्वन्मतेऽपि स्फोटस्य ब्रह्मत्वेन निर्धर्मिकतया तत्र गत्वादिप्रकारकप्रतीतेर्भ्रमत्वं दुर्वारमेवेति वाच्यम्, तुरीयदशाया भ्रमत्वेऽपि तव ब्रह्मण एव प्रपञ्चरूपेण प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्यत्वात्। एवञ्च मीमांसकादीनां स्फोटवादखण्डनं शाब्दिकनयानवगमावजृम्भणमात्रम्।

## ९. स्फोटविषयकं सांख्यमतम्

प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकं पदं स्फोट इति योगैरभ्युपगम्यते, कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव। स च शब्दविशेष: पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स शब्दोऽप्रामाणिक:, कुत.? प्रतीत्यप्रतीतिभ्याम्। स स्फोटाख्य: शब्द: किं प्रतीयते, न वा? आद्ये, येन

वर्णसमुदायेनानुपूर्वीविशिष्टेन सोऽभिव्यज्यते । तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन ? अन्त्ये त्वज्ञातस्य स्फोटस्य नार्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पना । 'स एवायं गकारः' इति प्रत्यभिज्ञाबलाद् वर्णनित्यत्वं न युक्तम् 'उत्पन्नो गकारः' इत्यादिप्रत्ययेनानित्यत्वसिद्धेः । प्रत्यभिज्ञा च तज्जातीयताविषयिणी । अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तिरित्याहुः ।

## १०. स्फोटविषयकं नैयायिकमतम्

पदानामेव वाचकत्वम् । वर्णाना समूह. पदम्, पदानां समूहो वाक्यम् । वर्णाश्चानित्याः । ननु वर्णानामनित्यत्वे सोऽयं ककार इति प्रत्यभिज्ञाया उपपत्तिर्न स्यादिति चेन्न, सोऽयं धान्यराशिरितिवज्जातिनिबन्धना, सादृश्यनिबन्धना वा प्रत्यभिज्ञेति वक्तुं शक्यत्वेनादोषात् । ननु तथापि क्रमोत्पन्नविनष्टाना वर्णाना सहभावाभावात् तत्समूहस्य पदस्य पदसमूहस्य वाक्यस्य च विलयापत्तिरिति चेत्, न, संस्कारद्वारा तदुपपादयितुं शक्यत्वात् । यथा क्रमोत्पन्ना अपि प्रत्येकग्रासाः समुदितास्तृप्तिमुत्पादयन्ति, तथा क्रमवर्तिनोऽपि वर्णाः समुदिता एवार्थाभिधायिनो भवन्ति । न तावदनुमानमहिम्ना स्फोटस्वरूपमुपपादयितुं पार्यते, परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणेनार्थप्रतीतेर्घटमानत्वात् । नापि प्रत्यक्षतः, वर्णानामेव प्रत्यक्षत्वादित्याहुः । अधिकं जयन्तभट्टकृताया न्यायमञ्जार्या द्रष्टव्यम् ।

## ११. वैयाकरणमतम्

स्फोट एव वाचको न तु वर्णाः, स्फोटानुभवानन्तरं विदितमंगतेरर्थधीसमुत्पादात् । न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति, गौरित्येकं पदम्, गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सार्वजनीनत्वात् । न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम् । नाप्यौपाधिकः । उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा ? न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति । तथा सति धवखदिरपलाशा इति न जातु स्यात् । नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात् । तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः, साहित्यात् तद्धेतुत्वम्, तद्धेतुत्वाच्च साहित्यमिति । तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति । तञ्च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात् । अपि तु रत्नतत्त्वज्ञानवद् यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि

चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम् । नापि प्राचाम्, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात् । अन्त्यस्य चेतसः केवलस्याजनकत्वात् । न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरमिति युक्तम्, व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वाद् अर्थधियस्तत्र प्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न पुनरस्फुटं इति न समः समाधिः । तस्मान्नित्यः स्फोट एव वाचकः, न वर्णाः । अस्य च स्फोटस्योपाधिभेदादष्टौ भेदा वर्णपदवाक्यरूपरूषितस्य भानाद् वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटश्चेति त्रयः । अत्रैव जातिव्यक्तिभेदेन वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति त्रयः । पदवाक्ययोः सखण्डाखण्डत्वभेदात् सखण्डपदस्फोटः, सखण्डवाक्यस्फोटश्चेति द्वौ । एवं संकलनयाऽष्टौ स्फोटा इति नागेशादयः ।

**श्रीरामाज्ञापाण्डेयास्तु**

व्याकरणदर्शनभूमिकायां षोडश स्फोटानाहुः । तथाहि—अस्यां स्थितौ वाक्यार्थज्ञानामस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात् । नापि 'पचति' इत्यादौ पदस्फोटव्यवहारः । तथा चायं विभागो नहि युक्तियुक्तः । अत एव नागेशभट्टो नहि अष्टौ स्फोटान् मञ्जूषाया निरदिक्षत् । किन्तु केवलमान्तरबाह्यभेदेन द्वौ स्फोटौ प्रदर्श्य बाह्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत् । तथा च व्यवहारदृष्ट्या बाह्यस्फोटप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरेवास्माभिरवलम्बनीया । तथाहि—'व्यक्तिः पदार्थः' इति व्याडिमते व्यक्तिस्फोटः । जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोटः, इत्येवंरूपेण द्वौ स्फोटावभ्युपगन्तव्यौ । यदि चावान्तरस्फोटप्रतिपादने आग्रहस्तर्हि कल्पितानि पदानि कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः । एवं सति ( १ ) प्रकृतिस्फोटः, ( २ ) प्रत्ययस्फोटः, ( ३ ) प्रकृतिजातिस्फोटः, ( ४ ) प्रत्ययजातिस्फोटः, ( ५ ) पदस्फोटः, ( ६ ) पदजातिस्फोटः, ( ७ ) वाक्यस्फोटः, ( ८ ) वाक्यजातिस्फोटः, ( ९ ) अखण्डपदस्फोटः, ( १० ) अखण्डपदजातिस्फोटः, ( ११ ) अखण्डवाक्यस्फोट, ( १२ ) अखण्डवाक्यजातिस्फोट इति द्वादश स्फोटा भविष्यन्ति । तत्तदवयवविवक्षाऽविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाकल्पनाभ्यां सर्वेषां कृते एते द्वादश स्फोटा युक्तियुक्ता भवेयुः । एतदेव विचार्य मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयत् ।

यच्च भट्टनागेशो लघुमञ्जूषायाम्[१] 'तत्र प्रकृतिप्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनात्—इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यय-

१. पृ० ४५७ ।

योर्वाचकत्वमित्येवंरूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तव.' इत्याद्यं-वोचत्, तद् वक्ष्यमाणभाष्यविरोधाद्धेयमेव।

वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते, प्रत्याहाराह्निके 'ऐ औच'[1] सूत्रोपरि 'अथवोभयतः स्फोटमात्रं निर्दिश्यते' इति भाष्योक्त्या शुद्धेषु ऋकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटावधिकौ तत्र सन्निवेश्याविति चतुर्दशस्फोटाः सम्पन्ना.। प्रकृतिप्रत्ययविषयेऽपि अखण्डसखण्डभेदेन द्वयोरपरयोरपि सम्मेलने षोडश स्फोटा. सम्पद्यन्ते। एते सर्वेऽपि स्फोटा नित्याकाशसदृशनित्यस्फोटमूलकवर्णपदवाक्यकल्पनया कल्पिता एव मन्तव्याः। स्फोटं विहाय पदवाक्यकल्पनायाः खपुष्पायमाणत्वात्। यद्यपि सूत्रे वार्त्तिके भाष्ये वा सृष्टिक्रमो नोक्तः, तथापि श्रुतिप्रामाण्याद् वक्ष्यमाणनिरुक्तसंदर्भाच्च सोऽभ्युपगम्यते इत्याहु.।[2]

## १९. वृत्तिपदार्थविचारः

प्राक् प्रतिपादितः स्फोट एव वृत्त्याश्रयत्वेन शाब्दिकै. स्वीक्रियते। यद्यपि वृत्तिशब्दोऽनेकत्रानेकेष्वर्थेषु व्यवह्रियमाणो दृश्यते। तथाहि व्याकरणे—'कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय.'[3]। प्रायो दर्शनेषु यथा 'तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथाऽन्तःकरणमपि चक्षुरादिद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमति। स एव परिणामो 'वृत्ति.'[4] इत्युच्यते। कुत्रचित् सूत्राणा व्याख्यानेऽपि वृत्तिशब्दः प्रयुज्यते। व्यवहारेऽपि वृत्तिशब्दो भूरि भूरि व्यवह्रियते, तथाप्यत्र शब्दस्य तस्मिन् सामर्थ्यरूपे व्यापारे वृत्तिशब्दप्रयोगोऽभिमतः, येन ज्ञातेनार्था झटिति बुद्धिमधिरोहन्ति। अयञ्च व्यापारः सम्बन्धपदेनाभिधीयते।

इदमत्राकूतम्—अथ श्रुतिमन्तःसङ्ख्यातीतान् शब्दान् प्रतिदिनं शृण्वन्ति, परन्तु सम्यक् श्रुता अपि समे शब्दाः प्रत्येकं नैव सर्वानर्थान् बोधयन्ति, अपि तु केचनैव काञ्चिदेव क्वचनैव। यथा साधु श्रुतादपि घटशब्दात् कम्बुग्रीवादि-मदर्थव्यक्तेरेवावगमो भवति, न तु प्रवाहस्य नापि पटस्येति घटशब्दस्य कम्बुग्रीवादि-मदर्थेन कश्चन सम्बन्धो वर्तते, न प्रवाहेण नापि पटेनान्यथा तावपि प्रबोधयेत्।

१. म० भा० मा० सू० ४। १. व्याक० द० भू०। २. ल० सि० कौ०, पृ० २८६।
३. ल० म०, पृ० २६८।

एवञ्च शब्दार्थयोः परस्परं कश्चन सम्बन्धो वाच्यः, येन शब्दः सम्बद्धमेवार्थं प्रकाशयति नासम्बद्धं प्रदीपवदिति कल्प्यते। परन्तु एवं सति शब्दानां समवायेनाकाशेन सम्बद्धत्वात् 'शब्दाश्रयत्वमाकाशत्वम्' इति नयाद् घटादिपदेन एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति आकाशस्यापि बोधः स्यात्। स च नेष्टः, तादृशस्य बोधस्याननुभवादिति पदपदार्थयोः समवायादिविलक्षणः कश्चन सम्बन्धः कल्प्यः। स च ज्ञात एवापेक्ष्यते, नाज्ञातः। अन्यथाऽज्ञातेऽपि तस्मिन्नर्थबोधः स्यात्। अयमेव सम्बन्धो वृत्तिपदेन शब्दव्यापारादिपदेन चोच्यते। एवञ्च शाब्दबोधौपयिकः, सम्बन्धः, अर्थप्रतियोगिकः, पदानुयोगिकः, पदप्रतियोगिकोऽर्थानुयोगिको वा सम्बन्धो वृत्तिः। अथवा वृत्तिपदव्यवहार्यत्वं वृत्तित्वमिति। येन शब्दव्यापारेण झटित्यर्थबोधो भवति सोऽभिधाख्यव्यापार इत्युच्यते। भट्टलोल्लटादयोऽभिधारूपामेकविधामेव वृत्तिं मन्वते, तयैव सर्वविधस्याप्यर्थस्य बोधो भवति।

तेषामयमभिप्रायः—यथा बलवता प्रेरित एक एव इषुरेकेनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदम्, मर्मभेदं प्राणहरणं च विधत्ते, तथा सुकविप्रयुक्त एक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थोपस्थितिमन्वयबोधं व्यङ्ग्यप्रतीतिं च विधत्ते। अतो नास्ति वाच्यत्वादन्योऽर्थस्तेषामिति। तथा चोक्तं काव्यप्रकाशे—'सोयमिषोरिव दीर्घदीर्घतरो व्यापारः'[1] इति। कतिपये विद्वासः 'गङ्गायां घोषः' इत्यादौ भगीरथखातावच्छिन्नार्थं प्रत्याय्य विरतव्यापाराया अभिधाया गतेरभावात् तीरबोधो न स्यादिति शब्देऽभिधाख्यव्यापारादन्यमपि लक्षणाख्यव्यापारं मन्वते। तेष्वेकतमे नैयायिकाः।

ते चाभिधां संकेतमपि प्रतिपादयन्ति। तथा चोक्तं शक्तिवादे 'संकेतो लक्षणा चार्थे पदवृत्तिः[2]' इति। एवञ्च तत्तत्पदेन जायमानेऽर्थबोधे तत्तत्पदवृत्तेर्ज्ञानात् पदार्थोपस्थितिरन्वयव्यतिरेकाभ्यां कारणमिति वृत्तिज्ञानाभावे श्रुतोऽपि शब्दो नार्थबोधं जनयति। घटपदादेश्चाकाशादौ वृत्तेरभावाद् नैव तद्विषयको बोधः। अत एव वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते।

गौतमोऽप्याह—"सहचरणस्थान-तादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणबालकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेऽपि

---

१ का० प्र० ५, पृ० २५५।

२. शक्तिवाद०, पृ० ३।

तदुपचार:[1]" तस्य भाव:-तद्धर्म , तदभावेऽपि तदुपचार:—तच्छब्दव्यवहार: । स च तद्धर्मारोपेण । आरोपनिमित्तानि च सहचरणादीनि[2] इति ।

## १३. तार्किकमतेन शक्तिस्वरूपविचार:

वृत्तिर्द्विधा—संकेतलक्षणाऽन्यतररूपेति । तथा चोक्तं शक्तिवादे 'संकेतो लक्षणा चार्थे पदवृत्ति.[3]" इति । एवञ्च तत्तत्पदेन जायमानेऽर्थबोधे तत्तत्पदवृत्ते-र्वृत्तेर्ज्ञानात् पदार्थोपस्थितिरन्वयव्यतिरेकाभ्या कारणमिति वृत्तिज्ञानाभावे श्रुतोऽपि शब्दो नार्थबोधं जनयति । घटपदादेश्चाकाशादौ वृत्तेरेवाभावाद् नैव तद्विषयको बोध । अत एव वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते । तत्र 'अस्माच्छब्दा-दयमर्थो बोद्धव्य:' इत्यत्र समीपवर्तिबोधकेनेदमोच्चारणकर्मीभूतं परामृश्यते, तस्या-भेदसम्बन्धेन शब्देऽन्वय , शब्दपदोत्तरपञ्चम्या जन्यत्वमर्थ , तत्र शब्दस्य निरूपि-तत्वसम्बन्धेनान्वय:, जन्यत्वस्य च बोद्धव्यपदघटकबुध्धात्वर्थे बोधे स्वरूपसम्बन्धे-नान्वय:, बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वय:, तस्याश्च स्वरूपसम्बन्धेनार्थेऽन्वय. ।

एवञ्च 'इदमभिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावानर्थ ' इदम्-पदजन्यो यो बोध·, तस्य विषयोऽर्थ इति सरलार्थे इत्यर्थविशेष्यिका, इदं पदमिममर्थं बोधयतु 'अत्रेदमर्थस्याभेदेनार्थेऽन्वय·, अर्थस्य च विषयत्वरूपामर्थे वृत्तित्वसम्बन्धे नान्वय:, विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वय· । बोधस्य च निरूपितत्वसंबन्धेन जनकत्वरूप आख्यातार्थेऽन्वय., जनकत्वस्य च स्वरूपसम्बन्धेन पदऽन्वय:, तिङन्तस्थले प्रथमान्तार्थविशेष्यकबोधस्यैव नैयायिकः स्वीकृतत्वात् । एवञ्च 'इदमर्थनिष्टविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकतावत्पदम्' इति पदविशेष्यिका वेच्छा संकेतरूपा वृत्तिः ।

तत्र आधुनिकसंकेत: परिभाषा, तथा चार्थबोधकपदं पारिभाषिकम् । यथा शास्त्रकारादिसंकेतितनदीवृद्ध्यादिपदम् । ईश्वरसंकेत: शक्ति:, तया चार्थबोधकं पदं वाचकम् यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्य:, स एव मुख्यार्थं इत्युच्यते । इति गदाधरभट्टाचार्य: ।

जगदीशतर्कालङ्कारस्तु—उभयावृत्तिधर्मविशिष्टसंकेतवती संज्ञा पारिभाषिकी, यथाऽऽकाशडित्थादि । अत्र शब्दवति आकाशे व्यक्ता नित्यसंकेतवती आकाशेति

१. न्या० द०, अध्या० २, आह्नि० २, सूत्रम् ६३ । २. न्या० भा० २।२।६३ ।
३. शक्तिवादी, पृ० ३ ।

संज्ञा। दारुमयहस्तिव्यक्तौ आधुनिकसंकेतवती डित्थेति संज्ञा। आकाशडित्थादिसंज्ञा हि द्वितयावृत्तिधर्मेणैव शब्देन दारुमयहस्तिवृत्तितद्व्यक्तित्वेन रूपेण शब्दोऽयं दारुमयहस्तिवृत्तितद्व्यक्तित्वाश्रयं प्रतिपादयति। घटत्वादिजातेरनेकवृत्तित्वाद् घटत्वादिजात्याश्रयो घटपदं न पारिभाषिकम्। आकाशादिपदस्य शब्दाश्रयत्वविरहिते केवले गगनादौ संकेतकल्पने तु पटादीनामपि पारिभाषिकत्वं स्यात्। तत्रापि पटत्वविरहिते केवले पटे संकेतस्य कल्पयितुं शक्यत्वात्। एवञ्चातिव्याप्तिः पादलेष्ठुका स्यात्। यदि पटे संकेतितमपि 'पटपदं न पटत्वजातिविशिष्टशक्तिमत्' इत्यादिनिश्चयानन्तरं पटादिपदशक्तिग्रहात् पटपदात् पटत्वजातिविशिष्टस्य पटस्याननुभवादवश्यं पटादिपदशक्तिः किञ्चिद्धर्मविशिष्टार्थनिरूपिता, न तु केवल-व्यक्तिनिरूपिता, अन्यथा तत्प्रकारकतद्धर्मिविशेष्यकनिश्चये सति तद्धर्माभावप्रकारक-तद्धर्मिविशेष्यकनिश्चयो न भवतीति सिद्धान्तात् पटपदं न पटत्वजातिविशिष्ट-शक्तिमदित्याकारकनिश्चयानन्तरं पटादिपदशक्तिग्रहात् पटपदात् पटत्वजाति-विशिष्टस्य पटस्यानुभवो न स्यात्। तव मते शक्तौ पटत्वस्य प्रकारतया निवेशनात् प्रतिबन्ध्यप्रतिबन्धकयोः समानाकारकत्वाभावादित्यवश्यं पटत्वावच्छिन्ने शक्तिरभ्युपगन्तव्येतीदमुच्यते, तर्हि तुल्ययुक्त्याऽऽकाशादिपदेऽपि कथं गर्जनिमीलिकाऽऽ-द्रियते! तत्रापि शब्दवति शक्तमप्याकाशपदं न शब्दाश्रयशक्तिमदिति बाधनिश्चय दशायामाकाशादिपदान्न शब्दाश्रयत्वेन गगनस्य प्रतीतिरिति शब्दाश्रय एवाकाशस्य शक्तिरिति विभाव्यताम्।

एवञ्च 'पटत्वाद्युपलक्षिते धर्मिण्येव, न तु पटत्वादिजातिविशिष्टे शक्ति-ग्रहस्य तादृरूप्येण=पटत्वादिना पटविषयकानुभवं प्रति हेतुत्वात् मास्तु पटादिपदस्यापि पटत्वाद्यवच्छिन्ने शक्तिः। परन्तु 'पटत्वाद्युपलक्षितव्यक्तिष्वेव' इति वदतो दीधितिकारस्यापि गेहे रजनीत्यहो विधेर्विधानवैचित्र्यम्। एकसम्बन्धेना-नेकेषु वर्तमाना ये उपाधयो धर्मास्तद्विशिष्टे संकेतवती संज्ञा त्वौपाधिकी। यथा भूतदूतादि। सा हि सचेतनावृत्तिविशेषगुणवत्त्ववार्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैव शक्तो भवति। शब्दादिकं तु सखण्डत्वेनोपाधिरपि नानुगतो द्वितयावृत्तित्वात्, अतः पारिभाषिके गगनादिपदे नातिप्रसङ्गः। नन्वेवं घटपदस्यापि नैमित्तिकत्वं न स्यात्, प्रत्युत घटत्वजातेरवयवसंयोगाविशेषवृत्तितयोपाधिकत्वं स्यादिति चेत्, इष्टापत्तिः। यदि च स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन वैजात्यवत्त्वेन शक्तं घटपदम्, तदा नैमित्तिकमेवेति न व्यवहारविरोध इत्याह।

इति नैयायिकमतेन वृत्तिविचार[1]।

---

१, शब्दशक्तिप्रकाशिका, का० २२ टीका।

भर्तृहरिपादास्तु

यस्मिन्नर्थे यन्नामाधुनिकसंकेतवत्तदेव तत्र पारिभाषिकम् । एवञ्च यादृशानुपूर्वी यादृशार्थविशेष्यककिञ्चिज्जन्यबोधविषयत्वप्रकारकानित्यसंकेतविषयताविशेषावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थे पारिभाषिकत्वमिति पर्यवसितम् । यथा पित्रादिभिः पुत्रादौ संकेतितं चैत्रादि, यथा वा शास्त्रकृद्भिः सिद्ध्यभवादौ संकेतितं पक्षतादि । यस्मिन्नर्थे जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकम् । एवञ्च यादृशानुपूर्वी यादृशार्थविशेष्यकजात्यवच्छिन्नस्वशक्तिनिरूपकतावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थनैमित्तिकत्वं पर्यवसितम् । यथा गवि गोनाम्, गवये गवयादिनाम् । यत्रार्थे यदुपाध्यवच्छिन्नशक्तिमन्नाम, तदौपाधिकम् । तथा च यादृशानुपूर्वी तादृशार्थविशेष्यकसखण्डधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थौपाधिकत्वं फलितम् । यथा काशपश्वादि ।

ननु आधुनिकसंकेतस्यापि शक्तिमत्त्वात् पारिभापिकचैत्रादिशब्दाना नैमित्तिकत्वापत्तिः, नदीवृद्ध्यादिशब्दानाञ्चौपाधिकत्वापत्तिः । इष्टापत्तौ च तेन रूपेण विभागसम्भव., मिथो विरुद्धधर्मस्यैव विभाजकतावच्छेदकत्वादिति चेत्, न, नित्यस्यैव संकेतस्य शक्तित्वाभावात् । तथा हि—

आजानिकश्चाधुनिकः संकेतो द्विविधो मतः ।
नित्य आजानिकस्तत्र या शक्तिरित्यभिधीयते ॥
कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः[1] ॥ इति ।

तत्र तयोर्मध्ये, नित्यः संकेतः—आजानिकः—नास्ति जनिरुत्पत्तिर्यस्यासौ अजनिः, अजनिरेवाजानिक. स्वार्थे इकणिति आजानिकशब्दो यौगिकः । अन्ये तु आजानिकः कालत्वव्यापक इत्यर्थः । तथा चाजानिकः शब्दः परिभाषिक इत्याहुः ।

तत्र—यौगिकसम्भवे पारिभाषिककल्पनाया अन्याय्यत्वात् । न च प्रागभावाप्रतियोगित्वे सति ध्वंसप्रतियोगित्वरूपस्य नित्यत्वस्य योगालभ्यत्वेन तद्बोधने तस्य कथं यौगिकत्वमिति वाच्यम्, प्रागभावातिरिक्तस्यानुत्पन्नवस्तुनो ध्वंसाप्रतियोगित्वनियमात् । नित्यपदस्यैवानुत्पन्नपरत्वाद् वा । न च तयोरेकार्थत्वेन पौनरुक्त्यम्, आजानिक इत्यस्याजानिकशब्दप्रतिपाद्यपरत्वात् । अत एव या शक्तिरित्यत्र यत्पदस्य नित्यसंकेतपरत्वेऽपि 'शक्तिरित्यभिधीयते' इत्यनेन शक्तिपदप्रतिपाद्यत्व-

१. शा० प्र० का० २३ ।

कथनात् न पौनरुक्त्यम्, अत एव च 'प्रजावती भ्रातृजाया श्यालाः स्युर्भ्रातरः पत्न्या.' 'सत्कृत्यालङ्कृता कन्या यो ददाति स ककुदः' इत्यादावपि न पौनरुक्त्यम् । कादाचित्कत्वम्—ध्वंसप्रतियोगित्वम् । आधुनिक –आधुनिकशब्द-प्रतिपाद्यः । स च क इत्याकाङ्क्षायामाह–शास्त्रकारादिभिरिति ।

आदिना म्लेच्छादिपरिग्रहः । यथा स्त्रीकृतेकारे नदीपदस्य, आरादिषु वृद्ध्यादिपदस्य संकेतः । कङ्गौ यवपदस्य संकेतः । न च पित्रादिसंकेतिते चैत्रादिपदे नित्यसंकेतवत्त्वे मानमस्ति, 'द्वादशेऽहनि पूर्वपूर्वप्रत्युक्तत्वापाताच्च तस्य तन्नियतत्वादित्युक्तत्वात् । चैत्रादिपदानामिव पारसीकादिशब्दाना संकेतत्वा-विशेषेऽपि न तेषां धर्मकर्मण्युपयोगः 'साधुभिर्भाषितव्यं नापभ्रंशितवै' न म्लेच्छितवै' इति श्रुत्या तत्र तन्निषेधात् । म्लेच्छितवै—म्लेच्छमात्रसंकेतितैः, खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्यैरपि संकेतिता इत्याहुः ।

## १४. शाब्दिकमतेन शक्तिस्वरूपविचारः

शब्दस्य प्रमाजनकत्वे सर्वैः शब्दैः सर्वेषां श्रोतॄणा बोधः स्यादिति शाब्दबोधं प्रति वृत्तिप्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वमवगम्यते । सा च वृत्तिः दाहं प्रति वह्न्यादिवन्न स्वरूपेण हेतुः, सर्वेषा बोधापत्तेरिति ज्ञानविषयीभूताया एव तस्याः कारणत्वमङ्गीक्रियते । वृत्तेर्लक्षणन्तु—वृत्तिपदव्यवहार्यत्वम्, अर्थपदोभयनिरूपितसम्बन्धत्वं वा । सा च वृत्तिस्त्रिधा, शक्तिर्लक्षणा व्यञ्जना च । यद्यपि लक्षणाव्यञ्जने वैयाकरणैर्न स्वीक्रियेते । तथापि लक्षणाव्यञ्जनाविषयको व्यवहारस्तेषामप्रसिद्धशक्तिपदपर्यायभ्रान्त्या, तत्र तत्र भवतीति तदनुसृत्य वृत्तिभेदत्वेनात्र लक्षणाव्यञ्जने उपात्ते । तयोस्तत्र तत्र निरूपणमपि मतान्तर-परत्वेनोन्नेयम् । तत्र शक्तिस्तावन्न ईश्वरेच्छारूपा, इच्छारूपा वा, व्यवहारात्तस्या ज्ञानस्यासंभवात् । तथाहि—वृत्तिज्ञानं व्यवहारात् जायते, यथा सर्गादौ प्रयोजक-वृद्धेन 'घटमानय' इत्युक्ते घटमानयन्तं प्रयोज्यवृद्धं पश्यता बालेनानुमीयते 'अयं प्रयोज्यवृद्धः' 'घटानयनं मत्कार्यम्' इतिज्ञानवान्, घटानयनविषयक-चेष्टावत्त्वात्, ततः 'प्रयोज्यवृद्धज्ञानम्' 'घटमानय' इति वाक्यजन्यम्, तद्वाक्यश्रवणा-व्यवहितोत्तरमेव तत्प्रवृत्ते' इत्यनुमानेन ज्ञानजनकत्वं वाक्ये निश्चीयते । तत आवापोद्वापाभ्यामन्वयव्यतिरेकेण पदादिष्वपि पदार्थविषयकबोधजनकत्वं निर्धार्यते । तच्च पदे वाक्ये वा बोधजनकत्वं बोधकारणीभूतपदवाक्ययोरर्थेन सह सम्बन्धाभावे नोपपद्यते, विषयेण सह सम्बद्धानामेव प्रमाणाना चक्षुरादीनां ज्ञानोत्पादकत्वदर्शनात् । नहि घटेन सह सम्बन्धं विनैव चक्षुरादि ज्ञानं जनयति ।

एवञ्च कारणत्वान्यथानुपपत्त्या कल्प्यमानः शक्तिरूपः कारणसम्बन्धो ज्ञानरूपकार्योत्पत्तेः प्रागेवापेक्ष्यते। तदानीञ्च नैयायिकाभिमतस्य ईश्वरेच्छारूपस्य इच्छारूपस्य वा सम्बन्धस्यासिद्धत्वेन ज्ञाताया एव शक्तेर्बोधकत्वेन शक्तिग्रहासम्भवः स्यात्[1]। इदमत्राकूतम्—शाब्दबोधात् प्राक् तत्कारणीभूतं शक्तिज्ञानमपेक्षितम्। बोधजननात् प्राक् 'बोधजनकत्वाभाववदिदं पदम्' इति निश्चयसत्त्वेन 'तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन' इदं पदमेतदर्थविषयक-बोधजनकत्वावत् इत्यादिस्वरूपस्य बोधजनकत्वघटितेच्छात्मकस्य शक्तिपदार्थस्य ज्ञानमसम्भाव्यमेवेति तत्त्वम्।

किञ्च ईश्वरेच्छाया ईश्वरज्ञानस्य वा शक्तित्वमित्यत्रैकतरपक्षपातियुक्तेरभावात्, उभयस्वीकारे तार्किका गौरवपराहता भवेयुः। जानाति, इच्छति, ततो यतते, इति क्रमदर्शने तु प्रत्युत ज्ञानस्य शक्तित्वे प्राथम्यमेव विनिगमकम्।

अथ च 'दण्डात् घटो जायताम्' इत्यादीच्छाविषयत्वमेव दण्डादौ घटादिकारणत्वं स्यात्। तथा चेच्छातिरिक्तलोकप्रसिद्धस्य कारणत्वरूपधर्मस्य विलयः स्यात्। यदि तु दण्डादौ स्वरूपसती शक्तिः कार्योत्पादिका, शब्दनिष्ठा तु ज्ञातैवेति वैलक्षण्यदर्शनात् तत्रातिरिक्तशक्तिस्वीकारे न किञ्चिद् बाधकमित्युच्यते, तदा तु यथा प्रत्यक्षस्थले संयोगसमवायादिसन्निकर्षेण घटादिना सम्बद्धानामेव चक्षुरादीनां प्रत्यक्षप्रमाजनकत्वं न तु जनकत्वघटितेच्छारूपसम्बन्धेन वा, तथा शब्दस्यापि प्रमाणत्वेन तदतिरिक्तसम्बन्धेनार्थेन सह सम्बद्धस्यैव शाब्दज्ञानजनकत्वमुचितम्। अन्यथा 'पर्वतो वह्निमान् धूमात्' इत्याद्यनुमितिस्थलेऽपि हेतुसाध्ययोः 'धूमज्ञानजन्यज्ञानविषयो वह्निर्भवतु' इतीच्छाविषयत्वेन वह्निविषयकबोधजनकत्वरूपेण वा सम्बन्धेन निर्वाहे हेतुसाध्ययोर्नैयायिकाभिमतव्याप्तिरूपसम्बन्धोच्छेदापत्तिः[2]।

तस्मात् पदपदार्थयोर्बोधजनकत्वं तद्घटितेच्छादिरूपश्च सम्बन्धो नोचितः। किन्तु वाच्यवाचकपदव्यवहार्यं निरुक्तेच्छादिभिन्नं पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः। तत्र वाचकत्वं वाच्यत्वञ्च न क्रमेण बोधजनकत्वरूपं बोधविषयरूपञ्च किन्त्वखण्डोपाधिरूपं पदार्थान्तरम्[3]। अन्यथा पूर्वोक्तदोषापत्तिः वज्रलेपायेत। स च वाच्यवाचकभावः शब्दार्थोभयनिष्ठ एव। तथाविधशक्तिज्ञापकम् 'योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः' इत्याकारकमितरेतराध्यासमूलं तादात्म्यम्[4]।

---

१. द्र० ल० म० पृ० १७।
२. द्र० ल० म० पृ० १७।
३ द्र० ल० म० पृ० २३।
४. द्र० ल० म० पृ० २५।

तदेव संकेतः। तस्यापि पदवृत्तिशक्तिज्ञापकत्वाच्छक्तिरिति व्यवहारः। पाणिन्यादि-स्मार्तसंकेतस्यैव वाचकतानियामकत्वं नत्वाधुनिकस्य। एवञ्चाधुनिकसंकेतस्थले द्वादशेह्नि क्रियमाणनामस्थले च लक्षणेति मञ्जूषाकाराः।

प्राचीनवैयाकरणास्तु—बोधजनकतां शक्तिमाहुः। यथा चोक्तं भूषणे—

'इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[1] ॥'

इन्द्रियाणां चक्षुरादीनाम्, स्वविषयेषु—चाक्षुषेषु घटादिषु, यथाऽनादिर्योग्यता—तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः' इति। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम् इति।

मीमांसकाः शक्तिं—पदार्थान्तरमाहुः[2]।

आलङ्कारिकास्तु—संकेतसहकारिणी शक्तिः। संकेतस्तु शब्दार्थयोः प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्धः, 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति प्रवर्तकोपदेशो वा। स च शब्दे स्थितो ज्ञातः सन् अर्थं विषयीकरोति। अयं संकेतोऽर्थस्थितं पुरुषाज्ञानमुत्सार्य ज्ञातृत्वं जनयति। तत्र शब्दवत्तत्र गता क्रियापि करणम्, प्रदीपस्य कारणत्वे सति तत्प्रभावत्। सैव शक्तिरित्याचक्षते[3]।

रसगङ्गाधरकारस्तु—'शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा' इत्याह[4]।

## १५. वैयाकरणमतेन लक्षणाविचारः

शाब्दिका लक्षणां लक्षणशब्देन न मन्यन्ते, वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवात्। अत एवेयं जघन्या वृत्तिः। 'गङ्गायां घोषः' इत्यत्र गङ्गादिपदे शक्तिद्वयम्। भगीरथखातावच्छिन्नार्थनिरूपिता प्रथमा शक्तिः। सामीप्यसम्बन्धावच्छिन्नतटत्वा-

---

१. वैभू० शक्तिनिर्णय, ३७ कारि०। २. द्र० शक्तिवाद पृ० १८६।

३. त्रिवेणिका श० प्र० पृ० ६ भारती० सा० वि० वाराणसी सन् १९५७।

४. र० गं० द्वि० आ० पृ० १३४।

वच्छिन्नार्थनिरूपिता शक्तिर्द्वितीया । एवञ्च लक्षणया प्रतिपिपादयिषितस्याप्रसिद्ध-शक्त्यैव बोधनिर्वाहे कोऽभिनिवेशो लक्षणाया प्रेक्षावताम् । आलङ्कारिकेष्वपि केचन लक्षणाया अन्यत्रान्तर्भावं विदधति । तथा हि वामन.—'सादृश्याल्लक्षणा वक्रोक्तिः[1]' रत्नाकरस्तु रूपकेन्तर्भावयति—'सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकम्[2] ।'

## १६. आलङ्कारिकमतेन लक्षणाविचारः

शक्यसम्बन्धसहकारिणी वृत्तिर्लक्षणा । सा च शब्दव्यापारत्वाच्छब्दनिष्ठा मुख्यार्थबाधे सति तत्सम्बन्धिनमर्थं विपयीकरोति । सम्बन्धश्च मुख्यार्थे प्राधान्येन वर्तमानोऽपि लक्ष्यार्थमाश्रयति । शक्यसम्बन्धो यद्यपि शब्देऽपि वर्तते तथापि लक्षणा-यामप्रयोजकः । यद्यपि 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ति' इत्यादौ न मुख्यार्थस्य बाध., तथापि वक्तृतात्पर्यविषयवाक्यार्थबोधाभावोऽभिप्रेत. । आद्ये उपघातकत्वेनेव मुख्यार्थस्यान्वयो न तु काकत्वेन । अन्त्ये चैकसार्थप्रवृत्तत्वेनैव मुख्यार्थस्यान्वयो न तु छत्रित्वेनेति नाव्याप्ति । यत्र तु काकमात्रे तात्पर्यं तत्र नैव लक्षणा । एतेन तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, नत्वन्वयानुपपत्तिरिति सूचितम् । यद्यपि 'यष्टीः प्रवेशय', गङ्गाया घोष., इत्यादावुभयापेक्षादर्शनात् विनिगमनाविरहः, तथापि 'गङ्गाया घोष' इत्यत्र वक्तृतात्पर्याभावे घोषपदे एव, मीने लक्षणा किन्न स्यात् ? कुतश्च गङ्गापदेऽपि स्वार्थसम्बन्धिनौकादौ न लक्षणा । तावताप्यन्वयानु-पपत्तिशान्तेः । अतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजमित्याहुरालङ्कारिका. ।

यद्यप्यलङ्कारग्रन्थेषु मूले लक्षणाया बीजत्वेन तात्पर्यानुपपत्त्यादेः प्रायेणोल्लेखो नास्ति तथापि प्रदीपादिटीकापर्यालोचनेन तात्पर्यानुपपत्तेरेव बीजत्वस्यालङ्कार-शास्त्राभिप्रेतत्वात् । साक्षात्सम्बन्धे सत्येव लक्षणेति न नियम. । प्रत्यक्षे संयुक्त—समवायादिव परम्परासम्बन्धस्यापि लक्षितलक्षणादावुपयोगदर्शनात् । तथा च लक्षितेन लक्षणया गृहीतेन भ्रमरादिशब्देन द्विरेफादेः षट्पदपिण्डादौ लक्षणा लक्षितलक्षणेत्युच्यते । तत्र द्विरेफशब्दो द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या यौगिको न तु योगरूढो भ्रमरशब्दपरतया प्रयोगादर्शनात् । तेन निर्झरगुर्जरनिर्जरादि-सकलरेफद्वयान्वितशब्दसाधारणवाची न तु केवलभ्रमरपरः । तत्र सामान्यविशेष-भावसम्बन्धेन भ्रमरशब्दो लाक्षणिकः । यथा—'मुनिमभिमुखतां निनीषवो याः[3]' इत्यत्र मुनिशब्दो नृपतिमुनौ लाक्षणिक. । 'नृपतिमुनिपरिग्रहेण सा भूः' इति

---

१. ४।३।८ २. द्र० रस गङ्गाधर पृ० १२५, निर्णयसागर प्रे० ।

३. द्र० ल० भ० पृ० १२८ ।

प्रयोगदर्शनात्। अथ वाच्यवाचकभावेन लक्षणया भेदारोपात् भ्रमरशब्दलक्षित-षट्पदे द्विरेफशब्दस्योक्तरीत्या लक्षितलक्षणा। तत्र सम्बन्धद्वयसम्भवात् स्ववाच्य-रेफद्वयघटितपदवाच्यत्वादिरूपः परम्परासम्बन्धः।

## १७. नैयायिकमतेन लक्षणाविचारः

शक्यसम्बन्धो लक्षणा। तत्र तात्पर्यानुपपत्तिरेव बीजम्। वाक्ये तु शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति। यत्र 'गभीराया नद्यां घोषः' इत्युक्तम्, तत्र नदीपदस्य नदीतीरे लक्षणा, गभीरपदार्थस्य नद्या सहाभेदेनान्वयः, क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। यदि तत्रैकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदं तात्पर्यग्राहकम्।

## १८. मीमांसकमतेन लक्षणाविचारः

स्वबोध्यसम्बन्धो लक्षणा[1]। 'गङ्गायां घोषः' इत्यादौ गङ्गापदबोध्यस्य प्रवाहस्य सम्बन्धस्तीरे इति तत्र लक्षणा। गम्भीरायां नद्यामिति वाक्यस्य बोध्या गम्भीराभिन्ना नदी, तत्सम्बन्धस्तीरे इति वाक्येऽपि लक्षणा। एवं समासात्मके चित्रगुरिति वाक्येऽपि चित्रगुपदस्यावयवशक्त्या चित्राभिन्ना गौः स्वबोध्या। स्वजन्यबोधविषयस्यैव स्वबोध्यत्वात् तत्सम्बन्धस्य स्वामिनि सत्त्वा-दित्याहुः।

## १९. आलङ्कारिकमतेन व्यञ्जनाविचारः

मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धा-प्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना[2]। मुख्यार्थस्य—शक्यार्थस्य, बाधः—परस्परसम्बन्धनिरूपकाणां पदार्थानां तात्पर्य-विषयीभूतसम्बन्धेनैकपदार्थेऽपरपदार्थाभावः, तन्निरपेक्षो यो बोधस्तज्जनकः। अस्य 'संस्कारविशेषः' इत्यत्रान्वयः। मुख्यार्थेन सम्बद्धासम्बद्धौ यौ अर्थौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य सः। वक्त्रादेर्वैशिष्ट्यम्—वैलक्षण्यम्, अन्यव्यावृत्तो धर्म इत्यर्थः। तस्य यज्ज्ञानं, तच्च प्रतिभा च ते आदिनी यस्य निपुणताघटितसमूहस्य, तेनोद्बुद्धो यः संस्कारविशेषः स व्यञ्जना। एवञ्च वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वं फलितम्। प्रतिभा च वक्त्रादिवैशिष्ट्यसहकारेण जन्मान्तरीयतद्धीजनकत्वप्रकारक-

---

१. ल० म० पृ० ११८। २. ल० म० पृ० १३३।

ज्ञानजन्यसंस्कारोद्‌बोधजबुद्धिरूपा, वासनाविशेषरूपेति यावत्। सैव 'नवनवोन्मेष-शालिनी' इत्युच्यते । एवञ्च शक्तिरेतज्जन्मानुभूतैव बोधजनिका व्यञ्जना तु जन्मातरगृहीतापीति निष्कर्षः।

## २०. शाब्दिकमतेन व्यञ्जनाविचारः

शाब्दिका व्यञ्जनामप्येकां तृतीयां वृत्तिमभ्युपगच्छन्ति । तथा चोक्तं नागेशेन — 'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारण-प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्‌बुद्धः संस्कारविशेषो व्यञ्जना'[१] इति। अत एव निपाताना द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वञ्च 'क्वचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम्' इति वैयाकरणानामपि तत्स्वीकार आवश्यक.। एषा च शब्दतदर्थपदपदैकदेशवर्णरचना-चेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्ट्यादिज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः[१]।

शाब्दिकैः सा स्मृतैकैव त्रिविधापि स्वरादिवत्।
अभिधा लक्षणा व्यक्तिरित्याख्यात्रितयं मतम् ॥[२]

त्रिविधा वृत्तिरेकैव वैलक्षण्येऽपि वस्तुतः।
इत्याहु. शाब्दिकास्तेषां भिन्नत्वे गौरवाद्भयम् ॥[३]

यथैक एव स्वरो ह्रस्वदीर्घप्लुतभेदेन त्रिविधो भवति तथा शक्तिरेव शब्द-वृत्तिरभिधालक्षणाव्यञ्जनाभेदेन त्रिविधा भवति। वृत्तीनां भेदे गौरवमस्ति। इति तट्टीका।

'अत्र वैयाकरणाः—शक्तिरेव शब्दवृत्तिः, तस्याश्च प्रसिद्ध्यप्रसिद्धिभ्यां शक्तिलक्षणाव्यपदेशः, व्यञ्जना तु तत्रान्तर्भवति दीर्घव्यापारादिति[४]'। एवञ्च शाब्दिका व्यञ्जनावृत्तिं नाभ्युपगच्छन्तीति वैयाकरणमतमभ्यूह्य प्रत्याख्यात-माशाधरभट्टेन कोविदानन्दे त्रिवेणिकायाञ्च। तस्यायं भावः स्यात् यत् भाष्यादिप्राचीनतमेष्वाकरग्रन्थेषु क्वचिदपि व्यञ्जनाविषयको विशिष्टो विचारो नोपलभ्यते। टीकादिग्रन्थेषु च 'वृत्तिश्च शक्तिलक्षणाऽन्यतररूपा[५]'

१. वैया० सि० ल० म० पृ० १३३। २. कोविदानन्दे पृ० १ श्लो० ४२।
३. कोविदानन्दे पृ० २६ श्लो० १९। ४. त्रिवेणिका पृ० ३७-३७।
५. मनो० श० टिप्पणम् पृ० २५, पा० सू०-१-२-४५।

इत्येव लिखितम्, न तु व्यञ्जनाभिप्रायेण 'अन्यतमरूपा' इति । लक्ष्यार्थस्य माणवकादेर्नियतोपस्थितिकत्वाभावेन सिंहादिपदरूपप्रातिपदिकार्थत्वाभावशङ्कां मनसि निधाय 'अन्वयानुपपत्तिपूर्विका लक्षणा पदे[१] एव' इत्येव शेखरकारेणोक्तम्, न तु व्यञ्जनास्थलेऽपि शङ्कासमाधाने समुद्भाविते। व्यञ्जना-स्वीकारे तु तत्रापि नियतोपस्थितिकत्वाभावे तयोरुद्भावनमवश्यं कर्तव्यमासीत्।

यद्यपि स्फोटवादे ये श्रद्दधते, तैरवश्यं व्यञ्जनाङ्गीकर्तव्या। अन्यथा सकलशाब्दिकाभिमता तस्य व्यङ्ग्यता नैव सिद्धा भवेत्। अत एव नागेशभट्टेन व्यञ्जनास्वरूपं प्रदर्श्योक्तम्—'अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता । द्योतकत्वञ्च क्वचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वमिति वैयाकरणानामपि तत्स्वीकार आवश्यकः[२]' इति । तथापि तार्किकेषु शाश्वतिक-विरोधाना शाब्दिकाना तार्किकमतप्रत्याख्यानमात्रफलको व्यञ्जनासमर्थनप्रयासः भवेत् । अन्यथा लक्षणायाः प्रत्याख्याने—'जघन्यवृत्तिकल्पनाया अन्याय्यत्वात्, वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवात्, सति तात्पर्ये 'सर्वे सर्वार्थवाचकाः' इति भाष्याल्लक्षणाया अभावाच्च[३]' इत्यादयो यावन्तो हेतवो नागेशेन प्रदर्शितास्ते सर्वेऽपि व्यञ्जना कथं न विरुन्ध्युः ।

व्यञ्जनाया यावानर्थो व्यङ्ग्यो भवति, तावान् सर्वोऽप्यप्रसिद्धशक्त्या व्यक्तो भविष्यति । व्यञ्जनावृत्तौ श्रद्धामावहतामालङ्कारिकाणां मते सहृदयैरेव व्यङ्ग्योऽ-र्थोऽवगम्यते, तादृशोऽर्थोऽप्रसिद्धशक्त्या वैयाकरणैर्भोत्स्यते, किं व्यञ्जनया ? तथा चोक्तं नागेशेन 'शक्तिर्द्विधा, प्रसिद्धा, अप्रसिद्धा च । आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्, सहृदयहृदयमात्रवेद्यात्वम् प्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रसिद्धेति किमनुपपन्नम्। ननु सर्वे सर्वार्थवाचका इति ब्रूषे चेत्, तर्हि घटपटात् घटप्रत्ययः किन्न स्यादिति चेत्, न; सति तात्पर्ये इत्युक्तत्वात् तात्पर्याभावादिति गृहाण। तात्पर्यञ्चात्रैश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदा-दिभिर्लब्धमिति सर्वं सुरूढम्' इति[४] ।

एवञ्च यथा लक्षणास्थले तात्पर्यवशादप्रसिद्धया शक्त्यैवेष्टार्थस्य लाभस्तथा व्यञ्जनास्थलेऽपि वक्त्रादिवैशिष्ट्यसहकारेणाप्रसिद्धशक्त्यैवेष्टार्थलाभो भविष्यति, किं व्यञ्जनयाः ? यदि हर्यादिभिर्निपातानां द्योतकत्वस्वीकारात्, स्फोटस्य व्यङ्ग्यत्व-स्वीकाराच्च शाब्दिकैर्द्योतकतारूपा व्यञ्जना स्वीक्रियते, तर्हि प्रादीनां द्योतकत्वाङ्गीकारान्नैयायिकैरपि सा स्वीकर्तव्या भवेत्, न च तै. स्वीक्रियते।

---

१. लघुशब्देन्दु शे० पृ० ५१८, पा० सू० २-३-४६ ।

२. वै० सि० ल० म० पृ० १३३। ३. पर० ल० म० लक्षणानि० पृ० ६२ ।

४. परमल० म० ल० नि० पृ० ६३ ।

यद्यन्यदेव व्यञ्जकत्वं तेषा तर्हि शाब्दिकानामपि तद् अन्यदेव भवतु, किं लक्षणा-भेदेनाधिकतास्वीकारगौरवेण। एवञ्च शाब्दिकानां व्यञ्जनायामनास्था प्रतीयते।

परमलघुमञ्जूषा नागेशस्य कृतिर्नास्ति। वैयाकरणसिद्धान्तमञ्जूषाया यस्य सिद्धान्तस्य यया परिपाट्या प्रतिपादनमस्ति तस्य प्रतिपादनाय समादृता सा परिपाटी परमलघुमञ्जूषायां न दृश्यते। पदार्थानां तत्र तत्र विपर्यासोऽपि विलोक्यते। लक्षणाप्रत्याख्याने यावान् सन्नाहः परमलघुमञ्जूषाया निभाल्यते न तावान् तत्र। एवमनेके विचारभेदा अपि दृश्यन्ते द्वयोर्ग्रन्थयोरिति कथं तदाधारेण व्यञ्जना न स्वीक्रियते वैयाकरणैरिति निश्चेतुं शक्यत इत्यपि विदुषा प्रवादः। एवं सत्यपि आशाधरभट्टस्य युक्तयोऽप्युपेक्षितुं प्रेक्षावद्भिर्न पार्यन्ते। अत्रत्यं रहस्यं मत्सरशून्यैः शाब्दिकशार्दूलैः प्रणिहितचेतोभिश्चिन्तनीयम्।

**कालिकाप्रसादशुक्लः**
आचार्यः—व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**वाराणस्याम्**
अनन्तचतुर्दशी, सं० २०३६,
( ५. ९. १९७९ ख्रो० बुधवासरे )

# वैयाकरणानामन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः

[ प्रथमोऽध्यायः ]

## शक्तिविचारः

### १. शब्दस्य सम्बद्धार्थप्रतिपादकत्वम्

अथ श्रुतिमन्तः संख्यातीतान् शब्दान् प्रतिदिनं शृण्वन्ति, परन्तु साधु श्रुता अपि ते समे शब्दा नैव सर्वानर्थान् बोधयन्ति, अपि तु केचनैव काश्चिदेव। यथा साधु श्रुतादपि घटशब्दात् कम्बुग्रीवादिमदर्थव्यक्तेरेवावगमो भवति, न तु प्रवाहस्य, नापि पटस्येति घटशब्दस्य कम्बुग्रीवादिमदर्थेनैव कश्चन सम्बन्धो वर्तते, न प्रवाहेण, नापि पटेन, अन्यथा तावपि प्रबोधयेत्। एवञ्च शब्दार्थयोः कश्चन सम्बन्धो वाच्यः, येन शब्दः सम्बद्धमेवार्थं प्रकाशयति, नासम्बद्धं प्रदीपवदिति कल्प्यते।

### २. वृत्तेः सामान्यलक्षणम्

पूर्वोक्तोऽयमेव सम्बन्धो वृत्तिपदेन शब्दव्यापारादिपदेन चोच्यते। एवञ्च शाब्दबोधौपयिकोऽर्थप्रतियोगिकः पदानुयोगिकः, पदप्रतियोगिकः, अर्थानुयोगिको वा सम्बन्धो वृत्तिः। अथवा वृत्तिपदव्यवहार्या वृत्तिरिति वृत्तिसामान्यलक्षणम्।

परन्त्वेवं सति शब्दानां समवायसम्बन्धेनाकाशेन सम्बद्धत्वाद् घटादिपदेन 'एकसम्बन्धिज्ञानमपरसम्बधिनं स्मारयति' इत्याकाशस्यापि बोधः स्यात्। स च नेष्टः, तादृशस्य बोधस्याननुभवादिति 'तद्विषयकशाब्दबोधं प्रति तत्पदनिष्ठवृत्तिप्रयोज्यतद्विषयकोपस्थितेरन्वयव्यतिरेकाभ्या कारणत्वमवगम्यते। आकाशस्य च घटादिपदाद् वृत्त्याऽनुपस्थितत्वेन न तद्विषयको बोधो भवति।

### ३. वृत्तिज्ञानस्यैवार्थबोधजनकत्वम्

स च सम्बन्धो दाहं प्रति वह्न्यादिवन्न स्वरूपेणार्थबोधं प्रति हेतुः, किन्तु ज्ञात एव। अन्यथा सर्वेषा श्रोतृणा सर्वेभ्यः शब्देभ्यः सर्वत्रैव बोधः प्रसज्येत, नानुभूतचरं तथा।

## ४. वृत्तिज्ञानप्रक्रिया

वृत्तिज्ञानं व्यवहारादुपदेशाच्च जायते। यथा गुरुणा शिष्य उक्तः 'पुस्तकमानय' इति। तत्रैव पार्श्वे कश्चन तटस्थो बालस्तिष्ठति। ततश्च पुस्तकमानयन्तं तं प्रेक्षमाणेन बालेनानुमितं यत् 'शिष्यस्य चेष्टा पुस्तकानयनविषयकप्रवृत्तिजन्या, चेष्टात्वात्, मदीयचेष्टावत्' इति चेष्टाकारणीभूता प्रवृत्तिमनुमाय, अस्य प्रवृत्तिः 'पुस्तकानयनं मत्कार्यम्' इति ज्ञानजन्या मदीयस्तन्यपानादिविषयकप्रवृत्तिवदिति प्रवृत्तिकारणं कार्यताज्ञानमनुमाय, पुस्तकानयनकार्यताज्ञानं किञ्चित्कारणजन्यम्, कादाचित्कत्वात्, घटादिवदिति सामान्यरूपेण कारणमनुमीयते। पुनश्चास्य कार्यताज्ञानं गुरुवाक्यजन्यम्, तदन्वयव्यतिरेकानुविधायित्वात्। यो यदन्वयव्यतिरेकानुविधायी स तज्जन्यः। दण्डान्वयव्यतिरेकानुविधायी घटो यथा दण्डजन्यः तथा 'पुस्तकमानय' इति वाक्यान्वयव्यतिरेकानुविधायि कार्यताज्ञानं तद्वाक्यजन्यमिति वाक्यं कारणत्वेन निश्चीयते।

ततश्च 'लेखनीमानय' इत्युक्ते लेखन्यानयनं दृश्यते न पुस्तकानयनमित्यन्वयव्यतिरेकाभ्यां पदमपि तत्तदर्थबोधे कारणमित्युक्तरीत्याऽनुमीयते। तथा च पदवाक्ययोस्तदर्थेन कश्चन सम्बन्धो वाच्यः, विना सम्बन्धं तदप्रतीतेः।

## ५. शब्दस्य नित्यत्वे प्रमाणानि

स च सम्बन्धो नित्यः, पदस्य तदर्थस्य च नित्यत्वेन तयोः सम्बन्धस्यापि नित्यत्वात्। तथा चोक्तं वार्त्तिककृता—'सिद्धे शब्दार्थसम्बन्धे'[१] इति।

### (क) भाष्यकारमतम्

अत्र महाभाष्यकारः—सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशम्[२] इत्यादावविनाशि-देशान्तरप्राप्तिरहितेषु पदार्थेषु सिद्धशब्दस्य प्रयोगादुक्तवार्त्तिके नित्यपर्यायः सिद्धशब्दः। यद्यपि 'सिद्धः सूपः, सिद्धः ओदनः, सिद्धा यवागूः' इत्यादौ सूपौदनयवागूनामपि विशेषणत्वाद् नायं नित्यपर्यायः सिद्धशब्द इति वक्तुं शक्यते, तथापि व्याडिकृते लक्षश्लोकसंख्यात्मके संग्रहनामके[३] ग्रन्थे "किं कार्यः शब्दोऽथ सिद्धः?" इति पक्षद्वयविचारावसरे कार्यप्रतिपक्षार्थाभिधायित्वेन सिद्धशब्दः समुपस्थापित इति समानतन्त्रत्वादिहापि नित्यपर्यायवाचिन एव ग्रहणं भवति।

अथ च 'अब्भक्षः'=अप एव भक्षयति, वायुभक्षः=वायुमेव भक्षयति' इत्यादीनामेवकारमन्तराप्यवधारणवाक्यानां दर्शनादिहापि सिद्धस्यैव ग्रहणम् न साध्यस्य[४] इति। व्यवहारादपि सिद्धशब्दस्य नित्यपर्यायत्वं निश्चेतुं शक्यते।

---

१. पस्पशाह्निकम् १।१।१। २. पस्पशा० १।१।१।

३. व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः। ४. पस्पशा० १।१।१।

किञ्च 'देवदत्त.' इत्यत्र देवस्य, 'सत्यभामा' इत्यत्र सत्यस्य च पूर्वपदस्य 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्य.'[1] इति वार्त्तिकेन यथा लोपो भवति, तथेहाप्यत्यन्तपदलोपेन :'अत्यन्तसिद्धः सिद्ध.' इत्यर्थेन नित्यपर्यायः सिद्धशब्द इति पर्यवस्यति।

अथवा वृद्धव्यवहारादपि पदार्थसम्बन्धाना नित्यत्वं सग्रहादौ व्यवस्थापित-मिति व्याख्यानतोऽत्रापि[2] सिद्धशब्दो नित्यपर्यायो ग्रहीष्यते। 'मङ्गलादीनि हि शास्त्राणि अध्ययनस्याविच्छेदाद् वर्द्धन्ते, श्रोतृणा परेरपराजयाद् वीरपुरुषाणि, शास्त्रानुष्ठाने धर्मोपचयादायुर्वर्द्धनादायुष्मत्पुरुषाणि च भवन्ति, अध्येतारश्च निर्वृत्ताध्ययना भवेयु.' इति माङ्गलिक आचार्यो महत. शास्त्रौघस्य मङ्गलार्थं प्रयत्नप्रतिपादनीयनित्यरूपार्थकं सिद्धशब्दमादौ प्रयुक्तवान्, न च निरस्तसन्देहं नित्यशब्दम्।

अथ च 'नित्यप्रहसित' 'नित्यप्रजल्पित.'[3] इत्यादिप्रयोगदर्शनान्नित्यशब्दो बाहुल्येऽपि वर्तते, नावश्यं कूटस्थेष्वविचालिषु भावेषु इति प्रयुक्तेऽपि नित्यशब्दे नित्यार्थप्रतीतये व्याख्यानस्यावश्यकापेक्षणीयतया मङ्गलार्थः सिद्धशब्द आदितः प्रयुक्तो वर्णितश्च नित्यपर्यायवाचित्वेन। अतो वार्त्तिककृता सिद्धशब्द एवोपात्तः, न नित्यशब्दः[4]।

## (ख) जात्यादिपदाभिधेयत्वे वार्त्तिकार्थविचारः

'सिद्धे शब्देऽर्थे सम्बन्धे च' इत्याकारको विग्रह· 'आकृतिः पदार्थ' इति पक्षमाश्रित्य क्रियते, न तु 'द्रव्यं पदार्थ.' इति पक्षम्, यतो ह्याकृतिर्नित्या द्रव्यञ्चानित्यम्। द्रव्ये च पदार्थे 'सिद्धे शब्देऽर्थसम्बन्धे च' इत्याकारको विग्रहः स्यात्। नित्यो ह्यर्थवतामर्थैरभिसम्बन्ध·।

अथवा 'सिद्धे शब्देऽर्थे सम्बन्धे च' इति विग्रहो द्रव्य एव पदार्थे न्याय्य·, यतो द्रव्यं नित्यम्, आकृतिरनित्येति। एवं हि दृश्यते लोके मृत्तिकैव संस्थान-विशेषवती पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिका क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिका. क्रियन्ते। तथा सुवर्ण कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृति-मुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिका. क्रियन्ते। पुनरावृत्तः

---

१. पा० सू० वा० ५।३।८३ उद्द्योतः।

२. 'परि० व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणाम्' परि० शे० १।

३. पस्पशा० १।१।१। ४. म० मा० आ० १।

सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेवाकृत्युपमर्देन द्रव्यमेवावशिष्यते[1]।

आकृतावपि पदार्थे 'सिद्धे शब्देऽर्थे सम्बन्धे च' इति विग्रहो विधातुं शक्यते, यतो ह्याकृतिर्नित्या, एकस्यां घटादिव्यक्तौ विनष्टायां सा तत्रोपरतापि= अनभिव्यक्तापि न सर्वत्रोपरता भवति, किन्तु तदतिरिक्तघटादिव्यक्तावुपलभ्यत एवेति व्यक्तिनाशेऽपि तन्नाशाभावात् तस्या नित्यत्वमिति भावः। अत्राकृतिर्जातिरित्यनर्थान्तरम्।

'ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्ययोगि यत् तन्नित्यम्'[2] इत्येव नित्यस्य लक्षणं नास्ति, किन्तु यस्मिन् विहतेऽपि तद्वृत्तिधर्मो न विहन्यते, तदपि नित्यम्। आकृतावपि तत्त्वं न विहन्यत इत्याकृतिर्नित्या।

वस्तुतो व्यक्तिजात्याकृतीनां मध्ये यन्नित्यं तमेव पदार्थं मत्वैष विग्रहो विधीयते 'सिद्धे शब्देऽर्थे च'[3] इति।

अथार्थसम्बन्धस्य व्याकरणनिष्पाद्यतया नित्यत्वसम्भवेऽपि शब्दस्य व्याकरणनिष्पाद्यतया कथं नित्यत्वमिति नाशङ्कनीयम्। लोकतस्तस्य नित्यत्वसिद्धिर्भविष्यति। तथा हि—लोकाः प्रत्यर्थमुपादाय शब्दान् प्रयुञ्जते। तेषां शब्दानां निष्पत्तौ प्रयत्नं नाचरन्ति। ये च घटपटादयोऽनित्याः पदार्थास्तेषां निष्पत्तौ यत्नं विदधति। यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह— 'निष्पादय घटं कार्यमनेन करिष्यामि' इति। शब्दान् प्रयुयुक्षुर्वैयाकरणकुलं गत्वा 'शब्दान् निष्पादय प्रयोक्ष्ये'[4] इति न कथयति, बुद्ध्या वस्तु निरूप्य शब्दान् प्रयुङ्क्ते।

अयमाशयः—कार्येष्वस्तुषु अन्यथा लोकव्यवहारो दृश्यते, नित्येषु चान्यथा। शब्दसम्बन्धिप्रयोगरूपः शब्दविषयकश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वकः इति शब्दानां नित्यत्वम्। घटादयस्तु जलाहरणादिकार्यार्थिभिः कुलालनिलयादित आनीयन्ते उत्पादविनाशयुक्ताश्चोपलभ्यन्ते। तेषां व्यवहारे क्षयोपचयौ दृश्येते इति यावत्। नैवं शब्दादयः।

## ६. शब्दस्य नित्यत्वेऽपि व्याकरणस्योपयोगित्वम्

वृद्धव्यवहारादितोऽर्थमनुसन्धाय प्रत्यर्थं शब्दप्रयोगस्य सिद्धत्वेन व्याकरणशास्त्रं धर्मनियामकं भवति। अर्थात् लोकव्यवहारतः शब्दप्रयोगे सिद्धे 'अस्येयं

१. पस्पशा० १।१।१ पृ० ४६। २. म० भा० पस्पशा०, पृ० ६३।
३. म० भा० पस्पशा०, पृ० ६४। ४. म० भा० पृ० ५०।

प्रकृति, अयञ्च प्रत्ययः' इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनका न गाव्यादय इति नियम. शास्त्रेण क्रियते। दृश्यते च तथा लोकवेदयोः।

लोके तावत्—'अभक्ष्यो ग्रामकुक्कुट' 'अभक्ष्यो ग्राम्यसूकर.' इत्युच्यते। भक्ष्यञ्च क्षुत्प्रतिघातार्थमुपादीयते। शक्यञ्च बुभुक्षितेन श्वमासादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र नियम क्रियते 'इदं भक्ष्यम्, इदमभक्ष्यम्' इति।

वेदेऽपि—सत्यामपीच्छायाम् 'पयोव्रतो ब्राह्मण, यवागूव्रतो राजन्य., आमिक्षाव्रतो वैश्य·[1]' इत्युच्यते। व्रतञ्च नामाभ्यवहारार्थमुपादीयते। शक्यञ्चानेन शालिमासादीन्यपि व्रतयितुम्। तत्र नियम. क्रियते—'एवं क्रियमाणमभ्युदयकारि भवति' इति। एवमत्रापि समानायामर्थावगतौ साधुशब्देनासाधुशब्देन च शब्दशास्त्रेण धर्मनियमः क्रियते—'शब्देनैवार्थोऽभिधेय·, नापशब्देन[2]' इति। शास्त्रज्ञानपूर्वकमुच्चार्यमाणमभ्युदयकारकं भवति।

## ७. कैयटाभिमतो वार्त्तिकार्थविचारः

शब्दाश्चार्थाश्च सम्बन्धाश्चेति द्वन्द्वः। शब्दाना नित्यत्वादिमते जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा नित्यशब्दोऽभिमत। कार्यशब्दवादिनामपि मतेऽनादिव्यवहारनित्यतया शब्दस्य नित्यत्वम्। जातिपक्षेऽर्थस्य घटत्वपटत्वादेरपि च नित्यत्वम्। व्यक्तिपक्षे घटपटादिशब्दाना घटत्वाद्युपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति घटपटादेरर्थस्य नित्यता, व्यवहारनित्यतया वाऽर्थस्य नित्यत्वम्। शब्दार्थसम्बन्धस्यापि व्यवहारपरम्परयाऽनादित्वान्नित्यता[3]।

भाष्ये 'एकपदानि' इत्युक्त्वा 'अब्भक्षः' इत्यस्य पदद्वयात्मकस्योदाहरणत्वमसङ्गतमिति न भ्रमितव्यम्, 'एवशब्दप्रयोगे द्विपदमवधारणम्, द्योतकत्वेनैवशब्दस्यापेक्षणात्। यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदा तदेकपदमित्युच्यते। तत्र 'सर्व एवापो भक्षयन्ति' इत्यब्भक्षश्रुति. सामर्थ्यान्नियममवगमयति—'अप एव भक्षयन्ति' इति। अत्रापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात् सिद्धशब्दोपादानाद् नियमोऽवगम्यते 'सिद्ध एव' इति। कार्याणा तु पदार्थाना प्राक् प्रध्वंसावस्थयोरपि सत्त्वात् सिद्धता नास्तीति न ते सिद्धा एव[4] कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेश. प्रयुज्यते ? न ह्यसौ संज्ञात्वेन विनियुक्त। न चैकदेशात् स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते, प्रतीयमानस्य प्रत्यायकत्वासम्भवादुच्चार्यमाणस्यैव वाचकत्वात्। एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपा संज्ञा विनियोगकाले विनियुक्ता एव। लोपस्तु वर्णाना साधुत्वं मा भूदित्यन्वाख्यायते। इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात् सिद्धश्रुतिरुपात्ता प्रकर्ष गमयति 'अत्यन्तसिद्ध.'[5] इति।

---

१. म० भा० पस्पशा० पृ० ५१ २. म० भा० पस्पशा० पृ० ५२।
३. कै० प्रदी० पृ० ४७। ४. कै० प्रदी० पृ० ४८। ५. कै० प्रदी० पृ० ४८।

द्रव्ये पदार्थे द्रव्यस्यानित्यत्वादर्थग्रहणं सम्बन्धविशेषणार्थमुपात्तम् । नन्वनित्येऽर्थे कथं सम्बन्धस्य नित्यतेति चेत्, न, सम्बन्धस्य योग्यतारूपत्वेन, योग्यतायाश्च शब्दाश्रयत्वेन शब्दस्य च नित्यत्वेन दोषाभावात्, आकाशवत्तन्निष्ठस्य शब्दस्यापि नित्यत्वेऽपि व्यञ्जकाभावात् सर्वदोपलम्भाभाव इत्याशयात्[१] ।

असत्योपाध्यवच्छिन्नस्य ब्रह्मतत्त्वस्य द्रव्यशब्दवाच्यत्वे तु द्रव्यं नित्यमेव । उपाधिश्च कम्बुग्रीवादिमदाकारादिरूपः कम्बुग्रीवादिमदाकारादिघटत्वादिजातिरूपो वा । भाष्ये आकृतिपदेन यदि तद्व्यङ्ग्यं जातिरूपं गृह्यते, तर्हि तदप्यविद्यापरिणामित्वेन व्यञ्जकसंस्थानानित्यत्वेन चानित्यम्, यतः "आत्मैवेदं सर्वम्[२]" इति श्रुतिः प्रतिपादयति[३] ।

भाष्ये 'न क्वचिदुपरतेति कृत्वा' इत्यत्र 'उपरता' इत्यस्य 'अनभिव्यक्ता' इत्यर्थः । तेनोपरमशब्दस्य नाशवाचकत्वेन यस्य यस्मिन् काले एकत्र नाशो जात स्तस्मिन्नेव कालेऽन्यत्र तस्य सत्त्वं न स्यादिति भाष्यं व्याकुप्येतेति शङ्का नोद्भावनीया, अद्वैतेन लोके व्यवहाराभावाद्, व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वाद् न्नित्यत्वम्[४] ।

परमार्थदशायां जातेर्मिथ्यात्वेऽपि लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते 'अथवा' इत्यादिग्रन्थेन भाष्ये । तथा हि—संसर्गानित्यता, परिणामानित्यता, प्रध्वंसानित्यता चेति त्रिविधा अनित्यता भवति ।

तत्र **संसर्गानित्यता** यथा स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन लाक्षाजपाकुसुमादिपररूपभासः । लाक्षाद्यपगमे स्वरूपप्रतिभासात् रूपान्तरप्रतिभासाऽभावः ।

**परिणामानित्यता** यथा—बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः ।

**प्रध्वंसानित्यता** यथा—सर्वात्मना विनाशः ।

एतत्त्रितयाऽनित्यतानिरासेन नित्यतां प्रतिपादयितुम् 'ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यम्' इति भगवता भाष्यकारेणोक्तं प्रकृते ।

अत्र 'ध्रुवं कूटस्थम्' इति संसर्गानित्यता, । 'अविचालि' इति परिणामानित्यता, 'अनपाय' इति प्रध्वंसाऽनित्यता च परिहृता ।[५]

शशशृङ्गादिपदार्थानां स्वरूपस्यैवाभावात् कथं नित्यत्वमिति न भ्रमितव्यम्, पदार्थानां बौद्धत्वेन यदा यदा शब्द उच्चार्यते, तदा तदार्थकारा बुद्धिरुपजायत

१. कै० प्रदी० पृ० ४९ । २. छा० उ० ७।२५।२ ३. कै० प्रदी० पृ० ४९ ।
४. कै० प्रदी० पृ० ४९ । ५. कै० प्रदी० पृ० ५० ।

इति प्रवाहनित्यतयाऽर्थस्य नित्यत्वात्। बाह्यः पदार्थो न शाब्दबोधे विषयः, किन्तु बौद्धः। स च प्रवाहनित्य इति तात्पर्यम्।

## ६. नागेशाभिमतो वार्त्तिकार्थविचारः

'सिद्धे शब्दार्थसम्बन्धे'[1] इति वार्त्तिके शब्दाश्चार्थश्च सम्बन्धाश्चेति समाहारद्वन्द्वात् सप्तमी। सम्बन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव। शब्दादित्रयाणामात्यन्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देशः। पदवाक्यरूप-व्यक्तिस्फोटस्य नित्यत्वमिति कैयटाशयः। द्रव्यनित्यतावादिवेदान्तिमते जातिराविद्यको धर्मविशेषः। यद्वा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्त्यध्यस्त-रजतादिज्ञाने रजताधिष्ठानभूतानां शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम्। विशेष्यमेव च द्रव्यम्। तथा च द्रव्यस्य ब्रह्माभिन्नतया नित्यत्वं सूपपन्नमिति भावः। शब्दार्थयोर्नित्यत्वपक्षे तत्सम्बन्धस्य नित्यत्वे न किञ्चिद् बाधकम्। अनित्यत्वपक्षेऽपि सम्बन्धस्य शब्दार्थयोरिव प्रवाहनित्यतया नित्यत्वमिति कैयटाभिप्रायः। व्यक्तीनामाविद्यकत्वेन तदवच्छिन्नं ब्रह्मैव जातिरिति मतं न समीचीनम्, अनेकव्यक्तीनामाविद्यकानां कल्पने गौरवात्। 'अपागादग्नेरग्नित्वम्'[2] इति श्रुत्या जातेरेवानित्यत्वबोधनाच्च। अत एव जातेर्व्यवहार-नित्यतामाकृतेः प्रवाहनित्यतामेवाग्रे भाष्यकारो वक्ष्यति। शब्दार्थयोः संबन्धश्च शक्तिरूपं तादात्म्यमेव।

भाष्यस्थकूटस्थपदं विवृणोति—कूटम्=अयोघनः, तद्वत् तिष्ठन्ति ये तेषु, संसर्गिनाशेऽपि स्वयमनष्टेष्वित्यर्थः। अयोघनस्य नित्यत्ववारणाय भाष्ये 'अविचा-लिषु' इत्युक्तम्। भाष्ये द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम्। आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम्। एवञ्च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणम्। नित्ये रूढत्वात् 'योगाद् रूढिर्बलीयसी'[3] इति सिद्धान्तात्।

'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपः'[4] इति 'देवदत्तः सत्यभामा' इत्यादौ पूर्वोत्तरपदयोर्लोपविषयेऽपि क्वचित् पूर्वपदस्यैव, क्वचिदुत्तरपदस्यैव, क्वचिदुभयो-रिति लोकव्यवहारेण निर्णेयम्। एवं किमर्थनिरूपिता शक्तिः कस्मिन् वर्णे विद्यते कस्मिंश्च नास्तीत्यपि लोकव्यवहारादेव निर्णेयम्। माङ्गलिक आचार्य इत्यत्र मङ्गलमगर्हिताभीष्टार्थसिद्धिः, तत्प्रयोजनमस्येत्यर्थे प्राग्वतीयष्ठञ्[5]। सिद्धौ मङ्गलत्वं चाभीष्टार्थसिद्धिरूपे कार्ये तत्कारणीभूतनत्यादिरूपमङ्गलत्वोपचाराद् बोध्यम्।

---

१. म० भा० वा० १। २. छा० उ० ६।४।१। ३. म० भा० वा० १ उद्द्यो०।
४. पा० सू० का० वा० ५।३।८३। ५. पा० सू० ५।१।१८।

आभीक्ष्ण्यम् = बाहुल्यम् । 'आभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते'[१] इति कैयटे साक्षात् शब्दे अभीक्ष्ण्यासंभवात् प्रयोगद्वारा तद्ग्राह्यम् । एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोऽस्त्यन्तरसंभवेन तत्रापि सन्देह एवेति भावः । 'नित्ये शब्दार्थसम्बन्धे' इत्यस्य शब्दार्थसम्बन्धे ज्ञाते सति नित्ये = नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम् ।

नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथं केवलस्य प्रयोग इति चेत्, न, विनापि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिनित्यशब्दप्रयोगात्, "आश्चर्यमनित्ये[२]" "नित्यवीप्सयोः[३]" इत्यादौ तथादर्शनात् ।

'योग्यतालक्षणत्वात् सम्बन्धस्य' इति कैयटे योग्यता = बोधजनकत्वयोग्यता, तादात्म्यम् । एतदेवोक्तं भाष्ये—'नित्यो ह्यर्थवताम्' इति शब्दानामित्यर्थः ।

ननु तादात्म्यस्य सम्बन्धत्वे कथं तस्य नित्यत्वमिति चेत्, न, नष्टभाविवस्तुनोऽपि शब्देन बोधाद् बौद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात्, शब्दवृत्तिधर्मस्यैवार्थ-वृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च । आकाशवत् नभिष्ठ शब्दोऽपि नित्यः, व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः ।

एतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरता सूचयति । गौतमेना-प्युक्तम्—'व्यक्त्याकृतिजातयस्तु पदार्थः'[४] सर्वदेकाकारपरामर्शदर्शनेन यावद् व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः ।

अवयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि च 'यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यम्[५]' इत्यादिना नित्यत्वं साध्यते भाष्ये । तेन कैयटोक्तव्याख्याया पौनरुक्त्यं न स्यात् ।

ध्रुवपदस्यैव व्याख्यानं कूटस्थमिति रूपान्तरापत्तिविचालः । यथा पयसो दध्यादिरूपता । अनेन परिणामानित्यता निरस्ता । उत्पत्तेः सत्तापर्यन्तत्वाद् भाष्यस्थनित्यलक्षणघटकानुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ ।

अथ च 'अव्ययं नित्यम्' इत्येतावतैव सिद्धे ध्रुवाद्यनेकविशेषणोपादानस्य वैयर्थ्या भावः 'जायते, अस्ति, वर्द्धते, विपरिणमति, अपक्षीयते, विनश्यति[६]' इति निरुक्तोक्तानां षण्णां भावविकाराणां निरासश्चाभूत् । अवृद्ध्यनुपजनापायेत्येतैः क्रमेण तृतीयवृद्धि-लक्षणचतुर्थपरिणामपञ्चमापचयरूपविकारराहित्यमर्थो बोध्यते । अव्ययेत्यनेन षष्ठस्य विनाशस्य निरासः ।

---

१. मङ्गलार्थम्, १अ० १ पा० १ आ० । २. पा० सू० ६।१।१४७ । ३. पा० सू० ८।१।४ । ४. न्या० सू० २।२।६७ । ५. म० भा० पृ० ५० । ६. निरु० अ० ख० २ सू० ८ ।

इदं च षड्भावविकारशून्यत्वरूपं नित्यत्वं ब्रह्मविषयकं नित्यत्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयञ्च। अयमेव न नित्यशब्दार्थः, प्रवाहाविच्छेदेऽताद्दश्यापि नित्यत्वव्यवहारादित्याह भाष्ये—तदपीति। यस्मिन् विहतेऽपि तद्वृत्तिधर्मो न विहन्यत इत्यर्थ। प्रवाहनित्यता चानेनोक्ता। तन्नाशेऽपि तद्धर्मो न नश्यति, आश्रयप्रवाहाविच्छेदादिति तात्पर्यम्।

## १०. अनित्यत्वपक्षे तु व्याकरणस्य व्यवस्थासम्पादकत्वाभाव:

नित्यत्वपक्षे शब्दानुशासनस्योपयोगित्वं प्रतिपाद्य सम्प्रति शब्दानामनित्यत्वस्वीकारे व्याकरणशास्त्रेण शब्दानामनुशासनस्य कर्त्तव्यता न सम्भवति, यतो हि नवनवाना शब्दानामुत्पादनस्य सम्भवेनाव्यवस्था स्यात्। अत शास्त्रव्यवस्थासम्पादनार्थं शब्दार्थसम्बन्धाना नित्यत्वं प्रमाणयन् तेन प्रयोजनेन साकमस्य पूर्वोक्तस्य वार्त्तिकाभिप्रायस्य सम्बन्धमनुबन्धरूपतयाऽभिधातुं भूमिकामारचयति भर्तृहरि —

नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।
सूत्राणामनुतन्त्राणा भाष्याणाञ्च प्रणेतृभिः॥[1] इति॥
[ वा० का० १, श्लो० २३ ]

इदमत्राकूतम्—यद्यपि 'ब्राह्मणेन निष्कारणो धर्म, षडङ्गो वेदोऽध्येयो ज्ञेयश्च'[2] इति श्रुत्योत्तमाधिकारिणो व्याकरणाध्ययने सन्ध्योपासनादाविव स्वत एव प्रवृत्ता भविष्यन्तीत्यभिसंधाय व्याकरणप्रयोजनं नोक्तं सूत्रकारेण, वार्त्तिककारेण च "शास्त्रपूर्वकं प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन"[3] [ १ अ० १ पा० १ पस्पशाह्निके ] इत्यनेन मध्यमाधिकारिणा प्रवृत्तये प्रयोजनमुक्तम्। तथापि प्ररोचकप्रयोजनप्रतिपत्तिपराधीनप्रवृत्तीना मन्दाधिकारिणा स्वर्गापूर्वादिष्वतीन्द्रियेष्वनास्थया 'अथ शब्दानुशासनम्'[4] इत्यनेन साक्षाच्छब्दव्युत्पत्तिलक्षणं परम्परया वेदरक्षादिकञ्च प्रयोजनं भाष्यकृता प्रतिपादितम्।

## ११. शब्दार्थसम्बन्धानां नित्यत्वे भर्तृहर्यादीनां सम्मतिः

तत्र च वाक्यपदीये 'आसन्नं ब्रह्मणस्तस्य[5]' [वा० का० १, ११] इत्यारभ्य 'परं ब्रह्माधिगम्यते'[6] [ वा० का० १, २२ ] इत्यन्तेन 'अथ शब्दानुशासनम्'[7] इत्यारभ्य 'किं पुनर्नित्यः शब्दः, आहोस्वित् कार्यः'[8] [ पस्पशा० ] इत्यत. प्राक्तन उपोद्घातरूपो महाभाष्यग्रन्थोऽर्थतो विवृत.।

---

१. वा० प० ब्र० २३। २। ३. म० भा० वा०, पृ० ५५।
४. म० भा० पस्पशा० १। ५. वा० प० १-११। ६ वा० प० १-२२।
७ म० भा० पस्पशा० १। ८. म० भा० पस्पशा० पृ० ४५।

अधुना 'सिद्धे शब्दार्थसम्बन्धे'[१] इति प्रथमं वार्त्तिकं व्याख्यातुमुपक्रमते—

'नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः[२] ।।'' इति ।

तत्र = व्याकरणे, तन्त्रमत्र व्याकरणशास्त्रमनुगतानि अनुतन्त्राणि वार्तिकानि, तेषामनुतन्त्राणाम्, सूत्राणाम्, भाष्याणाञ्च चूर्णिकादीनाम्, सन्देहचूर्णकत्वेन चूर्णिकाव्यपदेशः । प्रणेतृभिः, व्याकरणस्य प्रकृतत्वात् पाणिनिकात्यायनपतञ्जलिभिः, महर्षिभिः प्रत्यक्षधर्मभिः शब्दश्चार्थश्च सम्बन्धश्च ते तथोक्ता नित्याः समाम्नाताः सम्यग् अभ्यासेनोक्ता इति योजना । भाष्यं हि चूर्णिकारूपं पस्पशाख्यं प्रथममाह्निकम् । यत्र शास्त्रानारम्भसमर्थका वादिनश्चूर्णिताः । 'स्पश् बाधने' इत्यस्माद् यङ्लुगन्तात् पृषोदरादित्वात् निष्पन्नम् 'पस्पशा' इति रूपं चूर्णिकासमानार्थकमेव । अग्रे च भाष्यमुक्तानुक्तदुरुक्तचिन्तादिरूपतया बहुविधम् ।

तत्र नित्यः शब्दो नित्योऽर्थो नित्यः सम्बन्ध इत्येषा शास्त्रव्यवस्था । शब्दार्थसम्बन्धानामनित्यत्वे हि तत्र पुरुषाणां स्वातन्त्र्ये शब्दार्थसम्बन्धाः स्वेच्छयाऽन्यथापि कृता भवेयुरिति शब्दार्थसम्बन्धानां स्वविषयाणामव्यवस्थया शास्त्रमपि न व्यवतिष्ठेत । तेषां नित्यत्वे तु सर्वस्यापि व्याकरणशास्त्रस्य विभिन्नकर्तृकस्याव्यवस्थापकत्वं सिध्येत । कारिकायां नित्यः शब्दः, नित्योऽर्थ इति आकृतिनिर्देशः । अर्थात् शब्दपदेन शब्दाकृतिरभिधीयते एवमर्थपदेनार्थाकृतिः । यतो हि ''जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्''[३] इति सूत्रेण ''आकृत्युपदेशात् सिद्धम्''[४] [ १।१।२१ ] इति वार्त्तिकेन ''आकृतिं वाजप्यायनः''[५] [ पा० सू० १।२।६४ ] इति स्वरूपसूत्रस्थभाष्येण चाकृतिमभिधेयं स्वीकृत्य व्याकरणशास्त्रं प्रवृत्तमस्तीति प्रतीयते । व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवम् । तात्पर्यमिदं यद् यद्येकस्या व्यक्तौ शक्तिरभ्युपगम्यते, तदा व्यक्त्यन्तरस्य बोधो न स्यात् । एकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्तिविषयकशाब्दबोधाभ्युपगमे तु गोव्यक्तिविषयकशक्तिज्ञानादश्वविषयकबोधापत्त्या तद्व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिविषयकबोधे हेतुत्वेनावश्यकल्प्यतयैकविषयकज्ञानादपरव्यक्तिबोधानुदयापत्त्या सकलव्यक्तिभानार्थं तावद् व्यक्तिषु शक्तिकल्पनायां गौरवस्य स्फुटतया जात्यावेव शक्तिकल्पनोचिता । यद्यपि 'गौर्गोपदवाच्यः' इति शक्तिग्रहो व्यक्तिविषयकोऽपि, तथापि ''सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे''

---

१. म० भा० पस्पशा । २. वा० प० १।२३ । ३. पा० सू० १।२।५८ ।
४. म० भा० वा०, पृ० ६० । ५. म०, भा० वा० १।२।६४, पृ० ७० ।

इति न्यायेन जातावेव सत्तां परिच्छिनत्ति। यद्वा जातिविशेष्यक एव शक्तिग्रहः 'गौर्गोपदशक्य.' इति जातिशक्तिवाद एवमेवाभिलापात्।

एवञ्च तथा घटशब्दस्यैकघटव्यक्तौ शक्तिस्वीकारे घटव्यक्त्यन्तरबोधेन शक्तिग्रहबोधयो कार्यकारणभावे व्यभिचारः, सर्वासु घटव्यक्तिषु शक्तिस्वीकारे शक्त्यानन्त्यमिति घटत्वजातौ शक्तिः स्वीक्रियते। एवमेकस्य घटशब्दस्य शक्तत्वे घटपदान्तराद्बोधेन व्यभिचार, सर्वस्य शक्तत्वे च शक्त्यानन्त्यमिति घटशब्दत्वजातिः शक्त्याश्रयत्वेन स्वीक्रियते। आकृतिश्चात्र जाति, न त्ववयवाना सन्निवेशविशेष, "एका आकृति, सा चाभिधीयते"[१] इति सरूपसूत्रस्थभाष्यात्, "प्रख्याऽविशेषात्"[२] [पा० सू० १।२।६४] इति सरूपसूत्रस्थवार्त्तिकस्य "प्रख्या = बुद्धि, तस्या अविशेषात् = एकरूपत्वात्तद्विषयस्याप्यैक्यं प्रतीयते। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु 'गौ', गौः' इत्येकाकारप्रत्ययोदयादवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिसद्भाव एकत्वञ्चावसीयते"[३] इत्याकारककैयटव्याख्यानाच्च। जातिर्हि नित्या, शब्दार्थव्यक्तीनान्तु प्रत्यक्षेणैवोत्पादविनाशानुभवात्। शब्दार्थसम्बन्धस्तु स्वरूपेणैव नित्य समवायवत्।

ननु पटशब्दत्वादिरूपजातेर्वाचकत्वे तस्या सर्वदा सत्त्वात् सर्वपदार्थबोधापत्तिरिति, चेत्, न, तत्तद्वर्णोच्चारणेनाभिव्यक्ता सती साऽर्थबोधिका, न स्वरूपसतीत्यङ्गीकारेण दोषाभावात्। उक्तञ्च हरिणा—

"अनेकव्यक्त्यभिव्यङ्ग्या जाति. स्फोट इति स्मृताः"[४]।

इति सोऽयं जातिस्फोटवाद इत्युच्यते।

## १२--शब्दनिष्ठजातौ प्रमाणम्

घटशब्दत्वजातौ मानञ्च--शुकसारिकामनुष्यादिप्रयुक्तेषु साक्षादनुभूयमानवैलक्षण्येषु भिन्नेषु घटशब्देषु 'अयं घटशब्दः' 'अयं घटशब्दः' इत्यनुगताकारप्रतीतिरेव। दृष्टा चेयं विधा भिन्नेषु घटेषु 'अयं घटः' 'अयं घट.' इत्यनुगतप्रतीत्या घटत्वजातेः सिद्धौ।

तदेवमभिधानरूपमभिधेयरूपञ्चैतद् द्वयमप्याकृतिरूपमेव। तथा चोक्तं वैयाकरणभूषणसारे--"शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्"[५]।

अभिधानरूपा शब्दाकृतिः शब्दत्वगुणत्वादिरूपजातिसामान्यविशेषरूपा न, किन्तु तदन्या वृक्षशब्दत्वादिरूपजातिविशेषरूपा। शब्दत्ववृक्षशब्दत्वयोर्भेदस्तु—गोशब्दत्ववृक्षशब्दत्वयोर्व्याप्यजातिविशेषयोर्विरुद्धः समवायः, एकत्रार्थेऽसमवायात्।

१. म० भा० १।२।६४। २. म० भा० वा० १।२।६४। ३. कै० प्र० १।२।६४।
४. वा० प० ब्र० ९३। ५. वै० भू० का० ७१।

वृक्षशब्दत्वादिभिर्जातिविशेषैस्तु सहशब्दत्वस्याविरुद्ध समवायः, एकत्रार्थे व्याप्य-व्यापकयोर्द्वयोरपि तयोः समवायात्। एवञ्च तथा यस्य येन सह समानकाले एकत्रार्थे नियतमसंनिधानं तयोर्भेद, यथा गोशब्दत्ववृक्षशब्दत्वयो। तथैव यस्य येन सह समानकाले एकत्रार्थे नियतं संनिधानमसंनिधानञ्च तयोरपि भेद। तथा च समानकाले एव शब्दत्ववृक्षशब्दत्वयोरेकत्रार्थे वृक्षशब्दरूपे संनिधानम्। गोशब्दे चैकस्य संनिधानेऽप्यपरस्यासंनिधानेन द्वयोरसंनिधानं दृश्यत इति तयोर्भेदः। यतो वृक्षशब्दत्वं विरुद्धेऽविरुद्धे चार्थे युगपन्न संनिधत्ते, शब्दत्वं तु संनिधत्ते, गोशब्दवृक्षशब्दयोरुभयोरपि समवायादिति युगपद् विरुद्धार्थसंनिधानासंनिधानकृत स्तयोर्भेद। यथा हि घटे द्रव्यत्वपृथिवीत्वघटत्वादीनामविरुद्ध समवायः, तथा वृक्षशब्देऽपि गुणत्वशब्दत्ववृक्षशब्दत्वादीनामविरुद्ध. समवायः[1]।

यथा घटे द्रव्यत्वपृथिवीत्वघटत्वादिजातीना सत्त्वेऽपि घटत्वस्यैव घटपद-शक्यत्वं तत्रैव घटपदनिष्ठशक्तिसम्बन्धश्च स्वीक्रियते, तथैव घटशब्दे गुणत्वशब्दत्व-घटशब्दत्वजातीना सत्त्वेऽपि घटशब्दत्वस्यैव घटशक्तत्वं तत्रैव शक्त्याश्रयत्वञ्च स्वीक्रियते।

अथ यौगपद्येन वर्तमानाः पटावयवा. पटाख्यमवयविद्रव्यमुत्पादयन्तीति व्यवस्थितावयवो घटाख्योऽवयवी स्वसमवेता घटत्वजातिमभिव्यनक्तीति च युक्तं प्रतिभाति। वृक्षशब्दादीना शब्दव्यक्तिविशेषाणामसमकालजन्मभिः क्षणिकत्वेना युगपत्कालैर्वर्णरूपैरनवस्थितैर्वृक्षशब्दाद्यभिव्यक्तिसामर्थ्याभावादवयवत्वेनाव्यपदेश्यैः शब्दान्तरं वृक्षशब्दादिरूपमारब्धुं न शक्यत इति वृक्षशब्दत्वादिजातिः क्व समवेयात्, को वा तामभिव्यज्यात। शब्दत्वरूपाकृतिस्तु प्रत्यवयवं परिसमाप्तेति न तदाश्रयरूपमवयविशब्दान्तरमपेक्षते। न च शब्दत्वजातिवद् वृक्षशब्दत्वजातिरपि प्रत्येकवर्णपरिसमाप्ता प्रत्येकवर्णाभिव्यङ्ग्या चेति वाच्यम्, तथा सति केवलेषु वका-रादिष्ववयवेषूच्चारितेषु वृक्षादिशब्दविशेषाकारावग्राहिबुद्ध्यापत्ते, द्वितीयादिवर्णो-च्चारणवैयर्थ्यापत्तेश्चेति चेत्, न; यथा पूर्व कर्म, ततो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः, तत. कर्मनाश., ततः कर्मान्तरम्। कर्मवति द्रव्ये च पूर्वकर्मणि अविनष्टे सति न कर्मान्तरम्, कर्मणोः सहावस्थायित्वविरोधात्। अत. कर्मान्तर-सहिते कर्मविशेषैरवयविस्थानीयमवस्थितं कर्मान्तरं नारब्धुं शक्यते, यत्र भ्रमणत्वादिजातिः समवेयात्। यद्वा तामभिव्यञ्ज्यात्, तथापि कर्मत्वजात्युपलक्षितेषु क्रमविशेषयुक्तेषु पूर्वापरीभूतेषु कर्मसूत्क्षेपणत्वभ्रमणत्वादिजातिरङ्गीक्रियते। तत्र उत्क्षिपति, भ्रमति इति भिन्नभिन्नप्रत्ययजननेन भ्रमणजनककर्माणि उत्क्षेपणजनक-कर्मापेक्षया भिन्नानि प्रत्यवयवं भ्रमणत्वाश्रयत्वं प्रतिपद्यमानान्यपि प्रत्येककर्मदर्शन-

---

१. वा० प०

वेलायामुत्क्षेपणत्वाश्रयकर्मापेक्षया भेदमप्रतिपद्यमानानि 'इदं कर्म उत्क्षेपणत्वाभिव्यञ्जकं भ्रमणत्वाभिव्यञ्जकं वेति निर्धारयितुमशक्यत्वेऽपि यदा देशविशेषे संयोगविभागविशेषान् जनयन्ति अपेक्षाबुद्ध्या विषयीकृतानि क्रमानुवृत्ति जनयन्ति कर्माणि दृश्यन्ते, तदा पूर्वपूर्वकर्मप्रत्यक्षाहितसंस्कारसहितेन चरमकर्मप्रत्यक्षेण भ्रमणत्वमुत्क्षेपणत्वं वा जातिरभिव्यज्यते' इति वैशेषिकैः स्वीक्रियते'। एवं यत्नविशेषैरुत्पन्ना वकारादयो वृक्षशब्दत्वस्याश्रयत्वं प्रतिपद्यमाना अपि वृकशब्दघटकवकाराद् भेदमप्रतिपद्यमाना वृक्षशब्दत्वजातिमनभिव्यञ्जन्तोऽपि यदा तदुत्तरोत्तरवर्णोपलम्भेनापेक्षाबुद्ध्या विषयीकृताः क्रमानुवृत्ति जनयन्ति, तदा पूर्वपूर्ववर्णप्रत्यक्षाहिता संस्कार सहितेन चरमवर्णप्रत्यक्षेण पूर्वमगृहीताऽव्यक्तं गृहीता वा वृक्षशब्दत्वरूपा जातिः संस्कृतेऽन्तः करणे गृह्यत इत्यदोषात् । अत एवोक्तं हरिणा—

> प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये।
> तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ॥[२]

एवमपि पूर्वमव्यक्तं जातेर्गृहीतत्वोपपत्तिः ।

श्लोकवार्त्तिकेऽपि भट्टपादैः प्राक् प्रतिपादितोऽर्थ. समर्थित.—

> तत्र तात्वादिसंयोगविभागक्रमपूर्वकम् ।
> ध्वनीनामानुपूर्व्यं स्याज्जात्या चोभयनित्यता ॥
> यथैव भ्रमणादीना भागैर्जात्या च लक्षितैः।
> क्रमानुवृत्तिरेव स्यात् ताल्वादिध्वनिवर्णभाक्[३] ॥ इति ।

व्याख्यातञ्चात्र न्यायरत्नाकरेण—"ताल्वादिसंयोगविभागक्रमवशेन तत्प्रेरिताना ध्वनीना क्रमो भवति । द्वये च ताल्वादयो ध्वनयश्च जात्या नित्या, तेन गकारौकारविसर्जनीयाना क्रममिच्छन् तदभिव्यञ्जकाना ध्वनिजातीयाना तत्तदनुरूपेण क्रमेण प्रेरणं चिकीर्षन् ताल्वादिजातीयाना स्थानाना संयोगविभागौ क्रमेणारभत इति ।

ननु स्वाश्रयमेव जातिरुपलक्षयति, ताल्वादिसमवेतया तु जात्या कथमतदाश्रयः क्रम शक्यते लक्षयितुमत आह—यथैवेति। क्रमविशेषयुक्ता बहवः पूर्वापरीभूतक्रियाक्षणा भ्रमणमुच्यते। तेषाञ्च क्रमानुवृत्तिर्यथा भ्रमणभागक्रियाक्षणसमवेतया क्रियात्वजात्या लक्ष्यते तथा ताल्वादिध्वनिवर्णभागेऽपि क्रमानुवृत्तिः ताल्वादिजात्येव शक्योपलक्षयितुम्—भागैर्जात्या चेति। जात्युपलक्षितैर्भ्रमणभागैः क्रमोपलक्षणमित्यर्थ."[४] इति ।

---

१. द्र० वै० सू० व्याख्यानम् । २ वा० प० १।८६ । ३ श्लोकवा० ।
४. न्या० रत्ना० ।

योगभाष्येऽपि—"वर्णः पुनरेकैकपदात्मा सर्वाभिधानशक्तिप्रचितः सहकारि-वर्णान्तरप्रतियोगित्वाद् वैश्वरूप्यमिवापन्नः पूर्वश्चोत्तरेणोत्तरश्च पूर्वेण विशेषेऽव-स्थापितः"[१] इति प्रतिपादितम् ।

नन्वेतान्युत्क्षेपणत्वादीनि सामान्यान्यनुगताकारप्रत्ययवेद्यान्यत एव प्रबन्धा-भिव्यक्तसत्त्वानीति प्रबन्धाभावे कथमवयवेषु सन्तीति कल्प्यन्ते ? किञ्चाभिव्यक्तिः सत एव वस्तुनो व्यञ्जकेन तद्विषयकज्ञानोत्पादनम्, कर्मावयवपूर्वक्षेपणत्वादिजात्य-भावाच्चाभिव्यक्तिरपि न भवति । किञ्च, समानजातीयकेषु कर्मावयवेषु प्रबन्ध-प्रवृत्तेषूत्तरोत्तरमुत्क्षेपणत्वादिजातिज्ञानस्य स्फुटतरस्योत्पत्तिः संभाव्यते, न तु भिन्नस्वभावेषु भिन्नजातीयेषु च वर्णेषु प्रबन्धेनोपलब्धेषु तथा । किञ्च, वृक्षशब्दत्वादि रूपा शब्दत्वादपरा जातिर्नाङ्गीकृता व्यक्तौ जातिसंसर्गमङ्गीकुर्वद्भिरिति चेत्, न, यतः शास्त्रान्तरे परिदृष्टा जात्यभिव्यक्तिप्रक्रिया नावश्यं शाब्दिकैरपि स्वीक्रियेत । न हि स्वाश्रितानामेवाभिव्यङ्ग्यानामभिव्यञ्जकैरभिव्यक्तिर्नियमेन क्रियते, प्रदीपा-लोकेन्द्रियादिभिरभिव्यञ्जकैः स्वानाश्रितानामेव घटादीनामभिव्यक्तिदर्शनात् । कदाचित्तु स्वाश्रितानामप्यभिव्यक्तिः क्रियते, यथा स्वगतरूपस्य प्रदीपेन । एवञ्च वर्णा अपि स्वानाश्रिताया एव वृक्षशब्दत्वादिजातेरभिव्यञ्जका इत्यदोषात् ।

अत्रेदं प्रतिपादितं भवति यद् यथा भ्रमणत्वादिजातिश्चरमक्रियाप्रत्यक्ष-व्यङ्ग्या, एवं वृक्षशब्दत्वादिजातिरपि चरमवर्णप्रत्यक्षव्यङ्ग्या । बौद्धे क्रियासमुदाये भ्रमणत्ववदेषापि तादृशे वर्णसमुदाये व्यासज्यवृत्तिरिति ।

## १३. शब्दाकृतिविशेषाभिव्यक्तिविचारः

अत्र शब्दाकृतिविशेषाभिव्यक्तिविषयेऽनेकानि दर्शनानि सन्ति । तथा हि—केचन नष्टविद्यमानयोरव्यवहितोत्तरत्वस्य वक्तुमशक्यतया पूर्वापरीभावरूपक्रम-विशेषस्य ज्ञानासम्भव इति पूर्वोक्तरीत्याऽन्त्यवर्णानुभवोद्बुद्धसंस्कारेण युगपत् सर्ववर्णस्मरणेन पदप्रत्यक्षोपपादनस्य कर्त्तुमशक्यत्वात्, येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारोद्बोध इति नियमाभावेन विपरीतक्रमेण संस्कारोद्बोधे 'सरो रसः' 'नदी दीनः' इति विपरीतक्रमापत्तौ प्रत्येकमन्यार्थबोधापत्तेः, अविद्यमानस्य वृक्षशब्दस्य शक्त्याश्रयत्वानुपपत्तिश्च । असतोऽप्याश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्'[२] इत्यापत्तिश्चेत्याकृतिमनङ्गीकुर्वन्तोऽनेकध्वनिव्यङ्ग्यां नित्यामक्रमां शब्द-व्यक्तिं स्फोटाख्यां वाचकत्वेन मन्यन्ते ।

स्फोटस्य वाचकत्वमभ्युपगच्छतामपि केचित् सखण्डस्फोटवादिनः । ते स्फोटे वर्णादीनां सत्त्वमाहुः ।

१. यो० भा० । २. ल० म०, पृ० १३६ ।

अन्ये त्वखण्डस्फोटवादिनः। ते च प्रतिवर्णं प्रतिपदं प्रतिवाक्यञ्चैक एव शब्दात्मा क्रमोत्पन्नध्वनिगतकत्वादिरूपेण क्रमोत्पन्नावयवरूपप्रतिभासो भासते, परमार्थतश्च तत्र वर्णा पदानि च न सन्तीति मन्यन्ते। "ऐ औच्" सूत्रे भाष्येऽप्युक्तम्—"उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति"[१] इति। "वस्तुत. स्फोट एव श्रोत्रग्राह्यो वायुनिष्ठकत्वादिना च तदभिव्यक्तिः। एवञ्च साक्षाद्रत्ववतोऽभावेन कल्पत इत्यत्रापि अप्रवृत्तावस्य वैयर्थ्यापत्तिः। एवञ्च रेफावभासिन. स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थ."[२] इति।

## १४. तत्र मतान्तरनिराशः

यद्वा, यैरपि शुकाद्युच्चारितशब्दव्यक्तिविशेषेषु स एवायमित्यनुगतः प्रत्ययरूपो व्यवहार. शब्दाकृतिविशेषप्रयुक्तो न स्वीक्रियते। तथा हि आकृतयो हि स्वाश्रयो स्वानुरूपप्रत्ययजनिकाः स्वानुरूपाभिधानजनिकाश्च स्वाश्रयव्यक्तिव्यङ्ग्यत्वेन परतन्त्रा.। अनेकासु शब्दव्यक्तिषु स एवायमित्यभेदप्रत्ययविषयस्तु घटादिपदार्थवत् स्वातन्त्र्येण प्रतीयमानः कथमाकृतिरूप.। आकृतिर्हि घटादिप्रत्ययेष्वेताहशेषु पारतन्त्र्येणैव प्रतीयते, न स्वातन्त्र्येण। अतोऽत्र शुकाद्युच्चारितपदेषु स एवायमित्यभेदप्रत्ययो नित्यशब्दव्यक्तिविषय एव, न तु तथाविधशब्दाकृतिविषय एव। अथ च संस्कार. स्वानुरूपस्मृतिहेतु, स्मृतिसंस्कारयोः समानविषयकत्वेन कार्यकारणभावदर्शनात्। अतो वर्णविषय संस्कारो नाकृतिविषया स्मृतिमुपजनयितुमर्हति, अर्थान्तरत्वादाकृते.। तेप्यनेकध्वनिव्यङ्ग्या नित्या शब्दव्यक्तिमेव प्रतिजानते।

## १५. अनित्यव्यक्तिस्फोटवादिमतम्

एके आचार्यास्तु सावयवानित्यस्फोटवादिनः शब्दव्यक्तिगतं वर्णभेदमवगच्छन्ति। तेषामयमभिप्राय.—सर्गादौ समुत्पन्नैर्वर्णरूपैरवयवैरेका शब्दव्यक्तिरारभ्यते, सा च लिङ्गशरीरवत् कल्पादौ समुत्पन्ना कल्पान्तस्थायिनीति तस्याश्चिरस्थायित्वेन नित्यत्वव्यवहारः शास्त्रेषु। सा च वर्णरूपावयवव्यक्तिक्रमेण ध्वनिभिरभिव्यज्यत इति।

## १६. व्यक्तिस्फोटवादिमतम्

केचित्तु नित्यनिरवयवस्फोटवादिनः प्रतिवर्णं प्रतिपदं प्रतिवाक्यञ्चैक एव शब्दात्मा क्रमोत्पन्नध्वनिगतकत्वादिरूपेण क्रमोत्पन्नावयवरूपप्रतिभासो भासते। परमार्थतश्च तत्र वर्णा. पदानि च न सन्तीति मन्यन्ते। यथा च "ऐ औच्" सूत्रे भाष्यम्—"उभयत· स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भविष्यति"[३] इति।

१. म० भा० म० सू० ४। २. उद्द्यो० मा० सू० ४। ३. म० मा० मा० सू० ४।

अत्रोद्द्योत —"वस्तुत स्फोट एव श्रोत्रग्राह्यो वायुनिष्ठकत्वादिना च तद-भिव्यक्ति । एवञ्च साक्षाद्रत्वतोऽभावेन कल्पत इत्यत्रापि अप्रवृत्तावस्य वैयर्थ्यापत्ति. । एवञ्च रेफावभासिन. स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः[१]" इति ।

## १७. प्रवाहनित्यस्फोटवादिमतम्

अन्ये तु—न नित्या न च निरवयवाः शब्दा., अनित्यत्वे सावयवत्वेऽपि च न कल्पान्तस्थायिन., प्रत्युच्चारणं तेषामुत्पादविनाशयोरनुभूयमानत्वात् । तथा च क्रियावत् क्रमजन्मना वर्णानामेकबुद्ध्युपारूढः समूह एव शब्द इति व्यपदिश्यते । एवञ्चानादौ संसारे शब्दव्यवहारस्य नित्यं प्रवृत्तेर्व्यवहारपारम्पर्यस्याविच्छेदात् शब्दानामुत्पत्तौ सत्यामपि प्रयोक्तृभिरलब्धप्राथम्याः शब्दा व्यवहारस्य प्रवाहनित्यतया नित्या व्यपदिश्यन्त[२] इत्याहुः ।

## १८. शब्दनित्यत्ववादिमतनिष्कर्षः

अत्रायं निष्कर्ष—शब्दनित्यतावादिना मीमांसकानां व्यक्तिस्फोटवादिनां जातिस्फोटवादिना वा वैयाकरणाना मते शब्दनित्यत्वं सूपपादम् । कार्यशब्दवादिना मते स्वतोऽनित्यत्वेऽपि व्यवहारनित्यतया आकृतिनित्यतया शब्दपदस्य शब्दाकृति-परतया वा शब्दस्य नित्यत्वोक्तिरित्यर्थ. ।

## १९. मीमांसकाभिमतपदवाक्यस्वरूपविचारस्तत्खण्डनञ्च

ननु क्रमशून्यं वर्णातिरिक्तं पदं वाक्यं वा वाचकमिति वदता वैयाकरणाना मते पदादेर्नित्यत्वेऽपि मीमासकमते पदवाक्यादीना नित्यत्वासम्भव:। तथा हि आनुपूर्वी भेदवन्तो हि वर्णाः पदम्, पदानि चानुपूर्वीभेदवन्ति वाक्यम्, ध्वनिधर्म-श्चानुपूर्वी न वर्णधर्मः, वर्णाना नित्याना विभूनाञ्च कालतो देशतो वा पौर्वापर्य-विरहात् । ध्वनयो हि क्रमवर्तिन· क्रमेण शब्दानभिव्यञ्जयन्त. स्वीयं क्रमं वर्णेषु दर्शयन्ति । क्रमरचना च पुरुषाधीनेति परमाणूना नित्यत्वेऽपि तदारब्धघटानि-त्यत्ववद् वर्णाना नित्यत्वेऽपि पदस्यानित्यत्वमिति सुतरा वाक्यस्यानित्यत्वम् । किञ्च, क्रममन्तरा वर्णानां प्रतिपादकत्वासम्भवात् क्रमस्य च वाचकत्वात् पदत्वं न ।

क्रमविशिष्टानां वर्णानां तस्य च पुरुषाधीनत्वेनानित्यत्वमिति चेत्, न, क्रमविशिष्टाना वर्णानामेव वाचकत्वं प्राधान्यात्, न वर्णक्रमस्य, तस्य सर्वपदा-र्थाङ्गत्वेनाप्राधान्यात्, न ह्यसौ स्वतन्त्र एव वस्त्वन्तरत्वेन क्वचिद् व्यवह्रियते इति सिद्धान्तात् । तदुक्तं शाबरभाष्ये—"गकारौकारविसर्जनीयाः पदम्" इति । तथा च वर्णाना नित्यत्वाद् वर्णात्मकपदाना नित्यत्वमक्षतम् ।

१. उद्द्योत भा० सू० ४ । २. ल० भा०, पृ० ४७३–७४ ।

क्रमस्यानित्यत्वे तद्विशिष्टाना वर्णानामनित्यत्वेन पदस्यानित्यत्वं पुनर्नाशङ्कनीयम्, येन क्रमेणैकेन पदं प्रोच्यते तेनैवापरेणेति व्यवहारनित्यत्वेन क्रमस्य नित्यत्वमिति तद्वदेव पदस्य नित्यत्वात् ।

## २०. अर्थनित्यत्वे भाष्यसम्मतिः

शब्दनित्यत्ववदर्थानामपि नित्यत्वं कैश्चिदाकृतिनित्यत्वादेवाभ्युपगम्यते । तथा ह्याह भाष्यकार —"अथ कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते-सिद्धे शब्देऽर्थे सम्बन्धे चेति । आकृतिमित्याह"[१] इति ।

अस्मिन् भाष्योद्देशे यावन्तः पक्षा. सन्ति, तेष्वर्थस्य नित्यता बहुधा व्याख्याता । सा यथा भाष्यमनुगन्तव्या ।

तथा हि—घटाद्यर्थगता घटत्वादिरूपा जातिर्नित्येत्येक. पक्षः । घटत्वादिरूपासत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वमेव घटादिशब्दवाच्यमिति द्वितीयः पक्षो ब्रह्माद्वैतवादिनाम् । जातिव्यञ्जिकाऽवयवसंस्थानरूपाऽऽकृतिर्नित्या, तस्याः स्वरूपतोऽनित्यत्वेऽप्याश्रयप्रवाहाविच्छेदात् । तथा चोक्तं भाष्ये—"तदपि नित्यं यस्मिस्तत्त्वं न विहन्यते"[२] इति । यस्मिन् विहतेऽपि तद्वृत्तिधर्मो न विहन्यत इत्यर्थ ।

एवञ्चावयवसंयोगविशेषरूपायामाकृतौ विनष्टायामपि तद्वृत्तिधर्मः संयोगत्वव्याप्यो जातिविशेषो न नाशं याति । अतोऽवयवसंस्थानरूपाऽऽकृतिर्नित्या । सैव च घटादिपदार्थ इति तृतीय. पक्षः ।

बाह्य. पदार्थो न शाब्दबोधविषयः, अपि तु बौद्धः । स च यदा शब्द उच्चार्यते, तदा तदाऽर्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वान्नित्य । स एव च शब्दार्थ इति तुरीयः पक्षः ।

## २१. अर्थनित्यत्वे मीमांसकसम्मतिः

शब्दार्थवत्तयोः सम्बन्धोऽपि नित्यः । अस्येदम्भावे सति शब्दार्थयोः सोऽयमिति य सम्बन्ध., सोऽर्थादेशनस्य कर्त्तुमशक्यत्वादौत्पत्तिकः स्वभावसिद्ध., नाज्ञातपूर्वं केनचित् कर्त्रा कञ्चित् प्रतिपत्तारं प्रति तत्प्रथमं कृत इति ।

इदमत्राकूतम्—सोऽयमिति प्रत्यभिज्ञाबलात् शब्दार्थयोरभेदात्मकः सम्बन्धः । स च शब्दार्थयोः 'अस्येदम्भावे' सति भवति. नान्यथा । तथा हि—अस्यार्थस्य वाचकोऽयं शब्द., अस्य शब्दस्य वाच्योऽयमर्थ इति वा ज्ञानं यत्र शब्देऽर्थे वोपजायते, तत्रैव सोऽयमित्यभिसम्बन्धो भवति । अत्र 'अस्येदम्' इति शब्देनास्यार्थस्यायं शब्दः सरूप इति शब्देऽर्थसारूप्यम्, अस्येदं वाच्यं वाचकं वेति ज्ञानं वोच्यते । तस्य भावे सत्त्वे इत्यर्थोऽस्येदंभावे इत्यस्य । तत्र सारूप्यस्य शब्दार्थोभयगतत्वेऽपि शब्द

१. म० भा० पस्प०, पृ० ४६ । २ म० भा० पस्प०, पृ० ५० ।

एव प्रकाशस्वभावत्वादर्थस्य रूपसंक्रान्तिः, न त्वर्थे शब्दस्य। यथा स्वच्छतया दर्पणतले रूपस्य संक्रान्तिः, न दर्पणतलस्य रूपे। रूपदर्पणयोश्च सारूप्यं दर्पणरूपोपाधिसंनिधानकृतम्, न स्वभावसिद्धम्। शब्देषु तु प्रत्यर्थनियतं सारूप्यं स्वत एवावस्थितम् न तूपाधिसंनिधानकृतम्। ततश्च शब्दो गृह्यमाणः संक्रान्तार्थाकार एव गृह्यते। तथा च भेदाभेदौ शब्दार्थयोः सम्बन्धः, सोऽयमितिवदस्येदमित्यस्याप्यभिसम्बन्धस्य भेदमूलकस्य सत्त्वात्।

स च सम्बन्ध औत्पत्तिकः = स्वभावसिद्धोऽनादिरित्यर्थः[1]। अत्रोत्पत्तिशब्देनोत्पत्तिकालो लक्ष्यते। तेनोत्पत्तौ = उत्पत्तिकाले भवः, औत्पत्तिकः। अध्यात्मादित्वाट्ठञ्। भवतिरत्र सत्तार्थको, न तु जननार्थकः। एवञ्च यदि शब्दार्थयोः सम्बन्धः संयोगवत् कृत्रिमः स्यात्, तदा सम्बन्धिद्वयजन्यः स्यादिति उत्पत्तिकाले न भवेत्। अतोऽजन्यः स्वभावसिद्धः, स्वभावेन स्वरूपेण सिद्धो नित्यः। शब्दार्थयोः सहजसम्बन्धाभावे च प्रत्यर्थं नियतस्य शब्दव्यवहारस्य कर्त्तुमशक्यत्वम्, व्यवहारातिप्रसङ्गात्। तदुक्तं समर्थवार्त्तिके--"अर्थानादेशनात्, तच्च लघ्वर्थम्, को हि समर्थः? धातुप्रतिपादिकप्रत्ययनिपातानामर्थानादेष्टुम्"[2] इति। अयमर्थः--शब्दार्थयोः सहजसम्बन्धाभावे व्याकरणेनार्थनिर्देशस्य कर्त्तुमशक्यत्वमिति। तच्च व्याकरणं लघ्वर्थम्, लाघवेन शब्दार्थसम्बन्धज्ञानार्थम्। हि = यतः, व्याकरणं विना कः समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम् = निर्देष्टुम्, तदर्थानामानन्त्यादिति।

स चाज्ञातपूर्वः केनचित् कर्त्रा कञ्चित् प्रतिपत्तारं प्रति तत्प्रथमं कृत इति नाभ्युपगन्तुं शक्यते, शब्दव्यवहारस्यानादित्वात्। अतोऽपि न तयोः सम्बन्धस्यानित्यत्वमिति। तस्मादनादिर्नित्यः प्राप्ताविच्छेदः शब्दार्थयोः सम्बन्धः।

## २२. सम्बन्धनित्यत्वे मीमांसकसम्मतिः

स च सम्बन्धः--इन्द्रियविषयवत् प्रकाश्यप्रकाशकभावाभिन्नः समयोपाधिको योग्यतारूपः। समयश्च तेषां तेषां शब्दानां तेषु तेष्वर्थेषु प्रयोगरूपव्यवहारदर्शनम्, स उपाधिः शब्दनिष्ठाया योग्यताया अर्थप्रकाशने सहकारिकारणम्। यथा चक्षुरादयः सत्यामपि रूपप्रकाशनयोग्यतायां नानपेक्षितालोकसहाया रूपं प्रकाशयन्ति, तथा शब्दाः सत्यामप्यर्थप्रकाशनयोग्यतायां समयसहाया एवार्थं प्रकाशयन्ति।

## २३. सम्बन्धस्वरूपविषयकवैयाकरणमतम्

योग्यता च बोधजनकत्वरूपा इति कौण्डभट्टः[3], वाच्यवाचकभावरूपशक्तिग्राहकतादात्म्यरूपा[4] इति नागेशः।

---

१ औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः।
२. पा० सू० का० वा० २।१।१।
३. वै० भू० सा०।
४. ल० म०, पृ० २३।

अथवा कार्यकारणभाव: सम्बन्ध: शब्दार्थयो:। तथा हि—शब्दादर्थाकारा बुद्धिरुपजायते। सा चान्त.करणस्य परिणामविशेष: शब्दजन्यो वृत्त्याख्य: प्रत्ययत्वोपचारात् प्रत्ययरूप.। वस्तुतस्तु चिद्रूपं चैतन्यमेव प्रत्यय·। स च घटाद्यर्थाकार. प्रत्ययो बाह्यार्थसरूपप्रत्यवभास.। यत. स प्रत्ययो बाह्यार्थे किञ्चित् सादृश्याद् बुद्ध्या समारोपितो बाह्यमेवेदं वस्त्विति परिच्छिद्यते। यतो बाह्यार्थदर्शनादर्थाकारस्य प्रत्ययस्य बाह्यत्वेनाध्यवसाय.। यथाऽक्षरस्मृतिनिमित्तेषु वस्तुतोऽनक्षरेष्वक्षरव्यवहारस्तदेकत्वव्यवसायश्च, लिपिदर्शनेऽक्षरावबोधात्। तथाऽतद्रूपेऽपि अबाह्यार्थरूपेऽपि प्रत्ययेऽर्थव्यवहार इति। ततश्च समारोपेण बाह्यार्थतादात्म्यापन्नस्यार्थाकारप्रत्ययस्य बौद्धार्थविषयकत्वादेव बाह्यार्थविषयकत्वेऽभ्युपगम्यमाने शब्दस्यार्थाकारं प्रत्ययं प्रति कारणत्वात् तत्तादात्म्येन बाह्यार्थं प्रति कारणत्वमुपपन्नमिति रीत्या नित्यमविच्छिन्नपारम्पर्यं कार्यकारणभाव: शब्दार्थयो: सम्बन्ध इति सिद्धम्। स चायं सम्बन्धोऽपि समयौपाधिक एव, समयसहकारेणैव शब्देनार्थाकारप्रत्ययजननात्।

## २४. शब्दार्थसम्बन्धविषयकं मीमासकमतम्

लोकव्यवहारे 'गामानय' इति वाक्यश्रवणानन्तरं गोकर्मकमानयनमर्थमवगच्छन्ति श्रोतार। तत्र शब्दस्यार्थेन समं क सम्बन्ध स्यात्, येन शब्दविशेषादर्थविशेष. संप्रतीतो भवेत्। विचारणायाञ्चास्याम् 'शब्दार्थयोस्तादात्म्यं सम्बन्ध' इति शाब्दिकसम्प्रदाय:।

'अस्माच्छब्दादयमर्थो बोद्धव्य. इतीश्वरेच्छाविषयत्वमेव स:' इति नैयायिकनय:।

अत्राद्ये सिद्धान्ते शब्दार्थयोरभेदाद् वह्निशब्दोच्चारणे मुखदाहापत्ति·, विभिन्नदेशयो: शब्दतदर्थयो. प्रतिपाद्यमानं तादात्म्यं न सहृदयहृदयमावर्जयति।

द्वितीयस्मिश्च तार्किकमते ईश्वरमनभ्युपगच्छता तदिच्छारूप. संकेतो दुर्ग्रह इति मीमांसका: स्वं सिद्धान्तमुपस्थापयन्ति—प्रत्याय्यप्रत्यायकभावापरपर्यायमनुभाव्यानुभावकत्वं शब्दार्थयो. सम्बन्ध इति।

अत्रेदमाकूतम्—शब्दस्यार्थोऽनुभाव्य:, अर्थस्य चानुभावक: शब्द:। श्रूयमाणानि च पदसमुदायात्मकानि हि वाक्यानि अर्थविशेषमवगमयन्ति। तत्र शब्दस्यार्थ: प्रत्याय्य:, अर्थस्य शब्द: प्रत्यायक इति।

अत्र पदार्थस्मृते. प्रत्ययशब्देन ग्रहणं माभूदिति इदमेव प्रत्याय्यप्रत्यायकत्वमनुभाव्यानुभावकत्वशब्देन व्यवह्रियते।

अयमाशय:—विषयेण सह सम्बद्धानामेव प्रमाणानां चक्षुरादीनां ज्ञानोत्पादकत्वं दृश्यते। नहि घटेन सह सम्बन्धं विनैव चक्षुरादिज्ञानं जनयति। यथा

प्रत्यक्षस्थले संयोगसंयुक्तसमवायादिसन्निकर्षेण घटादिना सम्बद्धानामेव चक्षुरादीनां प्रत्यक्षप्रमाजनकत्वम्, अनुमितौ धूमादिश्च व्याप्त्यादिना सम्बन्धेन वह्न्यादिकम्। तथैव शब्दस्यापि प्रमाणस्य स्वप्रमेयेण साकं भवितव्यं केनचित् सम्बन्धेन।

अथेदानीं समुन्मिषति विचारणेयं यत् कं संसर्गं पुरस्कृत्य शब्दोऽर्थमनुभावयेत्? उच्यते—सर्वत्रापि च कारणेषु तत्तत्कार्योपजननानुकूला काचन शक्तिरूप्यते मीमांसकैः। सा च कारणतारूपैव, तां व्यवस्थापयत् पदार्थान्तरं वेति पक्षद्वयं जागर्ति। एवञ्च व्यवस्थिततत्तदर्थाभिधानानुकूलां शक्तिमपेक्ष्य पदानि स्वयं स्वमर्थमभिदध्युरित्यात्माश्रयो नेहात्मलाभं लभते।

प्रमाणानां प्रमेयैः साकं सार्वत्रिकः सम्बन्धः इति पुरस्तान्निर्धारितमस्मिन्। द्वयी च तस्य सम्बन्धस्यार्थप्रत्यायने गतिः। तत्रैकः सम्बन्धः स्वगमविज्ञान एव स्वरूपसन्नर्थावगमे निमित्तं भवति। यथा प्रत्यक्षे चक्षुःस्पर्शानिकर्षाज्ञातेन्द्रिय-संनिकर्षवृत्तान्तस्यापि विस्फारितनेत्रस्य रूपोपलब्धिर्भवति। अपरस्तु सम्बन्धः पूर्वगृहीतः स्मृतिपथमुपगच्छन्नर्थावगमे कारणम्, यथाऽनुमानादौ। नहि अगृहीत-व्याप्तिसम्बन्धो विस्मृततत्सम्बन्धो वा धूमेन धूमध्वजमनुमिमानो दृष्टः। शब्द-प्रमाणेऽपि अनुभावकत्वशक्तिरूपः सम्बन्धोऽपि पदपदार्थयोर्ज्ञायमान एवार्थप्रतिपत्ति-हेतुरिति मन्तव्यम्। यत्र वस्तुप्रयोजिका शक्तिः, सा ज्ञाननिरपेक्षैव तद्वस्तु प्रयुङ्क्ते। ज्ञानप्रयोजिका तु शक्तिः स्वयं विज्ञातैव स्वकार्याय भवति। अत एव शक्तिज्ञानसहकृतं पदज्ञानं पदार्थस्मृतिं कुर्वदेव शाब्दबोधहेतुरिति सर्वतन्त्रसिद्धान्तः।

अयञ्च सम्बन्धोऽभिधाशक्तिपदेनोच्यते। स च सम्बन्धो नित्य इति व्यवस्थापितं भगवता जैमिनिना। तथा हि—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्[1]"

अस्यार्थः—उत्पत्तिशब्देनात्र जननान्तरभाविनी स्थितिर्लक्ष्यते। औत्पत्तिकः सदा स्थितः, नित्य इति यावत्। शब्दस्यार्थेन सम्बन्धः संज्ञासंज्ञिलक्षणो[2] ज्ञाप्यज्ञापक-भावरूपः। अर्थो हि आकृतिरूपो नित्य इति वक्ष्यते। शब्दोऽपि नित्य एवेतीहैव स्थास्यति। तयोर्नित्ययोः शब्दार्थयोः सम्बन्धोऽपि स्वभावसिद्धो नित्य इति सिद्ध्यति। तस्य सम्बन्धस्य ज्ञानं ज्ञापकं प्रतिपत्तिहेतुः। उपदेशो गामानयेत्यादिर्वृद्धव्यवहार इत्यर्थः।

एवं सम्बन्धस्यानादितां प्रतिज्ञाय तदुपपादयितुमाह—अव्यतिरेकश्चेति। अतीतेषु कालेषु कदापि यस्मात्तस्य व्यवहारस्याभावो नास्ति, तस्मादनादिः शब्दार्थ-सम्बन्धः। अर्थेऽनुपब्लधे इति शब्दप्रतिपाद्यस्य वाक्यार्थस्यानिर्ज्ञातपूर्वत्वमाचष्टे। तत्प्रमाणं प्रकृतं नोदनात्मकं वेदवचनं धर्माधर्मप्रमितिकरणम्। अनेनानधिगत-कालत्रयाबाधितार्थविषयकप्रमाजनकं वेदवाक्यं प्रमाणमेवेत्युक्तम्।

---

१. जै० सू० १-१-५। २. १-१-५ शाबरभाष्ये।

अत्रेदं विचार्यते—नित्ये शब्दार्थसंबन्ध प्रतिज्ञायमाने कल्पनागौरवं महत् प्राप्नोति। एकस्यार्थस्य वाचकताशक्तिरेकस्मिन्नेव पदे कल्पयितुं युक्ता। तथा वाच्यताशक्तिरप्येकस्य पदस्यैकस्मिन्नेवार्थे साम्प्रतं कल्पयितुम्, न बहुषु पदेषु बहुषु चार्थेषु, कल्पनागौरवात्। दृश्यन्ते चैकार्थवाचकानि नानापदानि भाषाभेदेन च तत्र सर्वत्रानादिशक्ति कल्पयत —अन्यायश्चानेकार्थत्वमिति, अनेकशब्दत्वमिति च न्यायविरोध। इदं पदमस्मिन्नर्थे प्रयोक्तव्यमिति संकेतलक्षण सम्बन्धो नाना भवन्नपि न दुष्यति, देशभेदात्, पुरुषभेदाच्चेति।

अत्र समाधि.—यद्यप्यनन्तशक्तिकल्पनाया गौरवं न्यायविरोधश्च भवेदेव, तथापि विषयेऽस्मिन्नीदृशेन सामान्यात्मना विचारेण निर्णयो दुर्लभ.। अतो विशेषरूपेण चिन्त्यते—यत्रैकस्यामेव भाषायामेकश्च शब्दोऽनेकेष्वर्थेषु प्रयुज्यते। यथा पीलुशब्द आर्यैर्वृक्षविशेषे प्रयुज्यते, म्लेच्छैश्च हस्तिनि। तत्रार्यम्लेच्छप्रसिद्धयधिकरणन्यायेनार्यप्रसिद्ध्यनुरोधाद् वृक्षविशेष: शक्य:, म्लेच्छाना तु पृथुत्वसान्द्रत्वरूपाद् वृक्षसादृश्याद् गजे गौण्या वृत्त्या प्रयोग इति निर्णीयते। यत्र तु गौणीमूलं सादृश्यं न लक्ष्यते तत्र यववराहादिशब्देषु वाक्यशेषाद्यनुरोधादेक एवार्थो मुख्य:, इतरेष्वर्थेषु शब्दप्रयोगार्थप्रतिपत्ती शक्तिभ्रमादिति व्यवस्था। कुत्र स्थिता शक्ति:, कुत्र भ्रान्ता इति विनिगमकं यत्र न लभ्यते, तत्र परमगत्या नानाशक्तिकल्पनं सर्वेषामविशिष्टम्। यथा हरिशब्दस्य यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिशुकाहिकपिभेकेषु। यथा च चक्रशब्दस्य रथावयवकोकादिष्वर्थेष्विति स्थितम्।

तस्मान्नित्ययो: शब्दार्थयोरर्थानुभाव्यानुभावकत्वशक्त्यात्मा नित्य एव सम्बन्धो भाविक इति सिद्धम्।

## २५ शब्दार्थसम्बन्धानां नित्यत्वनिष्कर्ष:

अत्र च नित्य शब्द:, नित्योऽर्थ., सम्बन्ध. (इत्येषा) शास्त्रव्यवस्था। शब्दार्थसम्बन्धानामनित्यत्वे हि तत्र पुरुषाणा स्वातन्त्र्ये शब्दार्थसम्बन्धा. स्वेच्छयाऽन्यथापि कृता भवेयुरिति शब्दार्थसम्बन्धानां स्वविषयाणामव्यवस्थया शास्त्रमपि न व्यवतिष्ठेत। तेषा नित्यत्वे तु सर्वस्यापि व्याकरणशास्त्रस्य विभिन्नकर्तृकस्याप्येकविधशब्दार्थसम्बन्धज्ञापकतया व्यवस्थोपपत्ति।

अयमाशय.—विदितवेदितव्यैरतीन्द्रियार्थदर्शिभिर्यै: सूत्रवार्त्तिकभाष्याणि रचितानि तैरेव शब्दार्थसम्बन्धाना नित्यत्वं समर्थितमिति तद्गौरवात् तेषां नित्यत्वे न संशयितव्यम्। प्रत्युत, तद्वचनविरोधेन शब्दार्थसम्बन्धानामनित्यत्वसाधकानाम् 'शब्दोऽनित्य. कृतकत्वात्' इत्याद्यनुमानानाम् 'नरकपालं शुचि प्राण्यङ्गत्वात्' इत्यनुमानस्यैवागमविरोधेन बाधितत्वेन नैव प्रामाण्यम्। तथा च

व्यवस्थितसाधुत्वेषु नित्येषु शब्देषु 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति'[1] इति सिद्धान्तेन साधुत्वज्ञानपूर्वकशब्दप्रयोगे धर्मोत्पत्तिबोधनात् साधुत्वज्ञानाय शास्त्रप्रणयनमावश्यकमिति व्यवस्थितसाधुत्वेषु शब्देषु शब्दानुशासनं स्मृतिशास्त्रं प्रवृत्तमिति।

तत्र सूत्रकृता "पृषोदरादीनि यथोपदिष्टम्"[2] इति सूत्रेण यथोपदिष्टस्य पृषोदरादित्वात् साधुत्वाभ्यनुज्ञानात्, "तदशिष्यं संज्ञाप्रमाणत्वात्"[3] इति सूत्रेण 'आपो दाराः' इत्यादिषु लोकावगमाल्लिङ्गवचननियम इव 'पञ्चालाः' इत्यादौ सज्ञानं संज्ञा इति संज्ञावगमस्तत्प्रमाणत्वात् लिङ्गवचननियमो भविष्यतीति तत् "लुपि युक्तवद्व्यक्तिवचने"[4] इति सूत्रमशिष्यम् इत्येवं युक्तवद्वचनप्रत्याख्यानात्, "लुब्योगाप्रख्यानात्"[5] "योगप्रमाणे च तदभावेऽदर्शनं स्यात्"[6] इति सूत्राभ्यां 'पञ्चालाः' इत्यत्र पञ्चालानां निवासो जनपद इत्येवम्भूतस्य योगस्यावयवार्थस्य प्रख्यानमवगमो नास्ति। यदि तर्हि सम्प्रति विनापि क्षत्रिययोगं देशविशेषे पञ्चालशब्दव्यवहारदर्शनं यद् भवति तद् न स्यात्। अतो योगानवगमात् तद्धितो नोत्पद्यते। ततश्च "जनपदे लुप्"[7] इति सूत्रमपि न शिष्यमित्येवं लुप्प्रत्याख्यानाच्च व्याकरणात् प्रागपि व्यवस्थितसाधुभावाः शब्दाः सन्तीति सूचितम्। सा च व्यवस्था शब्दानां नित्यत्व एवोपपद्यते नानित्यत्वे। तथा सति स्वयं कल्पितत्वा-च्छब्दानां शारक्रीडादिवदभ्युदयार्थत्वाभावेन व्यवहारमात्रार्थत्वापत्तौ, व्यवहारस्य च तैस्तैः पुरुषैः स्वस्वबुद्ध्यनुसारेण नवान् तद्विपरीतान् शब्दानुत्पाद्य निर्वोढुं शक्यत्वेन लोकावगमस्याव्यवस्थितत्वापत्तौ तदनुरोधेन सूत्रकृदुक्तायाः साधुत्व-व्यवस्थाया असामञ्जस्यापातात्।

## २६. शब्दनित्यत्वे एव शास्त्रारम्भस्योपपादनम्

शास्त्रारम्भादपि शब्दानां नित्यत्वं पाणिन्यादीनामभिमतम्। अन्यथा ये शब्दा एकस्मिन् काले साधव आसन् त एव शब्दा अपरस्मिन् कालेऽसाधवोऽभूवन् नवाश्च साधवः शब्दाः प्रादुर्भवितार इति साधुत्वस्याव्यवस्थया तद्बोधकं व्याकरणशास्त्रमप्यव्यवस्थं निरर्थकञ्च स्यात्। प्राकृतैर्मनुष्यैः कल्पितानां शब्दाना-मर्थबोधनमात्रफलत्वेन व्याकरणशास्त्रस्याभ्युदयार्थत्वाभावेन प्रणयनस्य वैयर्थ्य-मापद्यते। तथा चोक्तम्—

> नानर्थिकामिमां कश्चिद् व्यवस्थां कर्त्तुमर्हति।
> तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः॥[8]

---

१ म० भा० ६।१।८४। २. पा० सू० ६।३।१०९। ३. पा० सू० १।२।५३।
४. पा० सू० १।२।५१। ५. पा० सू० १।२।५४। ६. पा० सू० १।२।५५।
७. पा० सू० ४।२।८१। ८. वा० प० १।२६।

अयमाशय —अनादिवाचकत्वरूपस्य, पुण्यजनकतावच्छेदकधर्मविशेषरूपस्य वा व्याकरणाभिव्यङ्ग्यस्य साधुत्वस्यासाधुशब्दव्यावृत्तस्य सम्भवेन साधुशब्द-प्रयोगनियमस्य च सम्भव., तादृशं साधुमेवोपलक्षणीकृत्य साधूनेव प्रयुञ्जीत, नासाधूनिति वेदस्य कल्पयितुं शक्यता चेति समूलत्वाद् धर्मप्रयोजनिकेयं साधुत्वव्यवस्था नानर्थिकेति भाव [1] ।

केचित् तु—न शब्दमात्रस्य नित्यतां मन्यन्ते, किन्तु तदेकदेशस्य संज्ञादे. । एतच्च मतं संज्ञादिशब्दानां नित्यत्वं प्रति "तदशिष्यं संज्ञाप्रमाणत्वात्"[2] इत्येव-मादीनि सूत्राणि समर्थयन्ते। अत्र संज्ञाना प्रामाण्यवचनेन प्रागपि व्याकरणात् व्यवस्थितसाधुभावा एव संज्ञाशब्दा आसन्निति गम्यते ।

## २७. शक्तिस्वरूपविमर्शः

एवञ्च यै. प्रत्यक्षधर्मभिर्महर्षिभिस्तत्र तत्र प्रवचनावसरे सूत्रानुतन्त्रभाष्याणि प्रणीतानि तैरेव शिष्टैर्व्याकरणेऽपि सूत्रानुतन्त्रभाष्यैर्नित्याः शब्दार्थसम्बन्धा समाम्नाता. । तेषा च लोके व्यवस्थितं प्रामाण्यमिति नित्याः शब्दार्थसम्बन्धा इति स्थितम् । अयमेव च सम्बन्ध. शक्तिपदेनोच्यते ।

### ( क ) नैयायिकमतं तत्खण्डनञ्च

### [ अ ] इच्छायाः शक्तित्वासम्भवः

'अस्माच्छब्दादयमर्थो बोद्धव्य' इत्याकाराऽर्थविशेष्यिका' 'इदं पदमिममर्थं बोधयतु' इत्याकारा पदविशेष्यिका वेश्वरेच्छा शक्तिरिति नैयायिकोक्तं न युक्तम्, शक्तिग्राहकशिरोमणेर्व्यवहारात् तस्या ज्ञानस्यासम्भवात् । तथा हि—शक्तिज्ञानं वृद्धव्यवहाराज्जायते । यथा सर्गादौ प्रयोजकवृद्धेन 'घटमानय' इत्युक्ते तथा कुर्वन्तं प्रयोज्यवृद्धं पश्यता बालेनानुमीयते 'अयं प्रयोज्यवृद्धः घटानयनं मत्कार्यम्' इति ज्ञानवान्, घटानयनविषयकचेष्टावत्त्वात् । ततः प्रयोज्यवृद्धज्ञानम् 'घटमानय' इति वाक्यजम्, तद्वाक्यश्रवणाव्यवहितोत्तरमेव तत्प्रवृत्तेः' इत्यनुमानेन ज्ञानजनकत्वं वाक्ये निश्चीयते । तत आवापोद्वापाभ्यामन्वयव्यतिरेकेण पदादिष्वपि पदार्थ-विषयकबोधजनकत्वं निर्धार्यते । तच्च पदे वाक्ये वा बोधजनकत्वं बोधकारणीभूत-पदवाक्ययोरर्थेन सह सम्बन्धाभावे नोपपद्यते, विषयेण सह सम्बद्धानामेव प्रमाणानां चक्षुरादीना ज्ञानोत्पादकत्वदर्शनात् । न हि घटेन सह सम्बन्धं विनैव चक्षुरादि ज्ञानं जनयतीति सिद्धान्तात् । एवञ्च कारणत्वान्यथानुपपत्त्या कल्प्यमान. शक्तिरूपः कारणसम्बन्धो ज्ञानरूपकार्योत्पत्तेः प्रागेवापेक्ष्यते । तदानीञ्च नैयायिकाभिमतस्य 'ईश्वरेच्छारूपस्येच्छारूपस्य वा सम्बन्धस्यासिद्धत्वेन ज्ञाताया एव शक्तेर्बोधिकात्वेन शक्तिग्रहासम्भव. स्यात् ।[3]

---

१. लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम.—म० भा०, पस्पशा० पृ० ५० ।
२ पा० सू० १।२।५३ । ३. ल० म०, पृ० १७ ।

अयं भावः—शाब्दबोधात् प्राक् तत्कारणीभूतं शक्तिज्ञानमपेक्षितम्। बोधजननात् प्राक् 'बोधजनकत्वाभाववदिदं पदम्' इति निश्चयसत्त्वेन तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन 'इदं पदम्, एतदर्थविषयकबोधजनकतावत्' इत्यादिस्वरूपस्य बोधजनकत्वघटितेच्छात्मकस्य शक्तिपदार्थस्य ज्ञानमसम्भाव्यमेवेतितत्त्वम्।

## [ आ ] ज्ञानस्य शक्तित्वासम्भवः

किञ्च, ईश्वरेच्छाया ईश्वरज्ञानस्य वा शक्तित्वमित्यत्रैकतरपक्षपातियुक्तेरभावादुभयस्वीकारे तार्किका गौरवपराहता भवेयुः। प्रत्युत, जानाति, इच्छति, ततो यतते इति क्रमदर्शने तु ज्ञानस्य शक्तित्वे प्राथम्यमेव विनिगमकम्। अथ च 'दण्डात् घटो जायताम्' इत्यादीच्छाविषयत्वमेव दण्डादौ घटादिकारणत्वं स्यात्। तथा चेच्छातिरिक्तस्य लोकप्रसिद्धस्य कारणत्वरूपधर्मस्य विलयः स्यात्। तस्मादीश्वरेच्छा कारणत्वस्य नियामिकैव, न तु तदवच्छेदिकेत्याशयः। यदि तु दण्डादौ स्वरूपसती शक्तिः कार्योत्पादिका, शब्दनिष्ठा तु ज्ञातैवेति वैलक्षण्यदर्शनादत्रातिरिक्तशक्तिस्वीकारे न किञ्चिद् बाधकमित्युच्यते, तदा तु यथा प्रत्यक्षस्थले संयोगसंयुक्तसमवायादिसन्निकर्षेण घटादिना सम्बद्धानामेव चक्षुरादीनां प्रत्यक्षप्रमाजनकत्वम्, न तु जनकत्वसम्बन्धेन जनकत्वघटितेच्छारूपसम्बन्धेन वा, तथा शब्दस्यापि प्रमाणत्वेन तदतिरिक्तसम्बन्धेनार्थेन सह सम्बद्धस्यैव शब्दज्ञानजनकत्वमुचितम्। अन्यथा 'पर्वतो वह्निमान् धूमात्' इत्याद्यनुमितिस्थलेऽपि हेतुसाध्ययोः 'धूमज्ञानजन्यज्ञानविषयो वह्निर्भवतु' इतीच्छाविषयत्वेन वह्निविषयकबोधजनकत्वरूपेण वा सम्बन्धेन निर्वाहे हेतुसाध्ययोर्नैयायिकाभिमतव्याप्तिरूपसम्बन्धोच्छेदापत्तिः।

अपि च शक्तेः पदपदार्थयोः सम्बन्धरूपत्वेन इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवः।

इदमत्र तात्पर्यम्—'सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितः' इति, 'द्विष्ठः सम्बन्धः' इति च, 'विशिष्टबुद्धिनियामकः[१]' इति चाभियुक्तव्यवहारात् यो ह्याधाराधेयभावनियामकः सम्बन्धिभिन्नः सन्नुभयस्मिन्नपि सम्बन्धिनि तिष्ठति, यथा घटादिभूतलाद्योः संयोगादिः, स एव सम्बन्धः। प्रकृते चेच्छीयविषयताश्रयबोधनिष्ठजन्यतानिरूपितजनकत्वाख्यविषयतासम्बन्धेन 'अयमर्थः अयं शब्दो वेच्छावान्' इति व्यवहारादर्शनात् तस्याः सम्बन्धत्वासम्भवः। ज्ञानेच्छयोर्गुणत्ववत् शब्दस्यापि च गुणत्वेन तयोः शब्दाश्रयत्वं गुणे गुणानङ्गीकारदिति न्यायेन कल्पयितुं न शक्यते।

---

१. ल० म०, पृ० १७।

## ( ख ) दीक्षितमतं तत्खण्डनञ्च

'जनकता शक्तिः' इति पक्षे बोधजनकतायाः शब्दवदर्थस्यापि विषयविधया शाब्दबोधकारणत्वेन पदेऽर्थे च सत्त्वेऽपि तयोः परस्परं जनकतारूपस्य सम्बन्धस्य दुरुपपादत्वम्। ज्ञानरूपकार्यं प्रति विषयज्ञानकर्त्रोरुभयोरपि कारणत्वे सत्यपि नहि जनकत्वसम्बन्धेन विषयविशिष्टः कर्त्ता, कर्त्तृविशिष्टो विषयो वेति विशिष्टबुद्धि-दर्शनं भवति, अर्थपदयोर्जनकत्वसम्बन्धस्य दुरुपपादत्वात्।

## ( ग ) नागेशमतम्

### [ अ ] शक्तिस्वरूपम्

तस्माद् वाच्यवाचकभावपदव्यपदेशो निरुक्तेच्छादिभिन्नः पदपदार्थयोः सम्बन्धः शक्तिः। तत्र वाचकत्वं वाच्यत्वञ्च न क्रमेण बोधजनकत्वरूपं बोधविषयत्व-रूपञ्च, किन्त्वखण्डोपाधिरूपं पदार्थान्तरम्[1]। अन्यथा पूर्वोक्तदोषापत्तिर्वज्रलेपायेत। स च वाच्यवाचकभावः शब्दार्थोभयनिष्ठ एव। तथाविधशक्तिज्ञापकम् 'योऽयं शब्दः, सोऽर्थः', योऽर्थः स शब्दः' इत्याकारकेतरेतराध्यासमूलकं तादात्म्यम्[2]। तदेव संकेतः। तादात्म्यस्य पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः। सम्बन्ध-विशेषस्यैव वास्तविकभेदविशिष्टारोपिताभेदरूपस्य तादात्म्यस्य सम्बन्धत्वाभावात् तस्य न शक्तित्वम्। न च तादात्म्यघटकभेदस्याभेदस्य वा सम्बन्धत्वं कुत्रापि दृष्टम्[3]। नीलो घट इत्यादौ सम्बन्धपदार्थघटकसम्बन्धिभिन्नत्वाभावादभेदस्यापि सम्बन्धत्वं नास्ति। ज्ञातस्यैव सकेतस्य शक्तिबोधकत्वम्। तथा पाणिन्यादिस्मार्तसंकेतस्यैव वाचकतानियामकत्वम्, न त्वाधुनिकस्य। एवञ्चाधुनिकसंकेतस्थले द्वादशेऽह्नि[4] क्रिय-माणानामस्थले च लक्षणैव।[5]

### [आ] कौस्तुभकारादिमतं तत्खण्डनञ्च

घटादिविषयकबोधजनकघटादिपदाना सामर्थ्यमेव शक्तिरिति कौस्तुभ-कारादिप्राचीनवैयाकरणानां मतं न विचारकोटिमाटीकते। यतः शक्तेर्भिन्न एव सम्बन्धः शक्ते कार्यजनकत्वनियामकत्वेन दृष्टः। यथा दीपगतप्रकाशकत्वशक्तेः कार्यजनकत्वे दीपवस्तुनोः प्रकाशकत्वशक्त्यतिरिक्तसंयोगादिसम्बन्धसत्त्व एव वस्तुप्रकाशकत्वम्, नान्यथा। तथा घटपदादिशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्व एवार्थबोधकत्वम् नान्यथा। तदाह हरिः—

> उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
> शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः[6] ॥

---

१ ल० म० पृ० २३। २. ल० म० पृ० २४। ३. ल० म० पृ० २५।
४. ल० म० पृ० २५। ५ ल० म० पृ० २५। ६. वा० प० ३।३।६।

'यत्रोपकारः = उपकार्योपकारयोरुपकारस्वभावः सम्बन्धोऽस्ति' तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारको गुणानामपि द्रव्याश्रितत्वनियामकः सम्बन्धः ( ? ) इति तदर्थः' इति हेलाराजः।

स च सम्बन्धः पदे वाक्ये च। तथा च न्यायभाष्यकारः—"समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्, वाक्यलक्षणाया वाचोऽर्थलक्षणम्[1]" इति।

अत्र वाक्यलक्षणाया वाच इति कथनेन हि पदेष्विव वाक्येष्वपि ऐश्वरः समयः इति स्पष्टमेवोक्तम्। आकाङ्क्षादीनामपि वाक्यार्थनिर्णायकत्वात् तेऽपि वाक्यसंकेतग्राहकाः।

## [इ] तादात्म्येऽनुपपत्तिनिरासः

शब्दार्थयोस्तादात्म्येऽग्निशब्दोच्चारणे मुखदाहापत्तिः, 'अयमस्य वाचकः' इति व्यवहारानुपपत्तिश्च नाशङ्कनीया, यतः 'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्' तादात्म्यम्। तत्राभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः। भेदस्योद्भूतत्वविवक्षया 'अस्यार्थस्यायं वाचकः, तस्य वाचकः प्रणवः'[2] इत्यादौ षष्ठी। अभेदस्योद्भूतत्वविवक्षाया तु "वृद्धिरादैच्"[3] [ १।१।१ ] इत्यादौ प्रथमा। अत एवार्थे शब्दधर्मत्वव्यवहारः। अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहारो न स्यात्। नाप्यत्यन्ताभेदे स, घटे स्वधर्मत्वव्यवहाराभावात्। अयमध्यास आदिव्यवहारकृदीश्वरकृत एव। एतच्च "स्थितोऽस्य वाचकस्य वाच्येन सह सम्बन्धः, संकेतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः संबन्धः संकेतेनावद्योत्यते 'अयमस्य पिता' अयमस्य पुत्रः"[4] इत्यादिना पातञ्जलभाष्य एव स्पष्टम्। हरिरप्याह—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[5]॥

सम्बन्ध [न्धि] शब्दे सम्बन्धो योग्यतां प्रति योग्यता।
समयाद्योग्यतासंविन्मातापित्रादियोगवत्[6]॥

सति प्रत्ययहेतुत्वं सम्बन्ध उपपद्यते।
शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते[7]॥

---

१. न्या० भा० २।१।५५। २. यो० सू० स० पा० २७। ३. पा० सू० १।१।१।
४. पा० यो० भा० १।२७। ५. वा० प० ३।३।२६। ६. वा० प० ३।३।३१।
७. वा० प० ३।३।३७।

अत एवैतदुपक्रमे—

ज्ञानं प्रयोक्तुरर्थश्च स्वरूपञ्च प्रतीयते।
शब्दैरुच्चारितैस्तेषां सम्बन्धः समवस्थितः[1]॥

इत्यादिना शब्दार्थज्ञानानामध्यासस्योपपादनं कृतम्। 'अयं सास्नादिमानर्थो गौः' इत्यर्थकात् 'अयं गौः' इत्येवं लोकव्यवहारादुक्तं तादात्म्यं सम्बन्ध इत्यर्थः।

वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि बौद्धम्, तयोरभेद। न च बौद्धे दाहादिशक्तिमत्त्वम्।

शब्दार्थयोस्तादात्म्यादेव पुरोवर्तिडित्थं पश्यतो नामजिज्ञासया 'कोऽयम्' इति प्रश्ने 'डित्थोऽयम्' इत्युत्तरे सन्निहितदेशपिण्डमुद्दिश्य 'डित्थ'शब्दविधेयताप्रतीतिः सङ्गच्छते।

### (ई) तादात्म्यभेदात् शब्दार्थयोर्भेदः

तादात्म्यमूलकस्य वाच्यवाचकभावापरपर्यायस्य शक्तित्वेऽर्थभेदात् तत्तादात्म्यापन्नशब्देषु भेदौचित्येनार्थभेदाच्छब्दभेद इत्युपद्यते। समानाकारत्वमात्रेण तु 'एकोऽयं शब्दो नानार्थः' इति व्यवहार। शक्तिनिरूपकार्थशक्त्याश्रयशब्दोभयभेदात् तादात्म्यभेदः शब्दभेदश्च[2]। तदुक्तं न्यायकुसुमाञ्जलौ—"शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रम" इति। [ न्या० कु० १।७ ]।

## २८. अपभ्रंशेष्वपि शक्तिसाधनम्

सा च वाच्यवाचकभावापरपर्यायरूपा शक्तिः साधुषु शब्देष्विवापभ्रंशेष्वपि, शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां स्तन्यपाने जन्मसमये प्रवृत्तिः। अन्यथा इष्टसाधनत्वज्ञानाभावेन तत्र प्रवृत्तिर्न स्यात्। तथैव तिरश्चामपि विषये ज्ञेयम्।

### (क) मीमांसकनैयायिकमतयोर्निरासः

साधुशब्दस्मरणं विनापि बोधानुभवात्, तद्वाचकसाधुशब्दमजानता बोधानापत्तेश्च, साधुशब्देभ्यः साधूनां स्मरणं भवति, ततश्च बोध इति न कल्पनीयम्। तदर्थज्ञापकत्वेन स्मरणं तु नार्थोपस्थापकम्, शक्तताऽवच्छेदकानुपूर्व्यग्रहात्, तद्वाचकसर्वनामस्मरणाननुभवाच्च, उच्चारितस्यैव बोधकत्वेन स्मृतसाधुतो बोधासम्भवाच्च।

### (ख) आर्यम्लेच्छाधिकरणस्याशयः

अत एव स्त्रीशूद्रबालानां प्रयुक्ते साधौ अर्थसंशये तदपभ्रंशेन निर्णयो भवति। आर्यम्लेच्छाधिकरणस्य त्विदं तात्पर्यम्—तत्र हि यद्यपि आर्याः यवशब्दं दीर्घशूके

---

१. वा० प० ३।३।१।   २. द्र० म० भा० १।१।७।

प्रयुञ्जते तमेव च बुध्यन्ते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते तमेव च बुध्यन्ते। तथाप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरत्वेवेति सिद्धान्तितम्[१]। प्रमाणानां सम्बद्धार्थबोधकत्वेन तेषामपि अर्थेन सम्बन्ध आवश्यक[२]। अत एव 'गौ' इत्यस्य शब्दस्यार्थे बहवः 'गावी' 'गोणी' 'गोपोतलिका' इत्यादयोऽपभ्रंशा वर्तन्त इत्यर्थकम् 'गौः' इत्यस्य शब्दस्य गाव्यादयोऽपभ्रंशा इति भाष्यम्[३] आञ्जस्येन संगच्छते।

## २९. अपभ्रंशानामपि प्रातिपदिकत्वम्

अपभ्रंशेषु शक्तिस्वीकारे तेषामर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकसंज्ञा भवत्येव। अत एव पस्पशाह्निके "एवं हि श्रूयते 'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः, ते तत्र भवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे कर्मणि पुनर्नापभाषन्ते[४]" इति भाष्ये उक्तम्। तत्र यर्वाणस्तर्वाण इति णान्ताज्जसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम्। अत एव रुत्वोत्वादि, बभूवुरित्यनेन सामानाधिकरण्यञ्च। प्रकृतिप्रत्यययोरुभयोरपि शास्त्रविषयत्व एव साधुत्वम्, न त्वन्यतरस्येति केचित्।

## ३०. अपभ्रंशानां प्रातिपदिकत्वाभावः

नागेशस्तु "साध्वनुशासनेऽत्र शास्त्रे"[५] इति भाष्योक्तेरर्थवत्त्वेन साधूनामेव संज्ञाविधावुद्देश्यत्वमिति नासाधुषु प्रातिपदिकसंज्ञा। यर्वाणस्तर्वाण इत्यादौ सुबप्यसाधुरेवेत्याह।

## ३१. अपभ्रंशाद् बोधे भर्तृहरिमतम्

"ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः[६]।"

"अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः[७]॥

इति कारिकाभ्यां साधुस्मरणादसाधुभ्यो बोधो भवतीति हरिमतं प्रतीयते। तत्त्वं सुधियो विभावयन्तु।

## ३२. शक्तेस्त्रयो भेदाः

सा शक्तिस्त्रिधा—रूढिः, योगः, योगरूढिश्च।

---

१ द्र० शा० भा० १।३।९ २. ल० म० पृ० ६९। ३. म० भा० पस्पृ० पृ० २५
४. म० भा० पस्प० ५६ ५. म० भा० पस्प० पृ० १।१।१ ६. वा० प० १।१५१
७. वा० प० १।१५३।

(क) रूढिशक्तेः स्वरूपम्

शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्व तत्पदे सा तदर्थनिरूपिता रूढिः, यथा मणिनूपुरादौ। शब्दार्थकभौवादिकमणधातोरौणादिके इन्प्रत्यये 'मणि.' इति। एवं 'णू स्तुतौ' 'नुवनं नू, सम्पदादित्वात्[1] क्विपि 'नू.' इति, 'पुर अग्र गमने' अस्मात् "इगुपध[2]" इति कप्रत्यये 'पुरः' इति। नुव. पुरो नूपुर। नहीमौ शब्दौ शब्दकर्तृरूपार्थ स्तुतिसम्बन्ध्यग्रगमनकर्तारं वा बोधयत. किन्तु रत्नं भूषणविशेषं वेति रूढिशक्तिमत्त्वमनयो.।

(ख) योगशक्ते स्वरूपम्

शास्त्रकल्पितावयवार्थमात्रबोधे योगशक्तिः[3], यथा पाचकादौ। अत्र पचधात्वर्थो विक्लित्यनुकूलव्यापारः, ण्वुल्प्रत्ययार्थ आश्रय। एवञ्च विक्लित्यनुकूलव्यापाराश्रयः पाचक इत्यस्यार्थः। अश्वगन्धापदमोषधिविशेषबोधे रूढम्, अश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढमित्युच्यते।

ननु पङ्कजादिपदात् कुमुदादिबोधवारणाय रूढे. प्रतिबन्धकत्वस्वीकारात् 'अश्वगन्धा'-शब्दात् कथं वाजिशालाबोध इति चेत्, न, सति प्रकरणादिके योगार्थबोधस्वीकारात्, 'रूढिर्योगापहारिणी' इत्यस्य प्रकरणाद्यभावे स्वीकारात्। रूढेर्बलवत्त्वे बीजं त्ववयवार्थानुसन्धानमूलकयौगिकार्थापेक्षया रूढ्यर्थस्य प्रथमोपस्थितत्वमेव। यत्र तु यौगिकार्थस्य प्रथमोपस्थितत्वं तत्र तस्यैव बलवत्त्वम्। यथा "वाजिभ्यो वाजिनम्[4]" इत्यत्र प्रकरणादिना विश्वेदेवाना प्रथमोपस्थितत्वात् 'वाजमन्नमामिक्षारूपमस्ति येषाम्' इति योगाद् बोधो न वाजिनोऽश्वस्य।

( ग ) योगरूढिशक्ते स्वरूपम्

यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये बोधकत्वं सा योगरूढि.। यथा पङ्कजादिपदे। तत्र पङ्कजनिकर्तृ पद्मम् इति बोधः। क्वचित् तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य बोधः, यथा 'भूमौ पङ्कजमुत्पन्नम्, इत्यादौ। क्वचिच्च केवलयोगार्थस्य, यथा 'कह्लारकैरवमुखेष्वपि पङ्कजेषु[5], इत्यादौ।

## ६ ३ शक्तिविषयकं भूषणकारादिमतम्

कौण्डभट्टस्तु—बोधजनकता शक्ति.। तथा चोक्तम्—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दाना सम्बन्धो योग्यता तथा[6] ॥

स्वम् = इन्द्रियम्, तज्जन्यं घटादिज्ञानम्, तद्विषयेषु घटादिषु इत्यर्थः। एवञ्चेन्द्रियजन्यं ज्ञानरूपं यत्कार्य तद्गतं सविषयकत्वं कारणेष्विन्द्रियेषु आरोप्योक्तम्

१. सम्पदादिभ्य क्विप् का० वा० १।३।६४। २. पा० सू० ३।१।१३५।
३ ल० म० पृ० ८६। ४ मै० स० १।१०१। ५. ल० सं० पृ० ८६ उद्धृतम्।
६. वा० प० ३।३।२९।६।

स्वविषयेष्विति। तेन ज्ञानेच्छायत्नसंस्काराणामेव सविषयकतया 'इन्द्रियाणां स्वविषयेषु' इत्युक्तिरसङ्गता नास्ति। इन्द्रियाणामित्यत्र निष्ठत्वं षष्ठ्यर्थः। स्वविषयेषु इत्यत्र निरूपितत्वं सप्तम्यर्थः। योग्यता = कारणता। एवञ्च इन्द्रियनिष्ठा इन्द्रियविषयघटादिनिरूपिता या कारणता, सा यथाऽनादिस्तथा सकलशब्दनिष्ठा घटादिनिरूपिता योग्यताऽपि अनादिः। घटादिज्ञानगतकार्यत्वारोपेण घटादिनिरूपितेन्द्रियनिष्ठा कारणतेत्युक्तिः। अन्यथा घटादेरिन्द्रियजन्यत्वाभावेन तदसङ्गतिः स्पष्टैव[1]।

वस्तुतस्तु घटादिविषयकचाक्षुषादिज्ञाननिरूपिता योग्यता (कारणता) इन्द्रियनिष्ठा यथा अनादिस्तथा शब्दनिष्ठाऽर्थविषयकज्ञाननिरूपिता योग्यताऽपि अनादिः। इन्द्रियनिष्ठचाक्षुषादिकारणतायामनादित्वञ्च इन्द्रियजन्यज्ञानप्रतियोगिक-ध्वंसव्याप्यत्वम्। व्याप्यव्यापकभावश्च कालिकसम्बन्धेन ग्राह्यः। यदा यदा चक्षुरादीन्द्रियनिष्ठा ज्ञानजनकता, तदा तदा तज्ज्ञानपूर्वकालिकतदिन्द्रियजन्यज्ञानध्वंस इति ध्वंसस्य व्यापकत्वम्, ज्ञानजनकतायाश्च व्याप्यत्वम्। इन्द्रियनिष्ठप्राथमिक-ज्ञानजनकताकाले सर्गारम्भे तदिन्द्रियजन्यपूर्वज्ञानाभावेन तद्ध्वंसस्याभावाद् व्यभिचारो न शङ्कनीयः, तत्पूर्वसर्गकालिकतादृशज्ञानध्वंसस्य तदानीमपि वक्तुं शक्यत्वात्। प्रागभावाप्रतियोगित्वं वाऽनादित्वम्। ज्ञानजननसामर्थ्यरूपाया जनकताया नित्यतया प्रागभावाप्रतियोगित्वाक्षतेः। इयञ्च योग्यतारूपा शक्तिः पदार्थान्तरम्, न त्वीश्वरेच्छारूपा, ईश्वरेच्छाज्ञानयत्नानामन्यतमरूपत्वे मानाभावेन सर्वरूपत्वे गौरवात्। शब्दकौस्तुभकारोऽपि—घटादिबोधजननसामर्थ्यमेव घटादि-पदानां शक्तिरिति। सैव शब्दार्थयोः सम्बन्धो योग्यता[2]।

ननु संकेतज्ञानं विनोक्तशक्तिग्रहासम्भवेनावश्यापेक्षणीयतया तस्यैव शक्तित्व-मस्तु न त्वनादिभूतस्य बोधकारणत्वस्य, तस्याधुनिकदेवदत्तादिपदेऽभावात् देव-दत्तादिपदेऽप्यनादित्वविशिष्टबोधकारणत्वस्वीकारे पित्रादिसंकेतज्ञानस्य तद्ग्राहकतया पित्रादिसंकेतज्ञानाभावेऽपि देवदत्तादिपदाच्छाब्दबोधापत्तिः स्यात्। स च संकेत आधुनिके पित्रादेः, गवादौ चेश्वरस्येति चेत्, समाधीयते—अज्ञानसंकेतरूपशक्ति-कादपि शब्दादर्थबोधापत्तिभिया संकेतो न स्वासाधारणधर्मेण संकेतत्वेन स्वरूपेण हेतुः। नापि जनकाजनकसाधारणरूपेण ज्ञातः, प्रमेयत्वादिना संकेतज्ञानेऽपि बोध-प्रसङ्गात्। नापि ईश्वरीयसंकेतत्वादिना विशेषधर्मेण संकेतज्ञानं हेतुः, गवादिपदे-ष्वीश्वरसंकेतस्यैव सम्भवेनेश्वरानङ्गीकर्तृमते तत्र संकेतकर्तुरभावात्, संकेतत्वेन ज्ञानाभावेऽपि बोधदर्शनाद् व्यभिचारात्।[3]

---

१ वै० भू० सा० पृ० ३१६।  २. वै० भू० सा० रा० नि० का० ३७ उद्धृतम्।
३. वै० भू० सा० पृ० ३१६–३१९।

यदपि, यथा कस्यचित् पुरुषस्य घटरूपार्थस्य घटत्वेन ज्ञानाभावेऽपि ततो जलाहरणदर्शनेन जलाहरणकरणत्वेन घटस्य ज्ञानमस्त्येव । एवं संकेत-कर्त्तुरीश्वरस्य ज्ञानाभावे तत्कार्यरूपसंकेतस्य मीमासकानां संकेतत्वरूपविशेष-धर्मेण ज्ञानाभावेऽपि पदविशेष्यकबोधजनकत्वप्रकारकज्ञाने पदस्य विशेष्य-तया विशेष्यितासम्बन्धेन शाब्दबोधकारणीभूतोक्तज्ञाने पदस्य विशेषणतया भानेन तत्र पदे ज्ञाननिष्ठशाब्दबोधीयकारणतावच्छेदकत्वस्य विशेष्यित्वरूप-विषयित्वसम्बन्धावच्छिन्नस्य वक्तुं शक्यतया तत्तदर्थविषयकशाब्दबोधनिष्ठजन्यता-निरूपितबोधजनकत्वप्रकारकपदविशेष्यकज्ञाननिष्ठा या जनकता तादृशजनकता-निरूपिता विशेष्यित्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तादृशावच्छेदकत्वप्रकारकं ज्ञानम् 'तादृशबोधजनकतावच्छेदकतावद् गवादिपदम्' इति। एवञ्च गवादिपद-निष्ठेन तादृशावच्छेदकत्वेन संकेतज्ञानस्य कारणत्वं नानुपपन्नमिति। तदपि न संकेतज्ञानस्य 'इदं पदमर्थधीजनकतावच्छेदकवत्' इत्याकारकस्यार्थधीजनकता-वच्छेदकत्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वकल्पनागौरवापेक्षया 'इदं पदमर्थ-धीजनकम्' इति ज्ञानस्यैवार्थधीजनकतात्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वे लाघवात् ।

वस्तुतस्तु—अर्थविषयकबोधजनकत्वं न शक्ति , शाब्दबोधं प्रति शक्तिज्ञानस्य हेतुत्वावश्यकतया शक्तिज्ञानं कारणमित्यस्य 'बोधजनकत्वज्ञानं कारणत्वम्, इत्यर्थकतया शक्तिज्ञाननिष्ठशाब्दबोधजनकताया. शक्तिज्ञाने विशेषणतया भासमानानामवच्छेद-कत्वं सर्वसम्मतम् । तच्च न सिद्ध्येत्, अवच्छेद्या बोधजनकताऽवच्छेदिकापि शक्तिज्ञाने विशेषणीभूता बोधजनकतेवेत्यात्माश्रयेण स्वस्यैव स्वावच्छेदकत्वा-सम्भवात् ।

किञ्च, प्रयोजकवृद्धेन प्रयुक्तं वाक्यं श्रुत्वा घटानयनं कुर्वन् प्रयोज्यवृद्धः 'घटानयनमत्कर्त्तव्यम्' इति ज्ञानवान्, घटानयनविषयकप्रवृत्तिमत्त्वात्, मदीयज्ञानवत्, इति प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेनानुमितज्ञानस्य कारणाकाङ्क्षाया कारणान्तरानुपलब्ध्या 'घटमानय' इति वाक्यमेव तत्कारणत्वेन निश्चिनोति। वाक्यस्यार्थेन सह सम्बन्धाभावे तद्विषयकबोधजनकत्वं नोपपद्यत इति बोधजनकत्वा-नुपपत्त्या कल्प्यमानस्य शक्तिरूपसम्बन्धस्यापि बोधजनकत्वरूपत्वं न सम्भवति। यथा भोजनं विनाऽनुपपद्यमानपीनत्वस्य पीनत्वं नोपपादकम्, किन्तु तद्भिन्नं रात्रिभोजनरूपमेव। एवं बोधजनकत्वानुपपत्त्या कल्प्यमानः शब्दार्थयोः सम्बन्धः पदार्थान्तरमेव, न तु बोधजनकत्वरूपः । अत एव मीमासकैर्बोधजनकतावच्छेदक-धर्मविशेषात्मिका शक्तिरिति स्वीकृतम् । अन्यत् सर्वं नागेशवद्बोध्यम् ।

## द्वितीयोऽध्यायः

### अपोहविचार

### १. अपोहस्वरूपनिरूपणम्

अथ कोऽयमपोहो नाम ! किमिदमन्यस्मादपोह्यते, अस्माद् वान्यदपोह्यते, अस्मिन् वान्यदपोह्य इति व्युत्पत्त्या विजातीयव्यावृत्तं बाह्यमेव विवक्षितम्, बुद्ध्याकारो वा ! अथवा अपोहनमपोह इत्यन्यव्यावृत्तिमात्रम्—इति पक्षत्रयम् ।

तत्रापोहनाम्ना विधेरेव विवक्षितत्वादाद्यौ पक्षौ विलयं प्राप्तौ, प्रतीतिबाधितत्वाच्चान्त्योऽपि शशशृङ्गायेत ।

अयं भाव.—अपोह शब्दलिङ्गाभ्या प्रकाश्यत इति व्यवस्थाऽऽचार्यैः क्रियते, सा चानुभवबाधिता । तथा हि—'इह महीधरोद्देशे वह्निरस्ति' इति शब्दाल्लिङ्गाद् वा प्रतीतिर्विधिरूपमेवोल्लिखन्ती लक्ष्यते, न 'अनग्निर्न भवति' इति निवृत्तिमात्रमामुखयन्ती, यच्चानुभवबाधितं न तत्र प्रमाणान्तराणा प्रवेश., सर्वप्रमाणपौरुषस्य तत्रैव विश्रमात्, तत्प्रसूतेस्तत्फलत्वाच्च । न हि प्रत्यक्षोपकारनिरपेक्षा प्रमाणान्तरप्रसूति· । यावन्न तदुपनीतसाधनार्थक्रियानुभव·, तावत् प्रमाणानुसारी प्रमाणान्तरप्रसूतिमात्रेण न कृतार्थः । तस्मात् तदनपेक्षाया-मसामर्थ्यवैयर्थ्यग्रस्तं प्रमाणान्तरं स्वयमेव न किञ्चिदिति न तेन साधिते बाधिते वावकाशमासादयति । तत् कथमपोह. शब्दादिगोचरः ।

अथ यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्प., तथापि निवृत्तपदार्थोल्लेख एव निवृत्त्युल्लेख. । न ह्यनन्तर्भावितविशेषणप्रतीतिर्विशिष्टप्रतीतिः । ततो यथा सामान्यमहं प्रत्येमीति विकल्पाभावेऽपि साधारणाकारपरिस्फुरणाद् विकल्पबुद्धिः सामान्यबुद्धिः परेषाम्, तथा निवृत्तप्रत्ययाक्षिप्ता निवृत्तिबुद्धिरपोहप्रतीतिव्यवहारमातनोति चेत्, उच्यते—साधारणाकारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था, तथा किमायातमस्फुरदभावाकारे चेतसि निवृत्तिव्यवस्थायाः ! ततो निवृत्तिमहं प्रत्येमीत्येवमाकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात्, तर्हि को नाम निवृत्तिप्रतीतिस्थितिमपलपेत् ! अन्यथाऽसति प्रतिभासे तत्प्रतीतिव्यवहृतिरिति गवाकारेऽपि चेतसि तुरगबोधोऽस्तु । यद्यपि विशेषणतयाऽन्तर्भूता निवृत्तिप्रतीतिरुच्यते, तथापि यद्यगवापोढ इतीदृशाकारो विकल्पः, तदा विशेषणतया तदनुप्रवेशो भवतु, किन्तु गौरिति प्रतीतिः । तदा च सतोऽपि निवृत्तिलक्षणविशेषस्य तत्राननुकलनात् कथं तत्प्रतीतिव्यवस्था ?

## २. अपोहस्य शब्दार्थत्वसमर्थनम्

तदेतत्फलितम्—स्फुरतोऽपि विधेर्न विषयस्थितिरपोहस्य पुनरस्फुरतोऽपीति क एष न्याय: ? एवञ्च निश्चयैर्यन्न निश्चीयते रूपं तत्तेषां विषय: कथम् ? न च विकल्पेऽस्फुरतस्तेन निश्चयनं यद्विधिरूपं स्फुरितमन्तर्मात्राया तस्य परापोहोऽप्यस्तीति तत्प्रतीतिरुच्यते। तत्रापि सम्बन्धमात्रमपोहस्य, विधिस्तु साक्षान्निर्भासीति न पूर्वदोषान्मुक्ति.। अपि चैवमध्यक्षस्याप्यपोहविषयत्वमनिवार्यम्, एकव्यावृत्तोल्लेखिनोऽखिलान्यव्यावृत्तिमीक्षमाणस्य विशेषतो विकल्पात्। तस्माद् विध्याकाराग्रहाध्यक्षवद् विकल्पस्यापि विधिविषयत्वमेव, नान्यापोहविषयत्वमिति नास्ति अपोह: शब्दार्थ इति चेत्, अत्रोच्यते—अपोहवादिभिरपहपदेन न केवलो विधिर्विवक्षित., न चापि अन्यव्यावृत्तिमात्रम्, अपि त्वन्यापोहविशिष्टो विधि: शब्दानामर्थ.। एवञ्चैकैकपक्ष आपाद्यमानाना दोषाणां नास्त्यवकाश:।

गो: प्रतीतौ न तदात्मापरात्मेति सामर्थ्यादपोह. पश्चान्निश्चीयत इति विधिवादिना सिद्धान्त, अन्यापोहावगतौ वा सामर्थ्यादन्यापोहोऽवधार्यत इति प्रतिषेधवादिना सिद्धान्तश्च न समीचीनतामाधत्ते, आद्ये तथा प्रतिपत्तिक्रमादर्शनात्। न हि कश्चन प्रतिपत्ता विधिं प्रतिपद्यार्थापत्तिन्यायेन पुनरपोहमवगच्छति। अपोहं वाऽवगत्यान्यापोढम्। अतो गो: प्रतिपत्तिरित्यन्यापोहप्रतिपत्तिरुच्यते।

यद्यपि चान्यापोहशब्दानुल्लेख उक्त:, तथापि नाप्रतिपत्तिरेव प्रकारीभूतस्यान्यापोहस्य, अगवापोह एव गोशब्दस्य निवेशितत्वात्। उक्तञ्च—

"निवेशनं च यो यस्माद् भिद्यते विनिवर्त्य तम्" इत्यादि।

यथा नीलोत्पले प्रयुक्तादिन्दीवरशब्दान्नीलोत्पलप्रतीतौ तदैव नीलिमस्फुरणमनिवार्यं तथा गोशब्दादप्यगवापोहे निवेशिताद् गोप्रतीतौ तुल्यकालमेव विशेषणत्वादगवापोहस्फुरणं निवारयितुं न शक्यते। यथा प्रत्यक्षस्य प्रसह्यरूपाभावग्रहणमभावविकल्पोत्पादनशक्तिरेव, तथा विधिविकल्पानामपि तदनुरूपानुष्ठानदानशक्तिरेवाभावग्रहणमभिधीयते। पर्युदासरूपाभावग्रहणं तु नियतस्वरूपसंवेदनमुभयोरविशिष्टम्। अन्यथा यदि शब्दार्थप्रतिपत्तिकाले कलितो न परापोह, कथमन्यपरिहारेण प्रवृत्ति: ? ततो गा बधानेति प्रेरितोऽश्वादीनपि बध्नीयात्।

## ३. दर्शनान्तरीयमतनिरासपुरस्सरं स्वमतव्यवस्थापनम्

यदपि कैश्चिदुक्तम्—जातिमत्यो व्यक्तयो विकल्पाना शब्दाना च विषय:। तासां च तद्वतीना रूपमतज्जातीयपरावृत्तमित्यतस्तदवगतेर्न गा बधानेति नोदितोऽश्वादीन् बध्नाति। तदनेन प्रत्याख्यातम्। यतो जातेरधिकाया. प्रक्षेपेऽपि व्यक्तीना

रूपमतज्जातीयपरावृत्तमेव चेत्, तदा तेनैव रूपेण शब्दविकल्पयोर्विषयीभवन्तीनां कथमतद्व्यावृत्तिपरिहारः ? अथ जातिबलादेवान्यतो व्यावृत्तम्। अस्तु जातिबलात् स्वहेतुपरम्पराबलाद् वान्यव्यावृत्तम्। सर्वथापि व्यावृत्तप्रतिपत्तौ व्यावृत्तिप्रतिपत्तिरस्त्येव।

येऽप्यगवापोहे गोशब्दसङ्केतविधावन्योन्याश्रयमापादयन्ति, तेऽपि सामान्ये सामान्यवति वा संकेते कथमात्मानं दोषविरहितं मन्यन्ते। न हि सामान्यं सामान्यमात्रमिष्टम्, अन्यत्रापि गोशब्दसंकेत. प्रसज्येत। किन्तु गोत्वसामान्यमिष्टम्। तावता च गोत्वसामान्ये तद्वति वा गोशब्दसङ्केत इत्यर्थनिष्ठायां स एव दोषः, गवापरिज्ञाने गोत्वसामान्यपरिज्ञानात्, गोत्वसामान्यापरिज्ञाने गोशब्दवाच्यापरिज्ञानात्।

तस्मादेकपिण्डदर्शनपूर्वको यः सर्वव्यक्तिसाधारण इव बहिरध्यस्तो विकल्पबुद्ध्याकारस्तत्रायं गौरिति संकेतकरणे नेतरेतराश्रयदोषः।

अभीष्टे च गोशब्दप्रवृत्तावगोशब्देनावशिष्टस्य प्रतिपादनमौचित्यमादधाति। परस्परव्यवच्छेदाभावात्, सामानाधिकरण्यसद्भावात्, भूतलघटाभाववत्, अन्यापोढान्यापोहयोर्विरोधो विशेष्यविशेषणत्वयोर्हानिर्वा नास्ति। स्वाभावेन हि विरोधो न यो पराभावेनेति सर्वजनप्रसिद्ध सिद्धान्त.। मार्गोऽयं स्रुघ्नमुपतिष्ठत इत्यत्राप्यपोहो गम्यत एव। अप्रकृतमार्गान्तरापेक्षया एष एव स्रुघ्नप्रत्यनीकानिष्टस्थानापेक्षया स्रुघ्नमेवारण्यमार्गवद् विच्छेदाभावादुपतिष्ठत एव। सार्थदूतादिव्यवच्छेदेन पन्था एवेति प्रतिपदं व्यवच्छेदस्य सुलभत्वात्। तस्मादपोहधर्मणो विधिरूपस्य शब्दादवगतिः। पुण्डरीकशब्दादिव श्वेतिमयुक्तस्य पद्मस्य।

## ४. विधेः शब्दार्थत्वप्रत्याख्यानम्

नन्वेवं विधिरेव शब्दार्थो वक्तुमुचितः, कथमपोहः प्रतिपाद्यत इति चेत्, अत्रोच्यते—अत्रापोहशब्देनान्यापोहविशिष्टो विधिः प्रतिपाद्यत इत्युक्तम्। तत्र विध. प्रतीयमाने विशेषणतया तस्मिन्नेव कालेऽन्यापोहः प्रतीयते। न चैवं प्रत्यक्षस्याप्यपोहविषयत्वव्यवस्था कर्त्तुमुचिता। तस्य शाब्दप्रत्ययस्येव वस्तुविषयत्वे विवादाभावात्। विधिशब्देन च यथाध्यवसायमतद्रूपपरावृत्तो बाह्योऽर्थोऽभिमत.। यथा प्रतिभासं बुद्ध्याकारश्च। तत्र बाह्योऽर्थोऽध्यवसायादेव शब्दवाच्यो व्यवस्थाप्यते, न स्वलक्षणपरिस्फूर्त्या। प्रत्यक्षवद् देशकालावस्थानियतप्रव्यक्तस्वलक्षणास्फुरणात्। तथा चोक्तम्—

> शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात्।
> अर्थस्य दृष्टाविव······················॥ इति।

## ५. प्रतिभासभेदाद् वस्तुभेदनिरसनम्

उपायभेदादेकस्यैव प्रतिभासभेद., एकत्र हि बुद्धाविन्द्रियमाश्रयोऽन्यत्र शब्दादीति चेत्, उच्यते—

जातो नामाश्रयोन्यान्यश्चेतसां तस्य वस्तुन. ।
एकस्यैव कुतो रूपं भिन्नाकारावभासि तत्[1] ॥

न हि स्पष्टास्पष्टे द्वे रूपे परस्परविरुद्धे एकस्य वस्तुन. स्तः, यत एकेनेन्द्रियबुद्धौ प्रतिभासेत, अन्येन विकल्पे । एवञ्च वस्तुन एव भेदप्राप्ति. । न हि स्वरूपभेदादपरो वस्तुभेदः । न च प्रतिभासभेदादपर. स्वरूपभेद. । अन्यथा त्रैलोक्यमेकमेव वस्तु स्यात् ।

ननु दूरासन्नदेशवर्तिनोः पुरुषयोरेकत्र शाखिनि स्पष्टास्पष्टप्रतिभासभेदेऽपि न शाखिभेदः, किन्त्वर्थक्रियाभेदाभावादित्यर्थक्रियाभेदोपकृत एव प्रतिभासभेदो भेदकः ।

न चेहार्थक्रियाभेद इति कथमिन्द्रियशब्दाभ्यां जनितज्ञानविषयो गवादिर्भेदभागिति चेत्, न, ब्रूमः—प्रतिभासभेदो भिन्नवस्तुनियत·, किन्त्वेकविषयत्वाभावानियत इति । तथा हि—यो य. क्वचिद् वस्तुनि प्रत्यक्षप्रतिभासाद् विपरीत. प्रतिभासो नासो तेनैकविषय., यथा घटग्राहकात् पटप्रतिभासः, यथा वा शङ्खग्राहकात् पीतप्रतिभास· । तथा च गवि प्रत्यक्षप्रतिभासाद् विपरीतः प्रतिभासो विकल्पकाले इति व्यापकविरुद्धोपलब्धिः । एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तम्, सव्येतरनयनदृष्टवद् दृष्टम् । अव्याप्तिस्तु यदि प्रत्यक्षान्तरमपि विपरीतप्रतिभासं स्यात्, वस्तु च द्विरूपं भवेत् । तच्च द्वयमपि नास्तीति व्याप्तिरेव । आश्रयभेदभाविनि च ज्ञाने पक्षीकृते तद्विरुद्ध. प्रतिभासभेद. सिद्ध. । ततो यत्रार्थक्रियाभेदादिसचिवः प्रतिभासभेदस्तत्र वस्तुभेदो घटपटवत् । तं पुनः सहायं विहाय प्रवृत्तो नियमेनैकविषयता परिहरतीत्येकोऽत्र भ्रान्त एव प्रतिभासः, शङ्खे पीतप्रतिभासवत् ।

तत्रापि शङ्ख एव विषय इति चेत्, शुक्लतामस्पृशन्ती बुद्धिः शङ्खविषयेति सुव्याहृतम् । शङ्खमात्रं प्रत्येति चेत्, न, तत. परस्य शङ्खमात्रस्यास्फुरणात् । पृष्ठभाविनि विकल्पे स्फुरतीति चेत्, अस्तु, न तु निर्विकल्प· पीतप्रतिभासः शङ्खविषय इति सिद्धम् । एवं दूरतः शिखरिणि पिण्डाकारप्रतिपत्तिरपि न पिप्पलादिभेदावसायसमर्थपत्रादिविशेषविरहिणी वृक्षविषयेति प्रकृतसममेतत् । अर्थक्रियाभेदाद्यभावाच्च न भिन्नोऽर्थ इत्येकस्यार्पिते भ्रान्तिभावे यदि न प्रत्यक्षप्रतिभासो भ्रान्तः, तदान्यप्रतिभास एव भ्रम इति ब्रूमः । एवं पीताभासे गोविकल्पे च समानो न्यायः ।

ननु क्वचित् कस्यचिदारोपः कुतश्चित् सादृश्याद् भवति । न च विकल्पप्रतिभासवत् संभिन्नाकारं जन्मान्तरेऽपि किञ्चिदुपलब्धम् ।

---

१ ( प्र० वा० २।२३५ )

तत् कुतः कस्य क्व समारोपाद् भ्रमोऽयमिति चेत्, अयमपरस्तवैव दोषः, यदयं विकल्पेनाध्यक्षगम्यगोगोचरो नान्यगोचर इति निर्विषयोऽपि न भ्रमोऽभिमन्तव्यः। अस्माकं तु तद्विषयो न भवतीत्येतावतैव प्रकृतसिद्धिः। तदेवान्यथाख्यातीति तद्गोचर एवेति चेत्, यथा प्रत्यक्षपुरस्कृतेन रूपेणास्ति ततोऽतिरिक्तस्य वस्तुनोऽभावात् कस्यान्यथाख्याने कर्तृत्वम्? तत्तु न ख्यात्येवेत्यलं बहुजल्पितेन। तस्मान्न स्वलक्षणप्रतिभासो विकल्पेष्विति न्यायः।

## ६. कारणभेदस्य प्रतिभासभेदकत्वसमर्थनम्

न च शाब्दप्रत्यक्षयोर्वस्तुगोचरत्वे प्रत्ययाभेदः, कारणभेदेन पारोक्ष्यापारोक्ष्यभेदोपपत्तेरिति तन्नोपयुज्यते, परोक्षप्रत्ययस्य वस्तुगोचरत्वासमर्थनात्। परोक्षताश्रयस्तु करणभेद इन्द्रियगोचरग्रहणविरहेणैव कृतार्थः।

ननु वस्तुविषये प्रत्ययाभेदप्रसङ्गस्त्वयैवोक्त इति तत्परिहारेणैव वस्तुविषयत्वं सिद्धम्। न चान्यद् वस्त्वस्तीति तद्विषयत्वं चेति चेत्, नैवम्, यतः प्रतिभासवैजात्यस्यातद्विषयत्वेन व्याप्तिसाधनादसौ प्रसङ्गोऽस्मदीयः। अस्माकमपि व्याप्तिविघटनायैव प्रयत्न एषः। कारणवैजात्यकृते प्रतिभासवैजात्ये संभविनि कुतो वा तद्विषयत्वेन व्याप्तिरिति। एतदपि कदा युज्यते? यदि तद्विषयत्वमात्रेण वा कारणभेदो व्याप्तः शक्यो दर्शयितुमिति यदाह वाचस्पतिः, तन्न, कारणभेदस्य वस्तुनोऽप्रतीत्यैव चरितार्थत्वात्।

अथ न सत्योद्भावनमेतत्, कारणभेदादपि संभाव्यते प्रतिभासभेदस्तद्विषयत्वेऽपीति। संभाव्यतां तर्हि गान्धारमधुरबोधयोरप्येकविषयत्वम्, कारणभेदस्य तत्रापि संभवात्। निर्विकल्पसविकल्पयोरग्नित्वमात्रोल्लेखोऽस्तीत्येकविषयताश्वासः, तत्र तु न गान्धारत्वस्य न वा मधुरत्वस्य तदुभयबोधयोरुल्लेख इति चेत्, न, आत्यन्तिककारणवैजात्यस्य हि फलमेतत्। एकविषयत्वाश्वासः पुनरन्ततो वस्तुन उल्लेखाद् भविष्यति। सन्देहे कारणवैजात्येऽवान्तरस्याग्नित्वादेरुल्लेखः। आत्यन्तिके तु सर्वसाधारणस्य धर्मस्येति न तावतैवातद्विषयत्वम्। अस्ति चावास्तवधर्मस्य माधुर्यस्यानुवृत्तिर्गान्धारेऽपि। अन्यादृशं तन्माधुर्यमिति चेत्, विकल्पान्यस्तस्याप्यग्नित्वमन्यदेव।

न चैकरूपेऽप्युल्लिख्यमानेऽवान्तरधर्मप्रतिभासयोरेकविषयत्वम्, शुक्तिरजतवत्। न हि शुक्तिप्रतिभासो रजतविषयः, रजतप्रतिभासो वा शुक्तिविषयः साधारणधवलतोल्लेखेऽपि। तस्माद् यथाग्निविकल्पे वस्तुस्फुरणेऽप्यवान्तरधर्मस्य गर्दभत्वस्यास्फुरणाद् न गर्दभविषयता, तथावान्तरस्याग्नित्वस्य स्फुरणेऽपि स्वलक्षणाकारस्य प्रतिनियतस्यास्फुरणाद् नान्यद्रव्यस्फुरणमिति न्यायः, स्वलक्षण-

स्यैवाग्निद्रव्यत्वात् । ततः कारणभेदो ज्ञानप्रतिभासस्य भेदकोऽस्तु । वस्तुविषयत्वं तु न द्वयोरपि प्रतिभासयोरिति स्थितमेतत् । तस्मान्न स्वलक्षणं विषयः शब्दादेरिति सिद्धम् ।

## ७. विधिनिषेधयोरपोहत्वे दोषप्रदर्शनम्

किञ्चैवं विधिनिषेधयोरपोहत्वादुच्चारणमेव न स्यात् । तौ हि धर्मिणो वा स्याताम्, धर्माणा वा ? यथा वृक्षोऽस्ति नास्ति वा, वृक्षो नील, न वा नील इति । नाद्य, भावाभावनियतो हि वृक्षो वृक्षशब्देन चोदित इति भावनियमपक्षेऽस्तीति व्यर्थम्, नास्तीत्यसमर्थम्, विरोधात् । अभावनिरूपणे तु विपर्यय. । अस्ति च वृक्षपदश्रुतौ विधिनिषेधापेक्षेति भावाभावसाधारणोऽयं वृक्षपदाद् वृक्षप्रतिभासो न बाह्यो वृक्ष इति न्यायः ।

'जातिमद्व्यक्तिवाच्यता स्ववाचैव प्रस्तुत्यानन्तरमेव, न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते । सा हि स्वरूपतो नित्यापि देशकालविकीर्णानेकव्यक्त्याश्रयतया भावाभावसाधारणीभवन्नस्तिसम्बन्धयोग्या । वर्तमानव्यक्तिसम्बन्धिता हि जातेरस्तिता । अतीतानागतव्यक्तिसम्बन्धिता च नास्तितेति सन्दिग्धव्यतिरेकित्वादनैकान्तिकं भावाभावसाधारणम्, अन्यथासिद्धं वा' इति विकल्पितं वाचस्पतिमिश्रेण । तन्न विचारसहम्, न तावत् तावता प्रकृतिक्षति, जातौ भारं न्यस्यता स्वलक्षणवाच्यत्वस्य स्वयं स्वीकारात् । किञ्च, सर्वत्र पदार्थस्य स्वलक्षणस्वरूपेणैवास्तित्वादिकं चिन्त्यते, जातेस्तु वर्तमानादिव्यक्तिसम्बन्धोऽस्तित्वादिकमिति तु बालप्रतारणम् । एवं जातिमद्व्यक्तिवचनेऽपि दोष. । व्यक्तेश्चेद् प्रतीतिसिद्धिर्जातिरधिका प्रतीयता मा वा । न तु व्यक्तिप्रतीतिदोषान्मुक्ति. ।

## ८. मीमांसकमतप्रत्याख्यानम्

एतेन 'सभागत्वादेव वस्तुनो न साधारणदोषः । वृक्षत्वं ह्यनिर्धारितभावाभावं शब्दादवगम्यते । तयोरन्यतरेण शब्दान्तरावगतेन सम्बध्यते' इति भाट्टोक्तं निरस्तम्, सामान्यस्य नित्यस्य प्रतिपत्तावनिर्धारितभावाभावत्वायोगात् ।

## ९. शब्दस्य स्वप्रकाशकत्वप्रतिपादनम्

न च प्रत्यक्षस्येव शब्दानामर्थप्रत्यायनप्रकार, येन तद्दृष्ट इवास्त्यादिशब्दापेक्षा न स्यात्, विचित्रशक्तित्वात् प्रमाणानामित्यप्यसङ्गतमेव, तदप्यैन्द्रियकशाब्दप्रतिभासयोरेकस्वरूपग्राहित्वे भिन्नावभासात् । विचित्रशक्तित्वञ्च प्रमाणानां साक्षात्काराध्यवसायाभ्यामपि चरितार्थम् । ततो यदि प्रत्यक्षार्थप्रतिपादनं शाब्देन तद्वदेवावभासः स्यात् । अभवंश्च न तद्विषयख्यापनं क्षमते ।

ननु वृक्षशब्देन वृक्षत्वांशे प्रतिपादिते सत्त्वाद्यंशनिश्चयार्थमस्त्यादिपदप्रयोग इति चेत्, निरंशत्वेन प्रत्यक्षसमधिगतस्य स्वलक्षणस्य कोऽवकाश. पदान्तरेण ?

धर्मान्तरविधिनेषेधयोः प्रमाणान्तरेण वा। प्रत्यक्षस्यानिश्चयात्मकत्वादनभ्यस्तस्वरूप-विषये तत्र भवतु प्रमाणान्तरापेक्षा। स्वयं निश्चयात्मके विकल्पे ग्राहकेऽलमपरेण। अस्ति च शब्दलिङ्गान्तरापेक्षा। ततो न वस्तुस्वरूपग्रह.।

## १०. धर्मधर्मिणोरैक्यनिरसनम्

ननु भिन्ना जात्यादयो धर्मा. परस्परं धर्मिणश्चेति जातिलक्षणैकधर्मद्वारेण प्रतीतेऽपि शाखिनि धर्मान्तरवत्तया न प्रतीतिरिति किं न भिन्नाभिधानाधीनो धर्मान्तरस्य नीलचलोच्चैस्तरत्वादेरवबोध इति चेत्, न, अखण्डात्मन. स्वलक्षणस्य प्रत्यक्षेऽपि प्रतिभासात्। द्वयस्य धर्मधर्मिभेदस्य प्रत्यक्षप्रतिक्षिप्तत्वात्। अन्यथा सर्वं सर्वत्र स्यादित्यतिप्रसङ्ग। काल्पनिकभेदाश्रयस्तु धर्मधर्मिव्यवहार इति शास्त्रे प्रसाधितम्। अथवाऽस्तु पारमार्थिकोऽपि धर्मधर्मिभेद., तथाप्यनयो समवायादे-र्दूषितत्वादुपकारलक्षणैव प्रत्यासत्तिरेषितव्या।

एवञ्च यथेन्द्रियसन्निकर्षेण प्रत्यक्षेण धर्मिप्रतिपत्तौ सर्वेषां तद्धर्माणां प्रतिपत्तिस्तथा शब्दलिङ्गाभ्यामपि वाच्यवाचकादिसम्बन्धप्रतिबद्धाभ्यां धर्मिप्रतिपत्तौ निरवशेषतद्धर्मप्रतिपत्तिर्भवेत्, प्रत्यासत्तिमात्रस्याविशेषात्।

"नचैकोपाधिना सत्त्वेन विशिष्टे तस्मिन् गृहीते उपाध्यन्तरविशिष्ट-स्तद्ग्रहः। स्वभावो हि द्रव्यस्योपाधिभिर्विशिष्यते, न तूपाधयो विशेष्यत्व वा तस्य स्वभाव." इति वाचस्पतिः। तदपि न सम्यग्, न ह्यभेदादुपाध्यन्तरग्रहण-मासञ्जितम्, भेदं पुरस्कृत्यैवोपकारकग्रहणे उपकार्यग्रहणप्रसञ्जनात्। न ह्यग्निधूमयोः कार्यकारणभाव इव स्वभावत एव धर्मधर्मिणोः प्रतिपत्तिनियमकल्पन-मुचितम्, तयोरपि प्रमाणासिद्धत्वात्। प्रमाणसिद्धे च स्वभावोपवर्णनमिति न्यायः।

## १०. न्यायभूषणमतखण्डनम्

सूर्यादिग्रहणे तदुपकार्याशेषवस्तुराशिग्रहणप्रसञ्जनं न्यायभूषणेनोक्तम्। तदाशयानभिज्ञता प्रकटयति। तथा हि—त्वन्मते धर्मधर्मिणोर्भेदः, उपकारलक्षणैव च प्रत्यासत्तिः, तदोपकारकग्रहणे समानदेशस्यैव धर्मरूपस्यैव चोपकार्यस्य ग्रहण-मासञ्जितम्। तत्कथं सूर्योपकार्यस्य भिन्नदेशस्य द्रव्यान्तरस्य वा दृष्टव्यभिचारस्य ग्रहणप्रसङ्ग. सङ्गतः? तस्मादेकधर्मद्वारेणापि वस्तुस्वरूपप्रतिपत्तौ सर्वात्मप्रतीतेः क्व शब्दान्तरेण विधिनिषेधावकाश., अस्ति च। तस्मान्न स्वलक्षणस्य शब्दविकल्प-लिङ्गप्रतिभासित्वमिति स्थितम्।

## ११. सामान्यस्य शब्दवाच्यत्वनिरसनम्

नापि सामान्यं शाब्दप्रत्ययभासि, 'सरितः पारे गावश्चरन्ति' इति गवादिशब्दात् सास्नाशृङ्गलाङ्गूलादयोऽक्षराकारपरिकराः सजातीयभेदापरामर्शनात् सम्पिण्डितप्रायाः प्रतिभासन्ते।

न च तदेव सामान्यम्।

"वर्णाकृत्यक्षराकारशून्यं गोत्वं हि कथ्यते"।[1]

तदेव च सास्नालाङ्गूलादिमात्रमखिलव्यक्तावत्यन्तविलक्षणमपि स्वलक्षणेनैकीक्रियमाणं सामन्यमित्युच्यते, तादृशस्य बाह्यस्याप्राप्तेर्भ्रान्तिरेवासौ केशप्रतिभासवत्। तस्माद् वासनावशाद् बुद्धेरेव तदात्मना विवर्तोऽयमस्तु। असदेव वा तद्रूपं ख्यातु। व्यक्तय एव वा स्वजातीयभेदतिरस्कारेणान्यथा भासन्तामनुभवव्यवधानात्। स्मृतिप्रमोषो वाभिधीयताम्। सर्वथा निर्विषय. खल्वयं सामान्यप्रत्ययः। क्व सामान्यवार्ता।

यदपि सामान्याभावे सामान्यप्रत्ययस्याकस्मिकत्वमुक्तम्, तदपि न समीचीनम्, यतः पूर्वपिण्डदर्शनस्मरणसहकारिणातिरिच्यमाना विशेषप्रत्ययजनिका सामग्रीनिर्विषयं सामान्यविकल्पमुत्पादयति। तदेवं न शाब्दे प्रत्यये जाति प्रतिभाति, नापि प्रत्यक्षे। न चानुमानतोऽपि सिद्धि, अदृश्यत्वे प्रतिबद्धलिङ्गादर्शनात्। नापीन्द्रियवदस्याः सिद्धि, ज्ञानकार्यत. कादाचित्कस्यैव निमित्तान्तरस्य सिद्धे.। यदा पिण्डान्तरे अन्तराले वा गोबुद्धेरभावं दर्शयेत्, तदा शावलेयादिसकलगोपिण्डानामेवाभावादभावो गोबुद्धेरुपपद्यमान कथमर्थान्तरमाक्षिपेत्। अथ गोत्वादेव गोपिण्डः, अन्यथा तुरगोऽपि गोपिण्ड स्यात्। यद्येवं गोपिण्डादेव गोत्वम्, अन्यथा तुरगत्वमपि गोत्वं स्यात्। तस्मात् कारणपरम्परात एव गोपिण्डो गोत्वं तु भवतु मा वा।

ननु सामान्यप्रत्ययजननसामर्थ्यं यद्येकस्मात् पिण्डादभिन्नम्, तदा विजातीयव्यावृत्तं पिण्डान्तरमसमर्थम्। अथ भिन्नं तदा तदेव सामान्यम्, नाम्नि परं विवाद इति चेत्, अभिन्नैव सा शक्ति प्रतिवस्तु। यथा त्वेकः शक्तस्वभावो भावस्तथाऽन्योऽपि भवन् कीदृशं दोषमावहति। यथा भवतां जातिरेकापि समानध्वनिप्रसवहेतुः, अन्यापि स्वरूपेणैव जात्यन्तरनिरपेक्षा, तथास्माकं व्यक्तिरपि जातिनिरपेक्षा स्वरूपेणैव भिन्ना हेतुः।

न च समवायः सम्भवी,

इहेति बुद्धे. समवायसिद्धिरिहेति धीश्च द्वयदर्शनेन।
न च क्वचित् तद्विषये त्वपेक्षा स्वकल्पनामात्रमतोऽभ्युपायः[2] ॥

एतेन सेयं प्रत्ययानुवृत्तिरनुवृत्तवस्त्वनुयायिनी कथमत्यन्तभेदिनीषु व्यक्तिषु व्यावृत्तविषयप्रत्ययभावानुपातिनीषु भवितुमर्हतीत्यूहाप्रवर्तनमस्य प्रत्याख्यातम्। जातिष्वेव परस्परव्यावृत्ततया व्यज्यमानास्वनुवृत्तप्रत्ययेन व्यभिचारात्। यत्

१. प्र० वा०, प्र० प० का० १४७।  २. ज्ञानश्री मि०, नि० पृ० ७०।

पुनर्विपर्यये बाधकमुक्तम्—अभिधानप्रत्ययानुवृत्ति. कुतश्चिन्निवृत्य क्वचिदेव भवन्ती निमित्तवती, न चान्यन्निमित्तमित्यादि, तन्न सम्यक्, अनुवृत्तमन्तरेणाप्यभिधान-प्रत्यानुवृत्तेरतद्रूपपरावृत्तस्वरूपाविशेषादवश्यं स्वीकारस्य साधितत्वात् । तस्मात्—

तुल्ये भेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम्[1] ॥

यदप्यत्र न्यायभूषणेनोक्तम्—न ह्येवं भवति, यथा प्रत्यासत्त्या दण्डसूत्रादेकं प्रसर्पति क्वचिन्नान्यत्र, सैव प्रत्यासत्तिः पुरुषस्फटिकादिषु दण्डिसूत्रित्वादिव्यवहार-निबन्धनमस्तु, किं दण्डसूत्रादिनेति, तदसङ्गतम्, दण्डसूत्रयोर्हि पुरुषस्फटिक-प्रत्यासन्नयोर्दृष्टयोर्दण्डिसूत्रित्वप्रत्ययहेतुत्वं नापलप्यते । सामान्यं तु स्वप्ने न दृष्टम् । तद् यदीदं परिकल्पनीयम्, तदा वरं प्रत्यासत्तिरेव सामान्यप्रत्ययहेतुः परिकल्प्यताम्, किं गुर्व्या परिकल्पनयेत्यभिप्रायापरिज्ञानात् ।

अनुमानप्रयोगस्तु—यद्विशिष्टज्ञानं तद्विशेषणग्रहणनान्तरीयकम्, दण्डिज्ञानवत् । विशिष्टज्ञानं चेदं गौरयमित्यर्थतः कार्यहेतुः । विशेषणानुभवकार्यं हि दृष्टान्ते विशिष्ट-बुद्धिः सिद्धेति ।

नन्वत्र विशिष्टबुद्धेर्भिन्नविशेषणग्रहणनान्तरीयकत्वं साध्यम् ! विशेषणमात्रा-नुभवनान्तरीयकत्वं वा, आद्ये पक्षस्य प्रत्यक्षबाधासाधनावधानमनवकाशयति । वस्तुग्राहिणः प्रत्यक्षस्योभयप्रतिभासाभावात् । विशिष्टबुद्धित्वञ्च सामान्यहेतु-रनैकान्तिकः भिन्नविशेषणग्रहणमन्तरेणापि दर्शनात् । यथा रूपवान् घटः, गोत्वं सामान्यमिति वा । द्वितीये पक्षे तु सिद्धसाधनम् । स्वरूपवान् घट इत्यादिवद् गोत्वजातिमान् पिण्ड इति परिकल्पितं भेदमुपादाय विशेषणविशेष्यभावस्येष्टत्वादगो-व्यावृत्तानुभवभावित्वाद् गौरयमिति व्यवहारस्य । तदेवं न सामान्यसिद्धिः । बाधकं च सामान्यगुणकर्माद्युपाधिचक्रस्य । केवलव्यक्तिग्राहकं पटुप्रत्यक्षम्, दृश्यानुपलम्भो वा प्रसिद्धः ।

## १२. विधेः शब्दार्थत्वसमर्थनोपसंहारः

तस्माद् विधिरेव शब्दार्थः । स च बाह्योऽर्थो बुद्ध्याकारश्च विवक्षितः । तत्र न बुद्ध्याकारस्य तत्त्वतः संवृत्त्या वा विधिनिषेधौ, स्वसंवेदनप्रत्यक्षगम्यत्वात्, अनध्यवसायाच्च । नापि तत्त्वतो बाह्यस्यापि विधिनिषेधौ, तस्य शाब्दे प्रत्ययेऽ-प्रतिभासनात् । अत एव सर्वधर्माणां तत्त्वतोऽनभिलाप्यत्वम् । प्रतिभासाध्यवसा-याभावात् । तस्माद् बाह्यस्यैव संवृतौ विधिनिषेधौ । अन्यथा संव्यवहारहानि-प्रसङ्गात् ।

१. प्र० वा० स्वा० अ० प० का० १६२ ।

तथा चोक्तम्—

नाकारस्य न बाह्यस्य तत्त्वतो विधिसाधनम्।
बहिरेव हि संवृत्या संवृत्यापि तु नाकृतेः॥[1]

एतेनारोपितस्य बाह्यत्वस्य विधिनिषेधावित्यलौकिकमनागममतार्किकीयं कथयति धर्मोत्तर., तदप्यपहस्तितम्।

नन्वध्यवसाये यद्यध्यवसेयं वस्तु न स्फुरति, तदा तदध्यवसितमिति कोऽर्थ. ? अप्रतिभासेऽपि प्रवृत्तिविषयीकृतमिति योऽर्थः। अप्रतिभासाविशेषे विषयान्तर-परिहारेण कथं नियतविषयाप्रवृत्तिरिति चेत्, उच्यते, यद्यपि विश्वमगृहीतम्, तथापि विकल्पस्य नियतसामग्रीप्रसूतत्वेन नियताकारतया नियतशक्तित्वाद् नियतैव जलादौ प्रवृत्तिः, धूमस्य परोक्षाग्निज्ञानजननवत्। नियतविषया हि भावा प्रमाणपरिनिष्ठित-स्वभावा न शक्तिसाङ्कर्यपर्यनुयोगभाजः। तस्मात् तदध्यवसायित्वमाकारविशेष-योगात् तत्प्रवृत्तिजनकत्वम्।

न च सादृश्यादारोपेण प्रवृत्तिं ब्रूमः, येनाकारे बाह्यस्य बाह्ये वाऽऽकारस्या-रोपद्वारेण दूषणावकाश.। किं तर्हि स्ववासनाविपाकवशादुपजायमानैव बुद्धि-रपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति विप्लुतैव। तदेवमन्योन्याभावविशिष्टो विजातीयव्यावृत्तोऽर्थो विधिः। स एव चापोहशब्दवाच्यः शब्दानामर्थं प्रवृत्तिनिवृत्ति-विषयश्चेति स्थितम्।

अत्रानुमानप्रयोग.—यद् वाचकं तत्सर्वमध्यवसितातद्रूपपरावृत्तवस्तुमात्र-गोचरम्, कूपे जलमिति वचनवत्। वाचकं चेदं गवादिशब्दरूपमिति स्वभावहेतुः। नायमसिद्धः, पूर्वोक्तेन न्यायेन पारमार्थिकवाच्यवाचकभावस्याभावेऽप्यध्यवसाय-कृतस्यैव सर्वव्यवहारिभिरवश्यस्वीकर्त्तव्यत्वात्। अन्यथा सर्वव्यवहारोच्छेदप्रसङ्गात्, नापि विरुद्धः, सपक्षे भावात्। न चानैकान्तिक', तथा हि शब्दानामध्यवसित-विजातीयव्यावृत्तवस्तुमात्रविषयत्वमनिच्छद्भि. परै परमार्थतः—

वाच्यं स्वलक्षणमुपाधिरुपाधियोगः
सोपाधिरस्तु यदि वा कृतिरस्तु बुद्धेः।

गत्यन्तराभावात्, अविषयत्वे च वाचकत्वायोगात्। तत्र—

आद्यन्तयोर्न समयः फलशक्तिहाने-
र्मध्येऽप्युपाधिविरहात् त्रितयेन युक्तः[2]॥

तदेवं वाच्यान्तरस्याभावाद् विषयत्वलक्षणस्य व्यापकस्य निवृत्तौ विपक्षतो निवर्त्तमानं वाचकत्वमध्यवसितबाह्यविषयत्वेन व्याप्यत इति व्याप्तिसिद्धिरिति महापण्डितरत्नकीर्तिमतम्।

---

१. ज्ञानश्रीमित्रनिबन्धावली पृ०, २२६।  २. रत्न० नि० पृ० ६१।

## १३. शान्तरक्षितमतेनापोहस्य सामान्यविशेषलक्षणप्रदर्शनम्

अपोहो द्विविधः—पर्युदासलक्षणः, प्रसज्यप्रतिषेधलक्षणश्च । तत्र पर्युदासोऽपि द्विविधः—बुद्ध्यात्मकः, अर्थात्मकश्च । बुद्ध्यात्मकः = बुद्धिप्रतिभासः, अर्थेष्वनुगतैकरूपत्वेनाध्यवसितः । अर्थात्मकः = अर्थस्वभावः, विजातीयव्यावृत्तमर्थस्वलक्षणमित्यर्थः ।

बुद्ध्यात्मकस्य पर्युदासलक्षणस्यापोहस्य स्वरूपं तु—अन्योन्यं कामं भिन्नस्वरूपा अपि आमलक्यादयः प्रत्येकं समुदिता वाऽनेकविधव्याधिव्यावर्तनशक्त्याध्यासिता भवन्ति विनाप्यनुगामिनम् । न च तत्र तथाविधामर्थक्रियां सामान्यमेव सम्पादयतीति वक्तुं शक्यते, यतस्तत्र विविधार्थक्रियासम्पादनयोग्यं सामान्यं नास्ति । यदि तत्र तत् स्यात्, तर्हि येयं क्वचित् कदाचित् कासाञ्चिद् धात्र्यादीनां चिरक्षिप्ररोगाद्युपशमनसामर्थ्योपलब्धिः, सा न स्यात्, सामान्यस्यैकरूपत्वात् । न च क्षेत्रक्षीरावसेकादिसंस्कारविशेषवशादासादितातिशयं सामान्यमेवैतामर्थक्रियां विचित्रां सम्पादयतीति युक्तमिति वाच्यम्, तस्य नित्यतया परैरनाधेयविकारस्य क्षेत्रादिभेदतोऽपि नातिशयः कश्चिदेकरूपत्वात् । धात्र्यादीनां त्वनित्यानां सोऽतिशयः क्षेत्रादिभेदतो भिद्यत इत्यतस्त एव रोगाद्युपशमनसामर्थ्योपेताः । एवञ्च तद्वदेवान्येऽपि घटादयो भावाः स्वहेतुप्रत्ययेभ्यस्तथोत्पत्तेः प्रकृत्यैवैकाकारप्रत्यवमर्शादिहेतवो भवन्त्यन्तरेणापि वस्तुभूतं सामान्यम् । अभयादिसमानर्थान् कारणीकृत्य तदनुभवबलेन समुत्पन्ने विकल्पके ज्ञाने यस्तादात्म्येनार्थाकारतयाऽर्थाभासो भाति, तत्रान्यापोह इत्येषा संज्ञा निरुच्यते । सविकल्पके ज्ञाने बाह्यार्थात्मताया अभावेऽपि अर्था इत्येवाध्यवसितम् ।

## १४. अपोहशब्दस्य व्युत्पत्तिनिमित्तार्थप्रदर्शनम्

अपोह्यत इत्यपोहः, अन्यस्मादपोहोऽन्यापोह इति व्युत्पत्त्या विकल्पान्तरारोपितप्रतिभासान्तराद् भेदेन स्वयं प्रतिभासनाद् मुख्या अन्यापोहेति संज्ञा । मुख्यत उक्तेनैकेन निमित्तेन उपचारात्तु त्रिभिर्निमित्तैश्च सनिबन्धनाऽपोहेति व्यपदिश्यते । तथा हि—( १ ) कारणे कार्यधर्मारोपात्, ( २ ) कार्ये कारणधर्मोपचाराद् वा, ( ३ ) विजातीयापोहपदार्थेन सहैक्येन भ्रान्तैः प्रतिपत्तृभिरध्यवसितत्वाच्च ।

स्वलक्षणेऽपि विजातीयव्यावृत्तेर्विद्यमानत्वनिबन्धनाऽपोहेति संज्ञा । एतेन प्राधान्येनैव स्वलक्षणेऽन्यापोहव्यपदेश इत्युक्तं भवति ।

प्रसज्यप्रतिषेधलक्षणेऽपोहे गौरगौर्न भवतीत्यत्र तु स्पष्ट एवान्यापोहोऽवगम्यते । तत्रोक्तार्थप्रतिबिम्बात्माऽपोहः शब्दैः प्रतिपाद्यते । यदेव हि शाब्दे ज्ञाने

प्रतिभासते, स एव शब्दार्थो युक्त । न चात्र प्रसज्यप्रतिषेधाध्यवसायोऽस्ति, न चापीन्द्रियज्ञानवत् स्वलक्षणप्रतिभास । किन्तर्हि बाह्यार्थाध्यवसायिनी केवलं शाब्दी बुद्धिरुपजायते ? तेन तदेवार्थप्रतिबिम्बकं शाब्दे ज्ञाने साक्षात् तदात्मतया प्रतिभासनाच्छब्दार्थो युक्त., नान्य इति तात्पर्यम् ।

## १५. शाब्दिकमतप्रत्याख्यानम्

यश्च शाब्दिकै शब्दस्यार्थेन साकं वाच्यवाचकभावलक्षण सम्बन्ध: स्वीक्रियते, अध्यवसितबहिर्भावत्वस्वभावप्रतिबिम्बस्य धिय सम्बन्धिन: शब्दाज्जन्मनि सति स वाच्यवाचकलक्षणो निपुणं निरूप्यमाण कार्यकारणभावात्मक एव जात. । तथा हि—शब्दप्रतिबिम्बस्य जनकत्वाद् वाचक उच्यते । तच्च प्रतिबिम्बं शब्देन जायमानत्वाद् वाच्यम् । एतेन यदुक्तम्—'निषेधमात्रं नैवेह शाब्दे ज्ञानेऽवभासते[१]' इति, तदसंगतम्, निषेधमात्रस्य शब्दार्थत्वानभ्युपगमात् । एवं तावत् प्रतिबिम्बलक्षणोऽपोह. साक्षाच्छब्दैरुपजन्यमानत्वान्मुख्य शब्दार्थ इति प्रदर्शितम् ।

गवादिप्रतिबिम्बस्यात्मा य परस्याश्वादिप्रतिबिम्बस्यात्मा स्वभावो न भवतीति प्रसज्यप्रतिषेधलक्षणापोहस्य नान्तरीयकतया प्रतीतेर्गौणं शब्दार्थत्वम्, सामर्थ्यात् तस्य प्रतीते. । प्रथमं यथास्थितवस्त्वनुभव., ततो विवक्षा, ततस्ताल्वादिपरिस्पन्द., तत. शब्द इत्येवं परम्परया यदा शब्दस्य बाह्यैरग्न्यादिभिर्वस्तुभि: कार्यकारणभावसम्बन्ध: स्यात्, तदा तस्मिन् सम्बन्धे सति विजातीयव्यावृत्तस्यापि वस्तुनोऽर्थापत्तितोऽधिगमो भवति । अतो द्विविधोऽपि प्रसज्यप्रतिषेधोऽन्यव्यावृत्तवस्त्वात्मा चापोह: शब्दार्थ इत्युपचर्यते ।

## १६. उद्द्योतकरमतप्रत्याख्यानम्

उद्द्योतकरेणोक्तं यत्—यदि शब्दस्यापोहोऽभिधेयोऽर्थ, तदाऽभिधेयार्थव्यतिरेकेणास्य स्वार्थो वक्तव्य: ।

अथ स एवास्य स्वार्थ., तथापि व्याहतम्, एतदन्यशब्दार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति । अस्य हि वाक्यस्यायमर्थस्तदानी भवति, इति । तदेतद् दिङ्नागाचार्याशयानभिज्ञतां सूचयति ।

## १७. (क) दिङ्नागाचार्याशयविस्फोरणम्

आचार्यस्यायमाशय:—निर्व्यापारत्वात् सर्वधर्मागा न शब्दस्य बाह्यार्थाध्यवसायिविकल्पप्रतिबिम्बोत्पादव्यतिरेकेणान्यो बाह्याभिधानव्यापार: सम्भवति ।

---

१. तत्त्वस० पृ० २९०, श्लो० ९१० ।

अतो बाह्यार्थाध्यवसायेन प्रवृत्तविकल्पप्रतिबिम्बं जनयन्ती श्रुतिः स्वार्थमभिधत्त इत्युच्यत इति, न तु विभेदिनं सजातीयविजातीयव्यावृत्तं स्वलक्षणमेषा स्पृशति, अकिञ्चित्करत्वात्। तथाविधप्रतिबिम्बजनकत्वव्यतिरेकेण नापरा श्रुतेरभिधाक्रियाऽस्तीत्यर्थः।

गोशब्दो गोबुद्धिमेव जनयति, अन्यविश्लेषस्तु सामर्थ्याद् गम्यते, न तु शब्दात्, तस्य गोप्रतिबिम्बस्य प्रतिभासान्तरात्मरहितत्वात्। अन्यथा नियतरूपस्य तस्य प्रतिपत्तिरेव न स्यात्। तेनापरो ध्वनिर्गोबुद्धेर्जनको नान्वेषणीयः, तेनैव गोशब्देन गोबुद्धेर्जन्यमानत्वात्। यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यस्य वाक्यस्य साक्षाद्दिवाभोजनप्रतिषेधः स्वार्थाभिधानम्, गम्यस्तु रात्रिभोजनविधिर्न साक्षात्, तथा गौरित्यादेरन्वयप्रतिपादकस्य शब्दस्यान्वयज्ञानं साक्षात् फलम्, व्यतिरेकगतिस्तु सामर्थ्यात्। यतोऽन्वयो विधेरव्यतिरेकवान् नास्ति, किन्तर्हि? विजातीयव्यवच्छेदाव्यभिचार्येव, न हि विजातीयादव्यावृत्तस्य कस्यचित् सम्भवोऽस्ति। तेनैकस्य शब्दस्य फलद्वयमविरुद्धमेव। यदि साक्षादेकस्य शब्दस्य विधिनिषेधज्ञानलक्षणं फलद्वयं युगपदभिप्रेतं भवेत्, तदा स्याद् विरोधः। यदि तु दिवाभोजनवाक्यवदेकं साक्षात्, अपरं सामर्थ्यलभ्यं फलमितीष्टं तदा न विरोधः।

ननु यदि गोशब्देनागोनिवृत्तिर्मुख्यतः प्रतिपाद्यते, तदा गोशब्दश्रवणानन्तरं प्रथमतरमगौरित्येषा श्रोतुः प्रतिपत्तिर्भवेत्। यो हि अव्यवधानेन शब्दात् प्रत्यय उपजायते स एव शब्दार्थो व्यवस्थाप्यते। न ह्यव्यवधानेनागोव्यवच्छेदे मतिरुपजायते। अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात् प्रथमतरमगोप्रतीतिप्रसङ्गाच्च नापोहः शब्दार्थ इति चेत्, न, तथाऽनभ्युपगमात्। न ह्यगोप्रतिषेधं मुख्यतया गोशब्दः करोतीत्यभ्युपगतमस्माभिः किन्तर्हि सामर्थ्यादिति प्रतिपादितत्वात्।

## १७. (ख) तार्किकाभिमतं सामान्यं स्वमतेनोपपाद्यते

बाह्यरूपतयाऽध्यस्तो बुद्ध्याकारः सर्वत्र शाबलेयादौ गौर्गौरिति समरूपतयाऽवसानात् तेषां तत्सामान्यमित्युच्यते।

ननु यदि कदाचिन्मुख्यवस्तुभूतं सामान्यं बाह्यवस्त्वाश्रितमुपलब्धं भवेत् तदा साधर्म्यदर्शनात् तत्र सामान्यं भ्रान्तिर्भवेत्। यावता मुख्यार्थासम्भवे सैव भवता सामान्यभ्रान्तिरनुपपन्नेति चेत् न, सामान्यदर्शनाद्यनपेक्ष्य द्विचन्द्रादिज्ञानादिवदन्तरुपप्लवादेतज्जातं ज्ञानम्। न हि सर्वा भ्रान्तयः साधर्म्यदर्शनादेव भवन्ति। किन्तर्हि! अन्तरुपप्लवादपि।

स एव बुद्ध्याकारो बाह्यतयाऽध्यस्तोऽपोह इति शब्दार्थ इति बाह्यवस्तुभूतं सामान्यमिति च सामान्यरूपत्वेन वस्तुरूपत्वेन चावसायात् प्रोच्यते।

अथ कथं पुन· परमार्थत. सामान्यं तत्र भवतीति चेत्, उच्यते—परमार्थतो हि बुद्धे'र्व्यतिरिक्तोऽसौ, तत्कथमर्थान्तरं व्रजेत्, येनार्थानां तत्सामान्यं भवतो भवेत्।

उक्तञ्च—

'ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्।' इति।

तस्मात् परैरुद्भाविता सिद्धसाध्यतादोषो न भवति, न हि भवद्भिर्बुद्ध्याकारो गोत्वाख्यं सामान्यमवस्तुरूपमिष्टम्. किन्तु बाह्यशाबलेयादिगतमेकमनुगामि पारमार्थिकं गोत्वादिसामान्यमुपकल्पितम् अतो न सिद्धसाध्यता।

यथैव हि प्रतिबिम्बात्मकप्रतिभाख्योऽपोहो बाह्यार्थोऽस्माभिरुपवर्णित., तथैव पदार्थोऽपि। यस्मात् पदादपि प्रतिबिम्बात्मकोऽपोह उत्पद्यत एव। तेनास्माकमयमेव प्रतिबिम्बात्मकोऽपोह पदार्थोऽपि मतो न केवलं बाह्यार्थ। तेन नास्ति काचनापि विप्रतिपत्ति.। यत एव हि स्वरूपोत्पादमात्रादन्यमंशं सा बुद्धिर्न बिभर्त्ति तत एव स्वस्वभावव्यवस्थितत्वाद् बुद्धेर्बुद्ध्यन्तराद् व्यवच्छेद प्रतीयते। अन्यथा ह्यन्यस्य रूपं बिभ्रती कथं ततो व्यवच्छिन्ना प्रतीयते। यथैव ह्यपोहस्य नि.स्वभावत्वा-दविद्यमानरूपस्य परस्परतो भेदो नास्तीति परैरुच्यते तथैवाभेदोऽपीति तत्कथ-मभिन्नार्थाभावे पर्यायत्वप्रसञ्जनं विधीयते। अर्थस्यैकत्वे वाचका पर्यायतां प्राप्नुवन्ति। तेन नीरूपेष्वेकरूपत्वाभावेऽपि कथन्न पर्यायता भवेदिति नापादनीयम्।

ननु यदि नीरूपेषु एकरूपत्वं भावतो नास्ति, तथापि काल्पनिकमस्ति तेन पर्यायताप्रसञ्जनं युक्तमेवेति चेत्, न, यथा स्वभावाभावेऽपि एकत्वं कल्पनानिर्मितम्, तथैव भेदोऽपि काल्पनिक एवेति पर्यायताभावात्।

नन्वेवं शब्दानां प्रसिद्धा पर्यायापर्यायव्यवस्था कथं सिद्ध्येदिति चेत्, अत्रोच्यते—यदि हि परमार्थतो भिन्नमभिन्नं वा किञ्चिद् वाच्यं वस्तु शब्दाना स्यात् तदाऽपर्यायता पर्यायता वा भवेत्। यावता स्वलक्षणं जातिस्तद्योगो जाति-मास्तथेत्यादिना वर्णितं यथैषा न किञ्चिद् वाच्यमस्तीति। तत्रान्तरेणापि सामान्यं सामान्यशब्दत्वव्यवस्थाया इदं निबन्धनं यद्बहूनामेकार्थक्रियाकारित्वम्। प्रकृत्यैव हि केचिद्भावा बहवोऽप्येकार्थक्रियाकारिणो भवन्ति। तेषामेकार्थक्रियासामर्थ्य-प्रतिपादनाय व्यवहर्तृभिर्लाघवार्थमेकरूपाध्यारोपेणैका श्रुतिर्निविश्यते। यथा बहुषु रूपादिषु मधूदकाद्याहरणलक्षणैकार्थक्रियासमर्थेषु घट इत्येषा श्रुतिर्निवेश्यते। इच्छामात्रप्रतिबद्धो हि शब्दानामर्थेषु नियोग.।

तथा हि—चक्षूरूपालोकमनस्कारेषु रूपविज्ञानैकफलेषु यदि कश्चिदिच्छावशाद् विनाप्येकेनानुगामिना सामान्येन घट इत्यादिकां श्रुतिं निवेशयेत्। तत्किं तस्य कश्चित् प्रतिरोद्धा भवेत्? न हि तेषु लोचनादिषु एकं चक्षुर्विज्ञानजनकत्वं नाम सामान्यमस्ति। यत. सामान्यविशेषसमवाया अपि भवद्भिश्चक्षुर्विज्ञानजनका

इष्यन्ते। तेषु न सामान्यसमवायोऽस्ति नि सामान्यत्वात् सामान्यस्य, समवायस्य च द्वितीयसमवायाभावात्।

## १८. एकार्थाध्यवसायितया प्रत्यवमर्शस्यैकत्वम्

यद्यपि स्वलक्षणभेदात् तत्कार्यं भिद्यते, तथापि ज्ञानाख्यं तावत्कार्यमेकार्थाध्यवसायिपरामर्शज्ञानहेतुतयैकमित्युच्यते। तस्य च ज्ञानस्य हेतुभावादर्था अपि मधूदकाद्याहरणादिलक्षणा घटादिव्यक्तिलक्षणाश्चाभेदिन इत्युच्यन्ते। एवञ्चैकार्थक्रियाकारित्वमुपपद्यत एव। योऽसो प्रत्यवमर्शप्रत्ययस्तस्यापि स्वलक्षणभेदेन भिद्यमानत्वादेकत्वमसिद्धम्। ततश्च तस्याप्येकत्वसिद्धये परमेकाकारप्रत्यवमर्शकार्यमनुसरतोऽनवस्था स्यात्। ततश्चानवस्थितेनेककार्यतया न क्वचिदेकश्रुतिनिवेश. सिद्ध्येदित्येवं न शङ्कनीयम्, न हि प्रत्यवमर्शप्रत्ययस्यैककार्यतयैकत्वमुच्यते। किन्तर्हि! एकार्थाध्यवसायितया। तेन नानवस्था, स्वत एव सर्वेषा प्रत्यवमर्शप्रत्ययानामेकार्थाध्यवसायित्वस्य सिद्धत्वात्। तेनायमर्थो भवति—एकाकारप्रत्यवमर्शहेतुत्वात् ज्ञानाख्यं कार्यमेकमित्युच्यते। तद्धेतुभावाच्चार्था अपि घटादय एकत्वव्यपदेशभाज इति। कश्चिदेकोऽपि सन् प्रकृत्यैव सामग्र्यन्तरान्तःपातवशादनेकार्थक्रियाकारी भवति। तत्रान्तरेणापि वस्तुभूतसामान्यादिधर्मभेदमतत्कार्यपदार्थभेदबाहुल्यादनेकधर्मसमारोपादनेका श्रुतिर्निवेश्यते। वृक्षशब्दो हि सर्वेष्वेव धवखदिरपलाशादिष्ववृक्षव्यवच्छेदमात्रानुमानं प्रतिबिम्बकं जनयति। तेनास्य बहुविषयत्वात् सामान्यं वाच्यमुच्यते। धवादिशब्दस्य तु खदिरादिव्यावृत्तिः कतिपयपादपावसायिविकल्पोत्पादकत्वाद् विशेषो वाच्य उच्यते। तेन सामान्यविशेषवाच्त्विव्यवस्था विनापि सामान्यविशेषाभ्या सिद्ध्येत्।

## १९. अपोह्यभेदेनापोहभेदस्यापारमार्थिकत्वप्रतिपादनम्

यदि हि पारमार्थिकोऽपोह्यभेदेनाधारभेदेनापोहभेदोऽभीष्टः स्यात् तदा दोषः स्यात्। अत्र तु कल्पनया सजातीयविजातीयपदार्थभेदनिबन्धना व्यावृत्तयो भिन्नाः कल्प्यन्ते, न परमार्थतः।

ननु यदि हि गवादीना वस्तुभूतं सारूप्यं प्रसिद्धं भवेत्, तदाऽश्वाद्यपोहाश्रयत्वमेषामविशेषेण सिद्ध्येत्, नान्यथा। ततश्चापोहविषयत्वमेषामिच्छताऽवश्यं सारूप्यमङ्गीकर्त्तव्यम्, तदेव सामान्यं वस्तुभूतं शब्दवाच्यं भविष्यतीत्यपोहकल्पना निरर्थकैवेति चेत्, न, अपोह्या अश्वादयः, गोशब्दस्य तदपोहेन प्रवृत्तत्वात्। अपोहगोचराः शाबलेयादयः, तद्विषयत्वादगवापोहस्य। तेन यद्यप्येकस्य सामान्यरूपस्यान्वयो नास्ति, तथाप्यभिन्नप्रत्यवमर्शहेतवो ये ते प्रसिद्धसारूप्या भवन्ति। ये तु विपरीतास्ते विपरीता इति सिद्धान्तस्यापोहवादिभिः स्वीकारात्[1]।

१. तत्त्वस० श्लो० १००३–१०५२।

## २०. शब्दानामन्यापोहार्थकत्वे धर्मकीर्तिसम्मतिप्रतिपादनम्

श्रुतस्याविसंवादित्वमसिद्धम्, अर्थाभावेऽपि शब्दानामुपलम्भात्। य एव हि शब्दाः सत्यर्थे दृष्टा., ते तदभावेऽपि दृश्यन्ते। अत. शब्दाना विधिद्वारेणार्थाभिधायकत्वानुपपत्तेरन्यापोहमात्राभिधायकत्वमेवोपपन्नम्।

तथा चोक्तं प्रमाणवार्त्तिके—

विकल्पप्रतिबिम्बेषु तन्निष्ठेषु निबध्यते।
ततोऽन्यापोहनिष्ठत्वादुक्ताऽन्यापोहकृच्छ्रुतिः॥
व्यतिरेकीव यज्ज्ञाने भात्यर्थप्रतिबिम्बकम्।
शब्दात् तदपि नार्थात्मा भ्रान्तिः सा वासनामयी[1]॥

अयमर्थ—यद्यपि नाम बाह्यस्वरूपासंस्पर्शी विकल्प. शब्दादुदयवान्, तथापि तद्विकल्पप्रतिबिम्बकं बाह्यनिष्ठं बाह्यद्वारेणोत्पत्ते. पारम्पर्येणोत्पत्तेरर्थासंस्पर्शि बाह्यनिष्ठमपि। तच्च प्रतिबिम्बकमन्यव्यावृत्तपदार्थजनितमन्यव्यावृत्तमेव प्रतिभाति। तदव्यतिरिक्तैव व्यावृत्ति शब्दात् प्रतीयतेऽन बाह्यव्यतिरिक्ता। तेनान्यव्यावृत्ताकारविकल्पजननादन्यव्यावृत्तेषु प्रवर्तनाच्चापोहकृच्छ्रुतिरुक्ता। ततो हि विकल्पादबाह्यसंस्पर्शिनोऽप्यन्यव्यावृत्तेषु व्यवहारिणां वृत्तेरन्यव्यावृत्तिविषय उच्यते।

ननु बुद्धिव्यतिरिक्तं विकल्पस्य ग्राह्यम्, तत्कथं तस्य बुद्धिरूपता? न हि तद्व्यतिरेकेण प्रतिभासमानं तदेव भवति, भेदप्रतिभासो हि भेदलक्षणं तदन्यस्य भेदनिबन्धनस्याभावात्, नाभेदप्रतिभासमात्रस्यातल्लक्षणत्वात्। अभ्रान्तो हि भेदप्रतिभासो भेदलक्षणम्, न तु यः कश्चिदित्याह—व्यतिरेकी वेति।

यद्यपि वर्णसंस्थानप्रतिभासि तत्, तथापि न तद् वस्तु, अपि तु तत्प्रतिबिम्बकं को विरोध इति चेत्, यतो वासनालक्षणाद्धेतोरुत्पत्तिरस्य, तथापि कस्मादवस्तु, आन्तरकारणमात्राधीनत्वात् तैमिरिकोपलब्धकेशादिवत्। अथ वासनाबलादुत्पद्यमानमपि वस्त्विव? नैवं वस्तु भवतीति राद्धान्तात्[2]।

तदेव तर्हि बुद्धिलक्षणं वस्तुशब्देन विधीयते, तदेवान्यापोहो वस्तुभूत इति चेत्, अत्रोच्यते—अपि नाम शब्दाद् वस्तुलेशप्रतिपत्तिः स्यादिति संकेत. क्रियते, न बुद्धिप्रतिबिम्बकमात्रप्रतिपादनाय। अतः संकेतक्रिया व्यर्था, वस्त्ववबोधनार्थत्वात् तस्याः। न तर्ह्यन्यापोहोऽपि शब्दार्थः। ततस्तत्रापि संकेतक्रिया न भवेत्, तस्याप्यन्यापोहस्य बुद्ध्याकारत्वात्, न शब्दार्थाशब्दस्यैवान्यापोहत्वात्।

ननु तर्ह्यन्यापोहेऽपि संकेते कृतेऽर्थेषु प्रवृत्तिर्न स्यात्, तस्यार्थात्मत्वाभावादित्युच्यते—यदि स एवान्यापोह. तदा तस्य प्रतिपादने नार्थाशताऽन्यापोहस्य स्यात्।

१. प्रमा० वा० २।१६४—१६५। २ प्रमा० वा० प० का० १६२—१७३।

अर्थांश एव ह्यन्यापोहोऽर्थांशं शब्द: कमाहेति प्रश्ने अन्यापोह इति प्रतिवचनम्। स चार्थे नास्त्याकारो बुद्ध्याकारत्वात्। यो हि नार्थेन तत्प्रतिपत्त्यार्थप्रतिपत्तिस्तैमिरिककेशादिप्रतिपत्तिवत्।

## २१. अपोहस्य सामान्यत्वसमर्थनम्

किञ्च, सामान्यमन्यापोह इतीष्यते। यत. शाब्दो हि शावलेयादिष्वन्वयी दृश्यते। तस्य चान्वयिनोऽन्वयिनार्थेन प्रयोजनेन भवितव्यम्। स चाकारोऽनन्वयी, धियो भेदाभावात्। दर्शनाभ्यासेन जनितत्वाद् बुद्धिवदेवानन्वयी। न हि कार्यस्यान्वयित्वं युक्तम्, कारणभेदेन भेदात्। तस्मादनन्वयित्वादेव नापोह प्रतिबिम्बकम्। तस्मान्न वस्त्वन्यापोह., नापि बुद्ध्याकार:। कथं तर्हि शब्दादर्थप्रतीतौ सामान्यप्रतीति। वस्तुगतव्यावृत्तिप्रतीतौ हि वस्त्वेव प्रतिपन्नम् न च तत्सामान्यम्।

अथ वस्तु न प्रतीयते, कथं वस्त्वंशरूपान्यापोहगतिरिति चेत्, बुद्धिरूपमेव वस्त्वित्यारोपेण तदेकत्वाध्यवसायात् प्रत्येति, न परमार्थेन। तच्चान्यव्यावृत्तमित्यन्यापोह शब्दार्थ। तच्च सर्वत्र बुद्धिरूपमध्यारोप्यते। तत. सामान्यमन्यापोहो वस्त्वंशश्चेति प्रतीयते। मिथ्यावभासत्वान्न वस्तुविषय:, अन्यापोहस्य च सत्यत्वान्न हि तत्र बाधकमस्ति। यथा वस्त्वाकारे बाधको हि न तत्र प्रवर्तते। अन्यव्यावृत्तो यन्न भवतीति। ततो बाधकभावाभावाभ्यामप्रतिपन्नेतरव्यवस्था संव्यवहारत, न परमार्थत.।

तस्मादबाधितत्वादन्यापोहप्रतिपादनस्य बाधितत्ववदितरस्यापोह: शब्दार्थ इत्यवगम्यते। तेन तमन्यापोहं शब्दार्थमनुयान्ति शब्दा अनिष्टपरिहारेण च वर्तयन्तीति सान्यापोहकारिणी श्रुतिः।

## २२. पराभिमतविकल्पप्रतिबिम्बस्यान्यापोहत्वमापाद्य प्रत्याचष्टे

अथवा विकल्पप्रतिबिम्बकमेवान्यापोहो बाह्यत्वेनाध्यवसितो भवतीति न दोषो न तु स्वेन रूपेण। तस्मान्न किञ्चित् स्वेन रूपेणाविधेयं शब्दस्येति न विधि. शब्दार्थः।

ननु स्वरूपे प्रतिभासमाने ज्ञानस्य कथं बाह्ये प्रवर्तते ? बाह्यत्वेनाध्यवसायात्। कोऽयमध्यवसायः ? तद्व्यवहारविषयतया व्यवस्थानम्। कथमन्योन्यव्यवहारविषय., तत्रानुरागाभ्यासात् सादृश्याद् गोत्रस्खलनवत्।

ननु तत्रान्यरूपाध्यारोपोऽध्यवसाय इति चेत् ? न, अध्यारोपस्यापि ज्ञानान्तरत्वात्। यदि तेन तद् वस्तुप्रतिपन्नम्, कोऽध्यारोप: ? अन्यत्र प्रतिपन्नमिति चेत्, किं तदन्यत्रास्ति ? तथेति चेत्, नाध्यारोप सत्यत्वात्। अथ नास्ति ज्ञानमेव,

तर्हि कथमन्यस्याध्यारोपः ? यत्रापि तदध्यारोप्यते तदपि ज्ञानरूपमर्थरूपं वा। तदा तत्रारोप इति कोऽर्थ. ? तत्र तत्प्रतिपन्नं तेन सह प्रतिपन्नन्तदा च नाध्यारोपः।

अथाविद्यमानमेव विद्यमानतया प्रतीयते। किमविद्यमानता प्रतिपन्ना। अन्येन प्रतिपन्ना तद्रूपस्यानुपलम्भादिति चेत्, न, तस्यागोचरत्वात् कथमभावः। गोचरीभूतस्य हि वस्तुनोऽनुपलम्भो गमकः। इन्द्रियवैगुण्यात् तथा प्रतिपत्तिरिति चेत्, अपूर्वप्रतिपत्तिरेव सा, नाविद्यमानप्रतिपत्तिः, तस्य तदैव विद्यमानत्वात्।

अथाप्राप्य व्यवहारान्न करोति प्राप्यव्यवहारकरणात्। एवन्तर्हि तदन्यव्यवहारकरणमेव तदन्याध्यारोप इति तदेवायातमन्यव्यवहारविषयीकरणमध्यारोपः। तस्मादन्यापोह. शब्दार्थः। अत एवाह—

तस्मात् संकेतकालेऽपि निर्दिष्टार्थेन संयुत।
स्वप्रतीतिफलेनान्यापोहः सम्बध्यते श्रुतौ[1]॥

संकेतयन्नपि न विधिमुखेन संकेतकार· संकेतं करोति, अपि त्वन्यापोहमुखेनैव। यतः संकेतकालेऽपि अन्यापोह एव श्रुतौ सम्बध्यते न वस्तु।

नन्वयं देवदत्त इति संकेते स्वलक्षणमेव सम्बध्यमानमीक्ष्यते, नेदं साधीयः। निर्दिष्टोऽप्यर्थः प्रतिबिम्बकमेवोपलक्षयति। तथा हि—

संकेतोऽर्थप्रतीत्यर्थमभिप्रेतो द्वयोरपि।
प्रतीतिः प्रतिबिम्बस्य नत्वध्यक्षस्य वस्तुनः॥

अस्येदन्नामेत्यस्मादिदमन्यदपि प्रतिपत्तव्यम्। ततोऽन्यत् कालप्रतीत्यवस्थाव्याप्त्यैव संकेतो नियमेन द्वयोरपि स्वपरयोरभिप्रेतः। ततोन्यापोह एव सम्बध्यते श्रुतौ न स्वलक्षणम्। अथापि स्यात्, अस्येदन्नामेति न व्याप्तिः प्रतीयते। प्रतिबिम्बस्य केवलमस्येदन्नामेति स्वलक्षणमेव संकेतविषयतया प्रतीयते इति चेत्, न, अत्यन्ताभ्यासादेवम्प्रतीतेरपेक्षापूर्वकारित्वाद्वा। विपर्यये तु नियमेनैव प्रतिबिम्बकप्रतीतिः। यस्तु पुनर्व्यवहारात् संकेतं प्रतिपन्नवान्, यस्य नियमेन संकेतकालरूपाध्यवसायः प्रतिबिम्बरूप.। तथा हि—

अस्येदन्नामसंकेतादस्मादेतत् प्रतीयते।
प्रेक्षावतो भवत्येतत् प्रेक्षावानन्यथा कथम्॥
इदमानयेति वचनात् तस्यानयनदर्शने।
नामास्येदं मयाप्येतत् प्रत्येयमिति शब्दतः॥

---

१. प्रमा० वा० ३।१७१।

अथवा निर्दिष्टोऽर्थो यः प्राक् प्रतिपादित. प्रतिबिम्बस्वभावः, तेन संयुक्तोऽन्यापोहो व्यावृत्तिरूपः। तस्य च प्रतिबिम्बस्य व्यावृत्तिप्रतिपादनमेव फलं न स्वरूपप्रतिपत्तिः, स्वरूपस्यार्थेऽभावात्, व्यावृत्तेश्च भावात्। अन्या सा व्यावृत्तिरिति चेत्, न, अपोद्धारकल्पनया तदेकत्वव्यवहारात्। अपि च, शब्दस्य हि अन्यत्र तद्विजातीये दृष्टत्वात् क्वचित्तु तज्जातीये दर्शनादपोह एव संकेत इति ज्ञायते।

## २३. सामान्ये व्यक्तौ वा शब्दानां संकेतस्य प्रत्याख्यानम्

सामान्ये व्यक्तौ वा संकेत इति किन्न भवतीति चेत्, न, तथा सति विधिरूपेणैव संकेते सर्वत्र दर्शनप्रसङ्गात् सामान्येऽपि दर्शनमात्रापेक्षा स्यात्। अन्यत्रादर्शनापेक्षा न स्यात्। सामान्यस्य सव्यतिरेकस्य प्रतीत्यर्थमिति चेत्, स एव तर्हि तदन्यव्यतिरेकोऽस्तु किं सामान्यकल्पनया। व्यक्तिरेव हि तदन्यव्यतिरेकवती प्रतीयता किं सामान्येन। व्यक्तेरप्रतीतिरिति चेत्, न, व्यक्तिमन्तरेण सामान्येन प्रतीतेनापि किम्। लक्षितलक्षणाद् व्यक्तिरपि प्रतीयते इति चेत्, किं द्वयमत्र क्रमेण प्रतीयते। प्रतीयत एव प्रथमं गोत्वमात्रं प्रतीत्या विषयीकरोति पश्चाच्छावलेयादिविशेषम्, नैतदस्ति, न हि शावलेयादीनामवान्तरविशेषप्रतिपत्तिसम्भव। ततस्तदपि सामान्यमेव। ततो न व्यक्तीनां सामान्येन लक्षणं सामान्यस्यैव लक्षणात्। अवश्यं केनचिद् विशेषेण भवितव्यमत्रेति लक्षणमेवेति चेत्, न, शब्दस्यात्र व्यापाराभावात्। प्रतिपन्नमेतत् भवति न वेति नात्र प्रमाणम्।

न च सामान्यमपि लक्षणभूतं प्रतीयते, तेन बुद्धिरेव सा वस्तुरहितत्वात्। कथन्तर्हि अन्यापोहः शब्दार्थः ? अत एवान्यव्यावृत्तावेव प्रवर्तनात्। यदि तु सामान्यं व्यक्तिर्वा प्रतीयेत, न विसंवादो भवेत्, न हि प्रतिपन्ने विसंवादः, विसंवादे सति कथमन्यव्यावृत्तिरपि शब्दार्थ., अन्यदर्शनेऽपि तदन्यानयनात्। तत् तावन्नानयति। अन्यत्तु तेनानेतव्यमिति नास्ति नियमः। अत एव शाब्दप्रत्ययसमानाकारत्वादनुमानमपि व्यवच्छेदमात्रस्य साधकम्।

अथवाऽन्यत्रावृत्त्यपेक्षत्वादिति व्यवहारेण संकेतग्रहणेऽन्यत्राद्दष्टमपेक्षते। क्वचिच्च, सजातीये दृष्टमपेक्षते संकेतस्य ग्रहीता। ततो यत्र न दृष्टस्तस्य तावद् व्यवच्छेदञ्जानीते।

यत्र तु दृष्टो व्यवहारस्तदस्ति न वेति विवेकेन न जानाति। तथा हि तथैव संकेतग्रहणं यत आनयेदं वस्तु बाह्यस्यानयने व्यापारो नास्तित्वे वस्तुनः। अविद्यमानन्नानेतुं शक्यमिति चेत्, यदीयं राजाज्ञा तदाऽवश्यमानयति। स तु प्रमाणन्तरात् पर्यालोचयन्नास्तित्वं प्रतिपत्त्या विषयीकरोति, अर्थापत्त्या वा। अर्थापत्तिसहित शब्दोऽस्तित्वे प्रमाणमिति चेत्, न, अर्थापत्तेरसम्भवात्। ततः सति सम्भवे आनीयते नान्यथा। अन्यत्तु नानीयत एव।

## २४. अन्वयव्यतिरेकयोरेकतरस्य प्राधान्यनिरसनम्

अन्ये तु पुन सर्वतो विजातीयाद् व्यावृत्ति क्वचिद् विधेये वृत्तिमपेक्षत इति व्यतिरेकितात्पर्यमन्वये तु नेति व्यतिरेक एव प्राधान्येन प्रत्याय्यते। तदसत्— यदि नामान्वयव्यतिरेकयो प्राधान्यमेकस्य तथापि न विधिशब्दार्थव्यतिक्रम·। नचाप्राधान्यमन्वयस्य प्रतिपादयितुं शक्यम्, एकव्यक्तिदर्शनेनापि सामान्यस्य सर्वात्मना प्रतिपादनात् तदन्वयस्याप्राधान्यमिति न युक्तम्।

अस्येदं नामेति न सर्वदाऽनेन भवितव्यम्। शब्दप्रयोगेऽस्य तु नामेदमित्येतन्मात्रमस्मादेतद् व्यवहर्त्तव्यमिति। अन्यत्र तु व्यवहाराभावादन्यापोहविषयता शब्दानाम्। अथ यत्र वस्तु प्राप्यतेऽनुमानेन तज्ज्ञानस्य कथमन्यापोहविषयता। तत्राप्यन्यापोहविषयतेष्यत एवेति न, तत्र विशेषे सन्देहादेव हि तत्र प्रतीतिरनग्निस्तावदयन्न भवति। अग्निस्तु किम्भूत इति न ज्ञायते।

## २५. अनुमानेन शब्दानामन्यापोहार्थकत्वसमर्थनम्

ननु यदि सामान्यं न परिच्छिन्नं कथमग्निविशेषे सन्देहः! प्रतीतिमात्रेण सन्देहात्। प्रतीतिस्तावदियमस्ति विशेषो न ज्ञायते किमग्निरस्तिनेति किम्भूतो वात्राग्निः। ननु यत्र कार्यहेतुस्तत्र नियमेनाग्निरिति चेत्, न, स्पर्शविशेषस्याग्नित्वात्। तत्र च न नियमः कथमग्निप्रतीतिः! उष्णतामात्रस्य प्रतीते.। सामान्यं प्रतीयत इति चेत्, न, न्यूनाधिक्यस्यैव भावात्। न च न्यूनाधिक्यादिभेदव्यतिरेकेणोष्णसामान्यन्नाम। तत्र च न प्रतीतिः।

ननु प्रतीतिरपि न्यूनाधिक्यमेवावलम्बते। आलम्बताम्, न त्वेकैव बुद्धिः। कदाचिदेवं कदाचिदेवमित्यपरापरबुद्ध्युत्पत्तेरेकमेवैकदा नानारूपमालम्बत इति चेत्, न, एनासत्येन नियमेन भवितव्यम्। तस्मात्तत्रापि प्रतीतिमात्रमेव सत्यन्नान्यदित्यन्यापोहमात्रं शब्दार्थोऽनुमानस्य च, न चैतद् वस्तुनि युक्तम्, लिङ्गेऽपि सम्बध्यतेऽपोह इत्यपि बोध्यम्। तथा चोक्तम्—

> अन्यत्रादृष्टरूपत्वात् क्वचित् तद्दृष्टयपेक्षणात्।
> श्रुतौ सम्बध्यतेऽपोहो नैतद्वस्तुनि युज्यते[1]॥

तेन जात्यादीनां प्रमाणाभावादसत्त्वे न जात्यादिसम्बन्धकल्पना द्रव्यसम्बन्धकल्पनापि द्वयोः स्वरूपेण प्रतिभासमानयोः कैव! संयोगस्य प्रतिभासनादिति चेत्, न, अकल्पयतोऽप्यन्यकल्पनेन तद्रूपस्य प्रतिभासनात्। तावन्मात्रकेण कल्पनासम्भवः। सैव कल्पनेति चेत्, इष्टत्वान्न किञ्चिद् बाधितम्। उभयकर्मजोऽन्यतरकर्मजः संयोगजश्च संयोग इति न प्रतीतिरस्ति। स्वरूपमात्रेण प्रतीतिरिति चेत्, न,

---

१. प्रमा० वा० २।१७२।

संयोगस्वरूपस्याप्रतिभासनात्। वस्तुद्वयमेव तथाभूतमुत्पन्नं प्रतिभासविषयो न संयोग.। तदेव वस्तुद्वयं संयुक्तमिति तु प्रतीतिरपि न, ततोऽपर: संयोग इति न, पूर्वेण सहैकत्वप्रतीतेरभावात्। न हि प्रत्यक्षं पूर्वापरभावे व्याप्रियते। मा भूत् पूर्वप्रतीतिस्तथापि संयुक्तप्रतीतिरस्तीति चेत्, न,

असंयुक्तं हि संयुक्तं पुनरेतद्धि योक्ष्यते।
एकेन कार्यं कर्त्ताहमिति तद्वित्तिरिष्यते॥
यदि नेयं प्रतीतिः स्यात् वृथा संयोगकल्पना।
एकमेतद्धि भवति ततोऽयोगोऽर्थवान् भवेत्॥

इति प्रतिपादनात्। तथा चोक्तम्—

तस्माज्जात्यादितद्योगानार्थे तेषु च न श्रुतिः।
सम्बध्यतेऽन्यव्यावृत्तौ शब्दानामेव योजनात्[1]॥

## २६. प्रतिभासस्य वाक्यार्थत्वे भर्तृहरिमतप्रदर्शनम्

अक्रम एव निर्विभागः पानकरसादिवत् प्रतिभासात्मको वाक्यार्थ., स्फोटात्मकं च वाक्यमित्येकयोगक्षेमत्वादुक्तम् 'वाक्यं वाक्यार्थ एव च' इति। यस्य वस्तुन. प्रत्यक्षादिप्रमाणपरिच्छिन्नं स्वरूपं विद्यते नीलं पीतमिति तस्य तावता नात्मा व्यवहारगोचरता नीयते।

अयमाशयः—पदार्थ. पृथग्रूप. सन्नपि पङ्गुप्रायोऽसाविति व्यवहारपदवी नेतुं वार्यते संसर्गस्य त्वन्वयात्मनः प्रधानस्य तदितरोपपत्तेः पदार्थो यावदुपायो द्वारमिति तन्निरूपणमेव साफल्यं भजत इति तस्यैव सत्यत्वं युक्तम्।

अर्थस्य रूपनिर्धारणस्य स्वरूपपरिच्छेदोऽशब्द एव, न तत्र शब्द उपायभावमुपयाति। तद्धि निर्विकल्पकैकसमधिगम्यमित्यर्थः। अर्थप्रतिभाससदृशस्मृतावेव शब्दानामुपयोग·। तेन शब्दस्यार्थेन सह सुदूरमेव विप्रकर्षः, ततश्च कथं शब्दोऽर्थमभिदधीतेत्यसत्य एव शब्दार्थः पर्यवस्यति।

यदि शब्देन यथावद् बाह्योऽर्थः प्रत्याय्येत तदा शब्दसन्निधापितोऽसौ तामर्थक्रिया कथं न कुर्यात्, यतश्चाग्निसम्बन्धाद्दग्धो दाहमन्यथाऽनुभवति दाहशब्देन च दाहमन्यथाऽवगच्छतीति शब्दार्थयोर्नास्ति कश्चिद् वास्तव. समन्वयः। तदेवं पदार्थो विपरीतख्यातिरूपोऽसत्ख्यातिस्वरूपो वा बोद्धव्य इति पदार्थस्यासत्यत्वमभिहितम्[2]।

---

१. प्रमा० वा० प्र० प० १७३। २. वा० प०, का० २।४१३–४१६।

तदुक्तम्—

अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः।
शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते[1] ॥

अस्यार्थः—अन्यदेव रूपादिस्वलक्षणमिन्द्रियग्राह्यम्। तस्मादन्य शब्दस्य गोचरो विषय इति यावत्। शब्दात् प्रत्येति भिन्नाक्षः प्रध्वस्तनयन·, न तु प्रत्यक्षं यथा भवति तथेक्षते। समानविषयत्वे वानन्धस्येवान्धस्यापि शब्दादपरोक्षैव प्रतिपत्तिः स्यात्। तथात्वे इन्द्रियाग्निसम्बन्धादिवद् दाहशब्दादपि दाहार्थप्रतिपत्तिः स्यात्।

## २७. पदार्थस्यासत्यत्वं वाक्यार्थस्य च सत्यत्वम्

तदेवं पदार्थो विपरीतख्यातिरूपोऽसत्ख्यातिस्वरूपो वाऽवगन्तव्य इति पदार्थस्यासत्यत्वमिति तदाच्छुरितस्य वाक्यार्थस्य सत्यत्वं प्रतिपाद्यते—

पृथङ्निविष्टतत्त्वाना पृथगर्थानुपातिनाम्।
इन्द्रियाणां यथा कार्यमृते देहान्न कल्पते[2] ॥

पृथङ्निविष्टं तत्त्वं स्वरूपं पार्थिवत्वादिना भेदेन अथवा प्रतिनियतस्थान-समाश्रयणेन निविष्टमभिव्यक्तं तत्त्वं स्वरूपं येषा तानि तथा तेषामिति तथा पृथक् पृथगर्थ शब्दादिलक्षणमनुपतन्ति विषयीकुर्वन्ति तच्छीलास्ते तथा तेषाम्, यथा सत्यपि पृथक्स्वभावे देहादिना कार्य प्रातिस्विकं नोपकल्पते, तथैव पदाना केवलानां वाक्यव्यतिरेकेण स्थितानामर्थवत्ताविरहः परिदृश्यत इति।

तदुक्तम्—

तथा पदाना सर्वेषा पृथगर्थनिवेशिनाम्।
वाक्येभ्य. प्रविभक्तानामर्थवत्ता न विद्यते ॥
संसर्गरूपं संसृष्टेऽवर्थवस्तुषु गृह्यते।
नात्रोपाख्यायते तत्त्वमपदार्थस्य दर्शनात्[3] ॥

---

१. उद्धृतोऽयं श्लोक·—प्रश० व्यो० पृ० ३८४, न्या० म० पृ० ३१; शास्त्रवा० श्लो० ३६६; अनेकान्तजय० पृ० ४५, प्रमेयक० ४४६; सम्मति० टी० पृ० २६०; धर्मस० वृ० पृ० १४६; स्या० र० पृ० ७१०।

२ वा० प० २।४२७।

३. वा० प० २।४२८-४२९।

# तृतीयोऽध्यायः

## शब्दार्थसम्बन्धविचारः

### १. शक्तिविषयकं नैयायिकमतम्

#### ( क ) वृत्तेर्द्वैविध्यम्

वृत्तिर्द्विधा-संकेतलक्षणाऽन्यतररूपेति। तथा चोक्तं शक्तिवादे 'संकेतो लक्षणा चार्थे पदवृत्तिः"[1] इति। एवञ्च तत्तत्पदेन जायमानेऽर्थबोधे तत्तत्पदवृत्ते-र्वृत्तेर्ज्ञानात् पदार्थोपस्थितिरन्वयव्यतिरेकाभ्या कारणमितिवृत्तिज्ञानाभावे श्रुतोऽपि शब्दो नार्थबोधं जनयति। घटपदादेश्चाकाशादौ वृत्तेरेवाभावात् नैव तद्विषयको बोध.। अत एव वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभिधीयते।

#### ( ख ) शक्तिस्वरूपम्

तत्र 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इतीश्वरेच्छा, इच्छा वा संकेत:, स एव च शक्तिपदेन व्यपदिश्यते। अत्र समीपवर्तिबोधकेनेदमोच्चारणकर्मीभूतं परामृश्यते, तस्याभेदसम्बन्धेन शब्देऽन्वय', शब्दपदोत्तरपञ्चम्या जन्यत्वमर्थ, तत्र शब्दस्य निरूपितत्वसम्बन्धेनान्वय, जन्यत्वस्य च बोद्धव्यपदघटकबुधधात्वर्थे बोधे स्वरूप-सम्बन्धेनान्वयः, बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः, तस्याश्च स्वरूपसम्बन्धेनार्थेऽन्वयः। एवञ्च 'इदमभिन्नशब्दनिरूपितजन्यतावद्-बोधनिरूपितविषयतावानर्थ.। इदम्पदजन्यो यो बोध:, तस्य विषयोऽर्थ इति यावत्, इत्यर्थविशेष्यिका, 'इदं पदमिममर्थं बोधयतु' अत्रेदमर्थस्याभेदेनार्थेऽन्वयः, अर्थस्य च विषयत्वरूपामर्थे वृत्तित्वसम्बन्धेनान्वय, विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः। बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूप आख्यातार्थेऽ-न्वयः, जनकत्वस्य च स्वरूपसम्बन्धेन पदेऽन्वयः। तिङन्तस्थले प्रथमान्तार्थविशेष्यक-बोधस्यैव नैयायिकैः स्वीकारात्। एवञ्च 'इदमर्थनिष्ठविषयतानिरूपकबोधनिष्ठ-जन्यतानिरूपितजनकतावत्पदम्' इति पदविशेष्यिका वेश्वरेच्छा, इच्छा वा संकेतरूपा वृत्तिः। इयमेव च वृत्तिः सम्बन्धशब्देनापि निरुच्यते, शाब्दबोधौपयिकः, अर्थप्रति-योगिकः, पदानुयोगिकः, पदप्रतियोगिकोऽर्थानुयोगिको वा सम्बन्धो वृत्तिरिति लक्षणात्।

#### [अ] शब्दार्थयोः सम्बन्धप्रतिपादनम्

ननु नैव शब्दस्यार्थेन सम्बन्धः कश्चिदस्ति, न हि शब्दार्थयोः कुण्डबदरयोरिव संयोगस्वभावः, तन्तुपटयोरिव समवायात्मा वा सम्बन्धः प्रत्यक्षमुपलभ्यते, तन्मूल-

---

[1] शक्तिवादः पृ० १।

त्वाच्च सम्बन्धान्तराण्यपि न सन्ति। तदुक्तं मुखे शब्दमुपलभामहे, भूमावर्थमिति। नाप्यनुमीयते शब्दस्यार्थेन सम्बन्ध, अग्निमधुशब्दोच्चारणे मुखस्य दाहमाधुर्यानुपलम्भात्। न च शब्ददेशेऽर्थः सम्भवति, नचार्थदेशे शब्दः, स्थानकरणप्रयत्नाना तद्धेतूनां घटाद्यर्थदेशेऽनुपलम्भात्। व्यापकत्वं तु शब्दस्य प्रतिषिद्धमेवेति चेत्।

अत्रोच्यते—न संश्लेषलक्षणः शब्दार्थसम्बन्धोऽस्माभिरभ्युपगम्यते। न चापि कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावादय· शब्दस्यार्थेन सम्बन्धा। एवन्तर्हि नास्ति कश्चित् सम्बन्धोऽर्थेन शब्दस्य। नास्ति शब्दस्यार्थेन सम्बन्धः, प्रत्ययनियमहेतुत्वात्, धूमादिवत्। तत् किं शब्दार्थयोरविनाभावः सम्बन्ध.। सोऽपि न। एवं हि शब्दोऽनुमानमेव स्यात्! कस्तर्हि समय इति ब्रूम.—कोऽयं समयो नाम! अभिधानाभिधेयनियमनियोग. समय उच्यते। यद्येवं किमनाशङ्कनीयसंश्लेषपरिनोदनेन तद्दूषणेन च। उच्यते—शब्दार्थाभेदवादिना हि वैयाकरणानामेष संश्लेष उपपत्तिमान् समयोऽप्ययमनुपपन्न एव। स हि पुरुषकृत. संकेतः, न च पुरुषेच्छया वस्तुनियमोऽवकल्पते, तदिच्छाया अव्याहतप्रसरत्वात्। अर्थोऽपि किमिति वाचको न भवति! नचैवमस्ति, न हि दहनमनिच्छन्नपि पुरुषो धूमान्न तं प्रत्येति, जलं वा तत इच्छन्नपि प्रतिपद्यते। तत्र यथा धूमाग्न्योर्नैसर्गिक एवाविनाभावो नाम सम्बन्धः, ज्ञप्तये तु भूयोदर्शनादि निमित्तमाश्रीयते। एवञ्च शब्दार्थयोः सांसिद्धिक एव शक्त्यात्मा सम्बन्धः। तद्व्युत्पत्तये तु वृद्धव्यवहारप्रसिद्धिसमाश्रयणम्।

## [आ] शक्तेर्नैसर्गिकत्वम्

ननु तयोः स्वाभाविके सम्बन्धे सति दीपादिवत् किं तद्व्युत्पत्त्यपेक्षणेनेति चेत्, न, शब्दस्य ज्ञापकत्वात्, ज्ञापकस्य धूमादेरेतद्रूपं यत् सम्बन्धग्रहणापेक्षं स्वज्ञाप्यज्ञापकत्वम्। तद्योग्यतादयस्तु प्रत्यक्षसामग्र्यन्तर्गतत्वान्न व्युत्पत्त्यपेक्षा भवन्ति। शक्तिस्तु नैसर्गिकी, यथा रूपप्रकाशिनी दीपादेस्तथा शब्दस्यार्थप्रतिपादने। तस्माद् न समयमात्रादर्थप्रतिपत्ति.।

## [इ] समयस्य ज्ञानरूपत्वम्

अपि चाभिधानाभिधेयनियमनियोगरूप. समयो ज्ञानमेव न ततोऽर्थान्तरम्। ज्ञानं चात्मनि वर्तते न च शब्दार्थयोरिति न तयोः सम्बन्धः स्यात्। किञ्च समयः क्रियमाणः प्रत्युच्चारणं वा क्रियते प्रतिपुरुषं सर्गादौ वा सकृदीश्वरेणेति! प्रत्युच्चारणं प्राक्तन एव क्रियते नूतनो वा! नवस्य तावत् क्रियमाणस्य कथमर्थप्रत्यायनसामर्थ्यमवगम्यते, तदवगतौ वा किं तत्करणेन! पूर्वकृतस्य तदा कृतत्वादेव पुनः करणमनुपपन्नम्। एकस्य वस्तुनो ज्ञप्तिरसकृदावर्तते नोत्पत्ति·। प्रतिपुरुषमपि सम्बन्धो भिन्नोऽभिन्नो वा क्रियते! भेदपक्षे कथमेकार्थसंज्ञानं गोशब्दस्य सास्नादि-

मानर्थं, केसरादिमानश्वशब्दस्येति । अभेदेऽपि तथैव कृतस्य करणायोगात् ज्ञानमेव सम्बन्धस्य न करणम् । सर्गादावपि सकृत्सम्बन्धकरणमयुक्तं तथाविधकालासम्भवादेव नहि शब्दार्थव्यवहाररहित. कश्चित्काल उपपद्यते । तस्मान्नित्यस्यैव सम्बन्धस्य लोकतो व्युत्पत्ति·, न पुन करणम् । व्युत्पत्तिपक्षश्च न करणपक्षाभिहिता दोषाः स्पृशन्ति प्रत्यक्षसिद्धत्वात् । प्रत्यक्षं हीदमुपलभ्यते वृद्धाना हि स्वार्थे व्यवहरमाणानामुपशृण्वन्तो बालास्ततस्तत· शब्दात्तं तमर्थ प्रतियन्ति । तेऽपि वृद्धा यदा बाला आसन् तदाऽन्येभ्यो वृद्धेभ्यस्तथैव प्रतिपन्नवन्तस्तेऽप्यन्येभ्य इति नास्त्यादि· संसारस्येति ।

## [ई] शक्तिसमययोर्भेदे प्रमाणम्

अपि च समयमात्रशरण. शक्तिशून्यः शब्द. कथमक्षिनिकोचहस्तसंज्ञादिभ्यो भिद्येत । स हि तदानीं काशकुशप्रतोदाभिघातस्थानीय एव भवेत् । तथा च 'शब्दादर्थं प्रतिपद्यामहे' इति लौकिको व्यपदेशो बाध्येत, समयादर्थं प्रतिपद्यामहे इति स्यात् । समयपक्षे च यदृच्छाशब्दतुल्यत्वं सर्वशब्दाना प्राप्नोति । तेन गवाश्वादीना शब्दाना नियतविषयत्वं न स्यात् ।

## ( ग ) सर्वशब्दानां सर्वार्थप्रत्यायनशक्तिमत्त्वम्

यत् पुनरुच्यते "जातिविशेषे चानियमात्" [ न्या० सू० अ० २।१।५७ ] समयरूपः सम्बन्ध इति । जातिशब्देनात्र देशो विवक्षित. । क्वचिद्देशविशेषे कश्चिच्छब्दो देशान्तरप्राप्तप्रसिद्धमर्थमुत्सृज्य ततोऽर्थान्तरे वर्तते । यथा चौरशब्दस्तस्करवचन ओदने दाक्षिणात्यै· प्रयुज्यते । एतच्च समयपक्षे युज्यते, नित्ये तु सम्बन्धे कथं तदर्थव्यभिचार इति । तदप्ययुक्तम्; सर्वशब्दाना सर्वार्थप्रत्यायनशक्तियुक्तत्वात् क्वचिद्देशे केनचिदर्थेन व्यवहारः । अत एव चानवगतसम्बन्धे श्रुते सति सन्देहो भवति 'कमर्थं प्रत्याययितुमनेनायं शब्दः प्रयुक्तः स्यात्' इति । असत्या हि शक्तौ अकृतसमये निरवलम्बना प्रत्यायकत्वाशङ्केति । अथवाऽऽर्यदेशप्रसिद्ध एव शब्दानामर्थः, इतरस्तु म्लेच्छजनसम्मतो नादरणीय एव । तस्मात् समयपक्षस्यातिदौर्बल्यादकृत्रिम एव शब्दार्थयो सम्बन्ध इति न तत्र पुरुषस्य प्रभविष्णुतेति चेदत्रोच्यते—न नित्य सम्बन्ध उपपद्यते, शब्दवदर्थवच्च तृतीयस्य तस्य प्रत्यक्षादिना प्रमाणेनाप्रतीयमानत्वात् ।

## ( घ ) सम्बन्धस्य नित्यत्वनिरसनम्

ननु शक्तिरूपः सम्बन्ध इत्युक्तः, शक्तिश्च तदाश्रितेति कथं धर्म्यन्तरवत् पृथक्तया प्रतीयते ? नैतत् साम्प्रतम्, स्वरूपसहकारिव्यतिरिक्तायाः शक्तेः सूक्ष्माया प्रागेव विस्तरतः प्रतिक्षिप्तत्वात् । न च शक्तिः प्रत्यक्षगम्या, द्रव्यस्वरूपवदनुप-

लम्भात् । नानुमेया कार्याणामन्यथापि घटमानत्वात् । कल्पयित्वा च शक्तिमपरिहार्यः समयः, समयमन्तरेणार्थप्रतिपत्तेरसिद्धे । सिद्धे च समये तत एवार्थसिद्धेः किं नित्यसम्बन्धाश्रयणेन ?

## [अ] वाच्यवाचकव्यत्ययाभावः

यत्तूक्तं समयस्य पुरुषेच्छाधीनत्वात् तस्याश्चाव्याहतप्रसरत्वाद् वाच्यवाचकव्यत्ययः स्यादिति । तदयुक्तम्, शक्त्यभावे शब्दस्यैव वाचकत्वे योग्यत्वात् । का पुनः शक्त्यभावे योग्यताऽस्येति चेत्, योऽयं गत्वादिजातियोग क्रमविशेषपोषकृतो गत्वौत्वादिसामान्यसम्बन्धो हि यस्य भवति स वाचकत्वे योग्य इति, इतरस्तु वाच्यत्वे । यथा द्रव्यत्वाद्यविशेषेऽपि वीरणत्वादिसामान्यवतां च पटनिष्पत्तौ न तत्र शक्तिरस्तीत्युक्तम् । न च कारणे कार्यं सदिति सांख्यैरिव भवद्भिरिष्यते, तस्यामसत्यामपि शक्तौ सामान्यविशेषसम्बन्धस्य नियामकत्वान्न वाच्यवाचकयोर्व्यत्यय इति न शक्तिरूपः शब्दार्थयोः सम्बन्धः । न च तयोरविनाभावे धूमाग्न्योरिव सम्बन्धः, तत्र हि सम्बन्धः प्रतीयमान एव प्रतीयते धूमोऽग्निं विना न भवतीति इह पुनरयमस्मात् प्रतीयत इति एतावदेव व्युत्पत्तिपर्यवसानम् । अत एवावगतिपूर्विकैवावतिरिहेत्यनुमानाच्छब्दस्य भेद उक्त । प्रकाशकत्वमपि शब्दस्य समयप्रसादोपनतमेव न स्वाभाविकम् । सांसिद्धिके हि भ्रमित्वादिप्रयुक्तादन्यतो वा यतः कुतश्चिदभिनवादपि दीपादिव शब्दार्थप्रतीतिः स्यात् ।

## [आ] शक्तेर्नैसर्गिकत्वनिरसनम्

यत्तु नैसर्गिकेऽपि प्रकाशकत्वे शब्दस्य धूमादेरिव ज्ञापकत्वात् संबन्धग्रहणसापेक्षत्वमुक्तम्, स एष विषम उपन्यासः । न हि धूमादेः प्रत्यायकत्वं स्वाभाविकम्, अनलाविनाभावित्वं तु तस्य निजं बलं तत्र चागृहीते तस्मिन् प्रतीतिरेव न जायते इति युक्तं तद्ग्रहणं प्रतीत्यर्थम् । इह तु प्रतीतिशक्तिरेव स्वाभाविकी । भवताऽभ्युपगम्यते सा चेत् स्वाभाविकी, किं व्युत्पत्त्यपेक्षणेनेति । यच्चोच्यते प्रत्यायक इति प्रत्ययं दृष्ट्वाऽवगच्छामो न प्रथमश्रवण इति यावत्कृत्वः श्रुतेनेयं संज्ञा, अयं संज्ञीत्यवगम्यते तावत्कृत्वः श्रुतादर्थावगम इति सोऽयं समयोपयोग एव कथितो भवति । संज्ञासंज्ञिसम्बन्धो हि समय एवोच्यते । तदुपयोगमन्तरेण प्रत्यायकत्वानवगमान्न स्वाभाविकी शक्तिः ।

## [इ] ज्ञानस्य शब्दार्थविषयकत्वम्

यत्तूक्तम्—समयस्य ज्ञानात्मकत्वादात्मनिवृत्तिः न शब्दार्थयोरित्येतदप्यचतुरश्रम्, तदाश्रयत्वाभावेऽपि ज्ञानस्य तद्विषयत्वोपपत्तेः ।

## [ई] शक्तिसमययोरभेदः

यदप्युक्तम्–समयमात्रशरणे सृणिप्रतोदनोदननिर्विशेषे शब्दे शब्दादर्थं प्रतिपद्यामहे इति व्यपदेशो न स्यादिति। तदपि न किञ्चित्, नैसर्गिकशक्तिपक्षेऽपि शक्तेरर्थं प्रतिपद्यामहे न धूमादिति स्यात्। तङ्गत्वादविनाभावादेर्न तथा व्यपदेश इति चेत्, तदितरत्रापि समानम्—

धूमे हि व्याप्तिपूर्वत्वं शब्दे समयपूर्वता।
नानयोस्तदपेक्षाया करणत्वं विहन्यते[1]॥

अपि च, लौकिको व्यपदेश. समयापेक्षसाक्षितामिव भजते देवदत्तेनोक्तम् अमुतः शब्दादमुमर्थं प्रतिपद्य'स्व' इति। एवं हि व्यपदिशति लोकः। तस्मात् समय एव। अतश्चैवं देशान्तरे संकेतवशेन तत एव शब्दार्थान्तरप्रतिपत्तिः।

## [उ] शब्दानां सर्वार्थवाचकत्वाभावः

नन्वत्रोक्तं सर्वे शब्दा. सर्वार्थप्रत्यायनयुक्ता इति केनचिदर्थेन क्वचिद् व्यवहार इति तदेतदयुक्तम्, शक्तीना भेदाभेदविकल्पानुपपत्ते.। न शब्दस्वरूपाद् भिन्ना. शक्तयः, तथाऽनवभासात्। अव्यतिरेके चैकस्माच्छब्दादनन्यत्वात् परस्परमव्यतिरेकस्तासा स्यात्। न च भिन्नकार्यानुमेया भिन्ना· शक्तय. कार्यभेदस्यान्यथाप्युपपत्ते। सर्वशक्तियोगे च सर्वार्थप्रत्ययप्रसङ्ग.। समयोपयोगो नियामक इति चेत् स एवास्तु, किं शक्तिकल्पनेन ?

यदप्यभाणि—शब्दश्रवणे सति सर्वार्थविषयसन्देहदर्शनात् सर्वत्र तस्य शक्तिः कल्प्यते इति, तदप्यसारम्, न हि शक्तिकृत· सन्देह·, किन्तु गत्वादिवर्णसामान्यनिबन्धनः। तथा च गत्वादिजातिमता वर्णानामर्थे वाचकत्वमवगतम्। अमी तज्जातियोगिनो वर्णाः कस्यार्थस्य वाचका. स्युरिति भवति सन्देहः।

यत्पुनरुक्तम्—स एव शब्दस्यार्थो यत्रैनमार्याः प्रयुञ्जते न म्लेच्छजनप्रसिद्ध इति। तदेतत्कथमिव शपथमन्तरेण प्रतिपद्येमहि ? न हि म्लेच्छदेशेऽपि तदर्थप्रत्ययो न जायते बाध्यते वा सन्दिग्धो वेति कथं न शब्दार्थः ? आर्यप्रसिद्धिर्बाधिकेति चेत्, आर्यप्रसिद्धेरपि म्लेच्छप्रसिद्धिः कथं न बाधिका ? अक्षादिवच्च विकल्पमानार्थोपपत्तेः व्यवस्थितविषय एव विकल्पो भविष्यति। पिकनेमतामरसादिशब्दाना च भवद्भिः म्लेच्छप्रयोगादर्थनिश्चय आश्रित एव। अवेष्ट्यधिकरणे[2] च राज्यशब्दमान्ध्रप्रसिद्धेऽर्थे वर्णितवन्तो भवन्त इत्यलमवान्तरचिन्तनेन। तस्मात् समय एव सम्बन्ध इति युक्तम्। तदुक्तम्—'जातिविशेषे चानियमात्'[3] इति।

१. ना० म० प्र० पृ० २२३। २. शाबर भा०, अ० २, पा० ३ सू० ३।
३. न्या० सू० २।१।५७।

## २. नैयायिकमते लाघवप्रदर्शनम्

अथ यदुक्तम्—समय प्रत्युच्चारणं प्रतिपुरुषं च तत्करणमनभ्युपगतमेव दूषितम्, सर्गादौ सकृदेव समयकरणमिति नः पक्षः । अत एव न सर्वशब्दाना यदृच्छातुल्यत्वम् । केषाञ्चिदेव शब्दानामस्मदादिभिरद्यत्वे संकेतकरणात् त एव यदृच्छाशब्दा उच्यन्ते । सर्गादिश्च समर्थित एव, ईश्वरसिद्धावप्यविकल्पमनुमान-मुपन्यस्तम् । एष एव चावयोर्विशेषो यदेष शब्दार्थसम्बन्धव्यवहारस्तवानादि, मम तु जगत्सर्गात्प्रभृति प्रवृत्त इति । अद्यत्वे तु शब्दार्थसम्बन्धव्युत्पत्तो तुल्य एवावयो पन्था । तत्रापि त्वयं विशेषो यत्तव शक्तिपर्यन्ता व्युत्पत्ति, मम तु तद्वर्जमिति । तथा चेयमियती व्युत्पत्तिः लोके दृश्यते यदयमस्य वाच्य', अयमस्य वाचक इति, न पुन शक्तिपर्यन्ता व्युत्पत्तिरस्ति । तथा हि—यत्र शृङ्गग्राहिकया शब्दमर्थं च निर्दिश्य सम्बन्ध. क्रियते । तत्रेयन्तमेवैनं क्रियमाणं पश्याम 'अयमस्य वाच्यः, अयमस्य वाचकः' इति । यत्रापि च वृद्धेभ्यो व्यवहरमाणेभ्यो व्युत्पद्यते, तत्रापीयदेवासौ जानाति 'अयमर्थोऽमुतः शब्दादनेन प्रतिपन्न इति, न त्वन्यस्य काचिच्छक्तिरस्तीति । इयत्यैव च व्युत्पत्त्या शब्दादर्थप्रत्ययोपपत्तेरस्याश्चा-परिहार्यत्वादधिककल्पनाबीजाभावाच्च न नित्यः शब्दार्थसम्बन्ध. । अत एव च सम्बन्धस्त्रिप्रमाणक. । तथा चोक्तं श्लोकवार्त्तिके सम्बन्धाक्षेपपरिहारे—

न ह्यसौ ज्ञातसामर्थ्यो विनान्यैर्व्यवहर्तृभिः ।
शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ॥
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।
अन्यथानुपपत्त्या च बुद्ध्येच्छक्ति द्वयाश्रिताम् ॥

अर्थापत्त्यावबुध्यन्ते सम्बन्धं त्रिप्रमाणकम्[१] ।

यत्त्वयोच्यते तदस्माभिर्न मृष्यते 'शब्दवृद्धाभिधेयाश्च प्रत्यक्षेणात्र पश्यति' इति सत्यम् । 'श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया' इत्येतदपि सत्यम् । 'अन्यथाऽनुपपत्त्या तु बुध्येच्छक्ति द्वयात्मिकाम्' इत्येतत्तु न सत्यम्, अन्यथा-प्युपपत्तेरित्युक्तत्वात् । तस्माद् द्विप्रमाणकः सम्बन्धनिश्चयः, न त्रिप्रमाणक.[२] । तदेवं शब्दस्य नैसर्गिकशक्त्यात्मकसम्बन्धाभावादीश्वरविरचितसमयनिबन्धनः शब्दार्थव्यवहारो नानादिः ।

नन्वीश्वरोऽपि सम्बन्धं कुर्वन्नवश्यं केनचिच्छब्देन करोति, तस्य केन कृतः सम्बन्धः, शब्दान्तरेण चेत् ? तस्यापि केन कृतस्तस्यापि केनेति न कश्चिदवधिः ।

---

१ श्लो० वा० १४०–१४१½ । २. न्या० म० प्र० प्र० पृ० २२५ ।

तस्मादवश्यमनेन सम्बन्धं कुर्वता वृद्धव्यवहारसिद्धाः केचिदकृतसम्बन्धा एव शब्दा अभ्युपगन्तव्याः। अस्ति चेद् व्यवहारसिद्धिः किमीश्वरेण, किं वा तत्कृतेन समयेनेत्यनाद्यपक्ष एव श्रेयान्। उच्यते—

अक्षमायुष्मता ज्ञातं विपयस्तु न लक्षितः।
अस्मदादिपु दोपोऽयमीश्वरे तु न युज्यते॥
नानाकर्मफलस्थानमिच्छयैवेदृशं जगत्।
स्रष्टुं प्रभवतस्तस्य कौशलं को विकल्पयेत्[1]॥

इच्छामात्रेण पृथिव्यादेरियत कार्यस्य करणमस्मदादीना यन्मनोरथपदवीमपि नाधिरोहति, तदपि यत. सम्पद्यते तस्य कियानयं प्रयासः? तदत्रेश्वरसद्भावे परं विप्रतिपत्तयः। तस्मिस्तु सिद्धे क एवं विकल्पानामवसरः? उक्तश्च तत्सिद्धौ निरपवादमनुमानम्। वयं तु न कर्त्तार एव सम्बन्धस्य यत एवमनुयुज्येमहि—

अङ्गुल्यग्रेण निर्दिश्य कञ्चिदर्थं पुर.स्थितम्।
व्युत्पादयन्तो दृश्यन्ते बालानस्मद्विधा अपि[2]॥

## ३. नैयायिकमतनिष्कर्षः

तस्मादीश्वरविरचितसम्बन्धाधिगमोपायभूतवृद्धव्यवहारलब्धतद्व्युत्पत्तिसापेक्षः शब्दोऽर्थमवगमयतीति सिद्धम्। न च नित्यसम्बन्धाभावेऽपि शब्दस्यार्थास्पर्शित्वं समयबलेनार्थप्रत्ययस्याबाधितस्य सिद्धेरित्युक्तत्वात्।

तस्मात् पदे च वाक्ये च सम्बन्धे च स्वतन्त्रता।
पुरुषस्योपपन्नेति वेदाना तत्प्रणीतता[3]॥

## ४. वैशेषिकमतम्

### (क) शाब्दबोधस्यानुमानेऽन्तर्भावः

वैशेषिका हि प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेवाभ्युपगच्छन्ति, शब्दादीनि च प्रमाणानि अनुमानेऽन्तर्भावयन्ति। यथा पक्षधर्मताज्ञानव्याप्तिस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानम्, तथा शब्दादिभ्योऽपि अनुमानमेव भवति। तावद्धि शब्दो नार्थं प्रतिपादयति, यावदयमस्याव्यभिचारीत्येवं नावगम्यते। ज्ञाते त्वव्यभिचारे प्रतिपादयन् धूम इव लिङ्गं स्यात्। तथा च प्रयोगः—शब्दोऽनुमानम्, व्याप्तिबलेनार्थप्रतिपादकत्वात्, धूमवत्।

---

१ श्लो० वा० सू० ५ का० १४-१४१।　२. न्या० म० प्रमा० प्र० पृ० १२५।
३. न्या० म० प्रमा० प्र० पृ० १२५।

**( ख ) अनुमित्युपपत्तिप्रकारः**

ननु अनुमाने साध्यधर्मविशिष्टो धर्मी प्रतीयते। शब्दादर्थानुमाने को धर्मी ? न च तावदर्थ., तस्य तदानीमप्रतीयमानत्वात्। शब्दो धर्मीति चेत्, किमस्य साध्यम्, अर्थवत्त्वं चेत्, न पर्वतादेरिव वह्न्यादिना शब्दस्यार्थेन सह संयोग-समवायादिलक्षणः कश्चित् सम्बन्धो निरूप्यते, येनायमर्थविशिष्टः साधनीय.। प्रतिपाद्यप्रतिपादकभाव एव हि तयो. सम्बन्ध , सोऽर्थप्रतीत्युत्तरकालिको नार्थप्रति-पादनात् पूर्व सम्भवति। नाप्यग्निधूमयोरिव शब्दार्थयोरस्त्यविनाभावनियम', देशकालव्यभिचारात्। तद्व्यभिचारश्चासत्यपि युधिष्ठिरे कलौ युधिष्ठिरशब्द-प्रयोगात्, असत्यामपि लङ्कायां जम्बुद्वीपे लङ्काशब्दश्रवणात्। तस्मादनुमानसामग्री-वैलक्षण्याच्छब्दो नानुमानम्, देशविशेषेऽर्थव्यभिचारात्। न धूमो वह्निं क्वचिद् व्यभिचरति, शब्दस्तु स्वार्थं व्यभिचरति। तथा हि चौर इति भक्ताभिधानं दाक्षिणात्यानाम्, आर्यावर्तनिवासिना तु तस्कराभिधानम्।

यदि च शब्दोऽनुमानं त्रैरूप्यप्रतीत्याऽस्य प्रामाण्यनिश्चयः स्यात्, नाप्तोक्तत्व-प्रतीत्या। आप्तोक्तत्वप्रतीत्या तु निश्चीयमाने प्रामाण्येऽनुमानाद् व्यतिरिच्यत एव, तयोरेवंविधस्वरूपभेदादिति चेत्, अत्रोच्यते—वणिजां क्रयविक्रयव्यवहारे तर्जन्यामुर्द्ध्वीकृताया देशकालव्यवहितेष्वर्थेषु दश संख्याऽनुमीयते। तत्र चानुमाने संख्यापक्षो भवितुं नार्हति, तस्या पूर्वमज्ञानात्, प्राक् प्रतिपन्नस्यैवार्थस्य पक्षत्वेना-भ्युपगमात्। तर्जन्या विन्यासस्यापि पक्षतात्वं न सम्भवति, अनुमीयमानया दशसंख्यया साकं तस्य कृते संकेतसंबन्धे नान्य संयोगसमवायादिः सम्बन्धोऽस्ति। अतो दशसंख्यारूपसाध्यधर्मयुक्तस्तर्जनीविन्यासरूपधर्मी नानुमातुं शक्यते। तर्जनी-विन्यासदशसंख्ययोरेककालदेशत्वाभावात् कथं तथाविधेन तर्जनीविन्यासेन दशसंख्याऽनुमीयेत ? क्रयविक्रयप्रसङ्गे वणिजामयमव्यभिचरितो नियमोऽस्ति यत् 'केवलतर्जनीविन्यासेन दशसंख्याऽवगन्तव्या' इति। अतस्तेन तथाकर्त्तुः पुरुषस्य सोऽभिप्रायोऽवगम्यते यत्तर्जनीविन्यासे न तस्य दशसंख्याऽभिप्रेतास्तीति। ततस्तेन विन्यासेन दशसंख्याऽनुमीयतेति चेत्, शब्दानुमानप्रसङ्गेऽपि सैव सरणिरनुसर्त्तव्या यत् श्रोत्रा उच्चारिताद् गोशब्दाद् वक्तु. ककुदादिमदर्थविवक्षाऽवगम्यते, स्वज्ञात शब्दसमूहेषु गोशब्दोच्चारणस्य पदार्थविवक्षापूर्वकत्वोपलम्भात्। तदर्थविवक्षया चार्थानुमानम्।

अयं चात्र प्रयोग—पुरुषो धर्मी ककुदादिविवक्षावान्, गोशब्दोच्चारण-कर्त्तृत्वात्, अहमिवेति।

ननु अर्थाभावेऽपि अनाप्ताना तदर्थविवक्षा दृश्यते। अतो विवक्षयाऽर्थः साधयितुं न शक्यते इति चेत्, शब्दस्य पृथक् प्रामाण्यस्वीकारेणैव कथमर्थस्य

सिद्धि. ? अभिधा भ्रान्त्या, श्रोतु· प्रतारणधिया वा असम्भावितार्थशब्दप्रयोगात्। आप्तोच्चारिताच्छब्दादर्थं प्रतीयते इति चेत्, आप्तप्रयुक्तशब्दश्रवणेन श्रोतुः तदाभिप्रायस्य बोधो भवति, तेन चार्थोऽनुमीयते इत्यस्यापि वक्तुं शक्यत्वात्।

यत्तूक्तम्–यद्यपि शब्दोऽर्थस्य लिङ्गम्, तथापि देशविशेषे तयोर्व्यभिचारो दृश्यते, न धूमवह्न्योरिति धूमेन वह्निरनुमीयते, न शब्देनार्थ.। अतो धूम स्वाभाविकेन सयोगरूपसम्बन्धेन वह्नेरनुमापकोऽस्ति। शब्दस्तु पुरुषकृतसंकेतेन तर्जन्यादिविशेष-विन्यासरूपचेष्टया दशसंख्यानुमानवत् पुरुषस्य बोधनेच्छारूपसंकेतेनैवार्थबोधनाय प्रवर्तते। अतो येषा शब्दाना येष्वर्थेषु पुरुषसंकेतोऽस्ति, तेषामेव ते शब्दा विवक्षा-बोधद्वारा ज्ञापका भवन्ति। यथा चेष्टया वणिजां संकेतद्वारा दशसंख्यार्थोऽवबुध्यते, तथैव शब्दै तेषामाप्तोक्तत्वेनैवार्थावबोधो भवति। अतो यथाऽविच्छिन्नमूलयोर्द्ध्व-मुख्या रेखया युक्ते धूमे वह्नेरव्यभिचार: सम्भवति, तथैवाप्तोच्चरिते शब्देऽपि अर्थस्याव्यभिचारोऽपि सम्भवत्येव।

( ग ) अभिधावृत्त्यार्थप्रतिपादकत्वाभाव

अथाभिधारूपया मुख्यया वृत्त्यैव शब्दा· कथन्नार्थ प्रतिपादयन्ति, सम्बन्धाभावात्। वाच्येनासम्बद्धस्यापि शब्दस्यार्थावबोधकत्वे घटपदात् पटबोधोऽप्यापद्येत। अत. शब्दस्यार्थेन सह स्वाभाविक. शक्तिरूप सम्बन्ध: कल्प्यत इति चेत्, एकस्य शब्दस्य देशकालभेदेनानेकेष्वर्थेषु प्रयोगदर्शनात्।

ननु आर्या येष्वर्थेषु यान् शब्दान् प्रयुञ्जते तेष्वर्थेषु तेषां शब्दानां स्वाभाविक: सम्बन्ध: कल्प्यते, येष्वर्थेषु च संकेतेनैव शब्द· प्रवर्तते, तत्र धूमवत् शब्दा अनुमापका भवन्तीति चेत्, न, एकस्यैव चौरशब्दस्य तस्करे भक्ते च समानरूपेण प्रतीतिकरत्वात्, अनयोर्द्वयोरर्थयोस्तस्करस्य चौरशब्दो वाचक:, भक्तस्य चानुमापक इत्यत्र विशिष्टाया युक्तेरभावात्। एतेनेदं साधयितुं शक्यते यत्–यथोभयमते दाक्षिणात्यप्रयुक्तचौरशब्देन भक्तरूपार्थप्रतीतिश्चौरशब्दाल्लिङ्गाज्जायमानत्वेनानु-मितिरुच्यते तथैवार्यप्रयुक्तचौरशब्देन तस्कररूपार्थप्रतीतिरपि चौरशब्दाल्लिङ्गाद्-भवतीति अनुमितिरेव। यत. प्रतीतिरियमपि चौरशब्दादेवोत्पद्यते।

अत्र नास्ति किमपि प्रमाणं यत् शब्दार्थयो: कश्चन स्वाभाविक: सम्बन्धोऽस्तीति। यत: शब्द एव वर्तमानस्य वाच्यनिरूपितस्य वाचकत्वसम्बन्धस्य शब्देऽर्थे चोभयत्र कल्पना क्रियते। केवलं शब्दनिष्ठस्य तस्य सम्बन्धस्य मीमांसकैर्द्वयो: सम्बन्धत्वं प्रतिपाद्यते। तथा चोक्तम्—'शक्तिरेव हि सम्बन्ध:' इति। स्वभावतो वाच्यनिष्ठत्वे शब्दशक्ते: यथाऽर्थनिरूपितं शब्दसंकेतं जानतो बोधो भवति, तथाऽजानतोऽपि बोधो भवेत्, तत्रापि शब्दस्यार्थस्य तयो: सम्बन्धस्य च सम्भवात्।

ननु वर्तमानोऽपि सम्बन्धो ज्ञात. सन्नेवार्थं बोधयति, न सत्तामात्रेण, अतो नाव्युत्पन्नस्य बोधो भवति। यथा चाहुराचार्या.—

ज्ञापकत्वाद्धि सम्बन्ध. स्वात्मज्ञानमपेक्षते।
तेनासौ विद्यमानोऽपि नागृहीत: प्रकाशक:[1] ॥

इतीति चेत्, शक्तिरूपसम्बन्धस्य कीदृशं ज्ञानमर्थबोधकमपेक्ष्यते? यदीदमुच्यते यत् 'अस्य शब्दस्यायमर्थो वाच्य' इत्याकारकं ज्ञानमपेक्ष्यत इति, तर्हि तज्ज्ञानं कस्मादुत्पद्यते इति जिज्ञासा समुदेति, वृद्धव्यवहारात् तथाविधं ज्ञानं समुत्पद्यते इति समाधिरिति चेत्, एतदेवाभिधानाभिधेयालम्बनज्ञानमेव स्वसंस्कारद्वारा कारणमस्तु यत् शब्दान् व्यवहरद्भि· वृद्धै पार्श्वस्थेषु बालकेषु समुत्पद्यते, यच्च संकेतो व्युत्पत्तिरिति चाभिधीयते, तदर्थं शब्दस्यार्थे विलक्षणस्य सम्बन्धस्य किं प्रयोजनमस्ति? अयमाशय:—शब्दस्य स्वाभाविकं सामर्थ्यं शब्दत्वमेवास्ति, पुरुषप्रयत्नैश्च संकेतो विशिष्टाऽऽनुपूर्वी चेति सामर्थ्यद्वयं समुत्पाद्यते। एतस्मादेव सामर्थ्यद्वयात् शब्दार्थप्रत्ययोत्पत्तिर्भविष्यति, किं सम्बन्धान्तरकल्पनया? दृष्टकारणात् कार्योत्पत्तौ अदृष्टकारणकल्पनाया अतिफल्गुत्वात्।

**( ङ ) सर्वत्र वक्तुः प्रामाण्यापेक्षा**

ननु यदि वक्तुर्विवक्षयैव शब्दोऽर्थावबोधको भवति, तदा वैदिकेभ्य: शब्देभ्योऽर्थावगतिर्न स्यात्, वेदस्य वक्तुरभावादिति चेत्, अत्रोच्यते, न केवलं लौकिकेभ्य: शब्देभ्य. प्रमात्मके बोधे जननीये वक्तु· प्रामाण्यमपेक्ष्यते, अपि तु श्रौतस्मार्तशब्देभ्योऽपि अर्थबोधे जननीये वक्तु: प्रामाण्यमपेक्ष्यते। तथा चोक्तम् "श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्ष:"[2]। शब्दो वक्तृदोषदुष्टो भवति, न तु असुरभिगन्धवत् स्वभावत एव दुष्ट:। तथा चोक्तम्—

शब्दे कारणवर्णादिदोषा वक्तृनराश्रया:।
नहि स्वभावत: शब्दो दुष्टोऽसुरभिगन्धवत्[3] ॥

वेदस्य नित्यत्वे तत्र प्रामाण्यसंशीतिरेव नोदयमासादयेत्, पौरुषेयत्वे तु आंशिकाप्रामाण्यशङ्का कण्ठं त्यक्तुं न प्रभवेत्, यतो हि कदाचिद् रागद्वेषवशाल्लोका अयथार्थबोधकानपि शब्दान् प्रयुञ्जते इति चेत्, तदपि न विचारसहम्, यत. कस्यापि प्रमाणस्य प्रामाण्याय तस्य नित्यत्वमावश्यकं नास्ति, किन्तु तस्य दोषाभाव एव प्रामाण्याय पर्याप्तो भवति। सत्यपि नित्यत्वे श्रोत्रमनसोरागन्तुकदोषै: क्वचिदप्रामाण्यम्। असत्यपि नित्यत्वे निर्गलितदोषाणा चक्षुरादीना प्रामाण्यम्। अतो विशिष्टपुरुषेणेश्वररूपेण रचिते आम्नाये तस्य पौरुषेयत्वेऽपि प्रामाण्ये नास्ति

१ उद्धृ० न्याक० पृ० ५१८। २. उद्धृ० न्या० क० पृ० ५१६। ३. प्र० भा० पृ० ५१६।

शङ्कापङ्कावकाश. । न हि यथार्थज्ञानसहितेन रागद्वेषविरहितेन कृपावता महापुरुषेणोपदेशकालेऽयथार्थवाक्यानि प्रयुज्येरन् । तथा चोक्तम्—"तद्वचनादाम्नायस्य प्रामाण्यम्"[1]

## ५. नैयायिकादिस्वीकृतानुभवरूपज्ञानस्य निरासः

नैयायिकप्रभृतिभिरन्वयबोधनामकं प्रत्यक्षानुमितिभिन्नमनुभवरूपं ज्ञानं मन्यते। वैशेषिकमते तु न तदङ्गीकार । पदज्ञानस्थले पदार्थसंसर्गस्यानुमितिरेव भवति । तथा हि—गौरस्तीति वाक्यश्रवणानन्तरं गोरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात्, घटवत् । अस्तिपदसमभिव्याहृतगोपदस्मारितत्वाद्वा, चक्षुर्वद् इत्यनुमानमेव, न तु शब्दजन्यो विलक्षणो बोधः। पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्व तस्यावश्यकत्वात् । न च विनष्टे भाविनि वा घटचक्षुरादौ व्यभिचार', स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्करत्वात् । एकविधव्यभिचारग्रहसत्त्वेऽपि अन्यविधव्याप्तिनिश्चयस्य संभवाच्च, समानप्रकारकस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात् ।

अथवा 'गौः' पदमस्तित्ववद्गोगोचरज्ञानपूर्वकम्, अस्तिपदसाकाङ्क्षगोपदत्वात्, यन्नैव तन्नैवम्, यथाकाशम्, इत्येवं पदपक्षकानुमानमिति । यद्वा, सामान्यत एवानुमानम् । तथा हि—एते पदार्था. परस्परं संसर्गवन्त', आकाङ्क्षादिमत्पदस्मारितत्वात्, दण्डेन गामभ्याजेति पदार्थसार्थवत् । किं वा, एतानि पदानि स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बत्वात्, 'दण्डेन गामभ्याज' इति पदकदम्बवत्, इत्येवानुमानम् । न च व्याप्तिज्ञानविरहस्थले कथं तादृशानुमितिरिति वाच्यम्, तत्र विशिष्टबोधस्यानङ्गीकारात् । तावत्पदार्थस्मृतितः परस्परं संसर्गावगाह्यलौकिकमानसप्रत्यक्षात्मकविशिष्टबोधसंभवाच्च ।

## ६. शब्दस्य पृथक् प्रमाणत्वखण्डनम्

वैशेषिकैः शब्दस्य पृथक् प्रामाण्यं नाभ्युपगम्यते, अनुमाने शब्दोऽन्तर्भाव्यते । अनुमाने शब्दमन्तर्भावयता प्रशस्तपादेन 'समानविधित्वात्' इत्ययमेक एव हेतुरुपात्तः । तस्येदं तात्पर्यमस्ति यद् यथानुमाने व्याप्तिग्रह', लिङ्गदर्शनम्, व्याप्तिस्मृतिः, अनुमितिरित्येतानि वस्तूनि भवन्ति, तथैव शब्दे शक्तिग्रहः, वाक्यश्रवणम्, पदार्थस्मृतिः, वाक्यार्थबोधश्च भवन्ति । इत्येवं 'समानविधित्वात्' हेतुना प्रशस्तपादभाष्ये शब्दोऽनुमानेऽन्तर्भावितः । टीकादिषु शब्दस्यानुमानेऽन्तर्भावस्य प्रकारान्तरमपि दृश्यते—शब्दप्रामाण्यवादिना पदार्थानां 'संसर्गबोधः' एव वाक्यार्थोऽस्तीति

---

१. वै० अ० १ आ० १ सू० ३ ।

स्वीक्रियते। स चानुमानेनावगन्तुं शक्यते। अनुमानप्रकारश्च—एते पदार्था परस्परं संसर्गवन्तः, आकाङ्क्षायोग्यतासत्तिमत्पदस्मारितत्वादिति पदार्थपक्षक एकः, एतानि पदानि स्वस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आकाङ्क्षादिमत्पदत्वादिति पदपक्षकोऽपरश्च। एताभ्यामनुमानाभ्या संसर्गोऽनुमीयते। अतः शब्दस्य पृथक् प्रामाण्यं नैवाभ्युपगन्तव्यम्।

नन्वनुमानेन संसर्गो न साध्यते, अपि तु संसर्गज्ञानमिति चेत्,ज्ञानविषयस्य ज्ञानज्ञानस्यापि विषयत्वात्। एवञ्चात्र संसर्गज्ञानस्य यो हि विषय. संसर्गः, सोऽपि संसर्गज्ञानस्य ज्ञानस्यापि विषयो भविष्यतीति अनुमानेन यत् संसर्गज्ञानं साध्यते तस्य संसर्गज्ञानस्य विषय. संसर्गोऽपि अनुमानेन साध्यते। इत्थं पदार्थसंसर्गरूपस्य वाक्यार्थस्यानुमानेन साधितत्वेन शब्दो न पृथक् प्रमाणमिति वैशेषिकसिद्धान्त ।

## ७. नैयायिकरीत्या वैशेषिकमतखण्डनम्

### ( क ) अनुमानेन संसर्गस्यासिद्धिः

'एते पदार्था परस्परं संसर्गवन्त.' इत्यनेन प्रथमेन पदार्थपक्षकेणानुमानेन यदि केवलं संसर्गस्य सम्भावनामात्रमेव, अर्थात् 'संसर्गो भवितुमर्हति' इति साध्यते, तदा तु संसर्गो न निर्णीतोऽभूत्। 'संसर्गो भवितुमर्हति' इत्येतावदेव साधितं भवति, 'संसर्गोऽस्त्येव' एतद् न साधितमभूत्। अतोऽनेनानुमानेन संसर्गो न निर्णीतोऽभूत्। याद चानेन संसर्गनिर्णयः संसूच्यते, तदा 'पयसा सिञ्चति' इत्यत्रास्य व्यभिचारो भवेत्। पयस्शब्दस्य दुग्धजलवाचकत्वेन क्वचन दुग्धेन क्वचन च जलेनोभाभ्यामपि सेको भवितुमर्हति। अतः 'पयसा सिञ्चति' इत्यत्राकाङ्क्षायोग्यताऽऽसत्तीना वर्तमानत्वेनैतेषां पदार्थाना परस्परं सम्बन्धोऽस्तीति सिद्धं भवति। परन्तु यत्र जलबोधकाभिप्रायेण पयस्शब्दः प्रयुक्तः, तत्र तु जलस्य सेकक्रियया साकं सम्बन्धो वक्तुर्विवक्षितोऽस्ति, न तु दुग्धस्य। किन्तु 'योग्यताऽऽकाङ्क्षाऽऽसत्तिमत्पदस्मारितत्वात्' इति हेत्वनुसारेण दुग्धेनापि साकं तस्य संसर्गेणावश्यं भाव्यम्, तच्च नास्ति। अतः सम्बन्धस्यावश्यम्भावपक्षे हेतुरयमनैकान्तिकः, सम्भावनापक्षे च सम्बन्धो निर्णीतो न भवति। अतः संसर्गोऽनुमानेन साधयितुं न शक्यते।

वैशेषिकैः समुद्भावितं द्वितीयं पदपक्षकम् 'एतानि पदानि स्वस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आकाङ्क्षादिमत्पदत्वात्' इत्यनुमानमपि दोषग्रस्तमस्ति, यतो ह्यनुमाने लिङ्गज्ञानमेवोपयुज्यते, तस्मादेव तदुत्पत्ते.। अतोऽनु[illegible]न् हेतुघटकीभूताऽऽकाङ्क्षा ज्ञाता सती एवोपयुज्यते, शाब्दबोधे तु आकाङ्क्षाया ज्ञानस्य न हि, अपि तु केवलं तस्याः सत्ताया आवश्यकता भवति। अर्थादनुमाने ज्ञाता सती, शाब्दबोधे च स्वरूपसती आकाङ्क्षोपयुज्यते। ज्ञाता सती आकाङ्क्षोपयुज्यत इत्यस्येदं तात्पर्यमस्ति यदनुमितिकाले आकाङ्क्षाया अविद्यमानेऽपि तज्ज्ञानमात्रेणानु-

मितिर्भवति। शाब्दबोधस्तु अविद्यमानयाऽऽकाङ्क्षया नोत्पद्यते। अतोऽस्यानेनानुमानेनापि संसर्गः साधयितुं न शक्येत। अतः शब्दप्रामाण्यमवश्यं स्वीकर्त्तव्यम्।

### (ख) आकाङ्क्षादिस्वरूपनिर्णयः

अथ प्रथम इव द्वितीये पदपक्षकेऽपि हेतुराकाङ्क्षादिमत्त्वेन विशेष्यते। तत्र केयमाकाङ्क्षा नाम, विशेषणविशेष्यभाव इति चेत्, स हि केनचित् सम्बन्धेन विशेष्यस्य विशेषणविशिष्टत्वम्। यथा गामित्यत्राधेयतासम्बन्धेन कर्मत्वस्य गोविशिष्टत्वम्। स च संसर्ग एवेति वाक्यार्थरूपत्वात् साध्यमिति न हेतुघटको भवेत्।

विशेशणविशेष्यभावयोग्यतेति चेत्, योग्यतारूपविशेषणान्तरानतिरेकात् पौनरुक्त्यम्।

पदार्थयोरविनाभाव आकाङ्क्षेति चेत, स न कारणम्, नीलं सरोजमित्यत्र व्यभिचारात्। नीलरूपं विनापि हि पुण्डरीकं सरोजम्, असरोजमप्यतसी नीलेति। ननु तत्र विशिष्यनीलसरोजयोर्विनाभूतत्वेऽपि तत्तद्वृत्तिसामान्यधर्मरूपगुणत्वद्रव्यत्वाश्रययोर्गुणद्रव्ययोरविनाभावोऽस्त्येव। अतो यथाकथञ्चिदविनाभाव एव कारणमिति न व्यभिचार इति चेत्, न, तथा सति 'अहो विमलं जलं नद्याः' इत्येतद्वाक्यानन्तरम् 'कच्छे महिषश्चरति' इति वाक्यप्रयोगे तत्र वाक्यभेदो न स्यात्। साकाङ्क्षञ्चेदेकं वाक्यमिति हि वाक्यविदः। नदीकच्छयोश्चाविनाभावरूपाकाङ्क्षाऽस्तीति।

अथ श्रोतृसमवेता जिज्ञासैवाकाङ्क्षेति चेत्, सत्यमिदं कथञ्चित् सुवचम्। तत्रापि किञ्चिदुच्यते—रक्तः पटो भवतीत्यत्र पटे रूपजिज्ञासासद्भावादरक्तपदं विना तद्वाक्यैकदेश इव केवलं पटो भवतीत्यत्रापि वाक्यमनवसितमेव स्यात्, जिज्ञासाया अविशिष्टत्वात्। तथा च सर्वमपि वाक्यमवाक्यमेव, उपर्युपरि जिज्ञासासंभवादपर्यवसानात्।

### [अ] कीदृशी आकाङ्क्षा शाब्दबोधकारणम्

ननु न सर्वा जिज्ञासा आकाङ्क्षा, किन्तु यत्र यावन्ति पदानि प्रयुक्तानि तत्र तावत्स्मारितार्थजिज्ञासैवाकाङ्क्षेति केवलं पटो भवतीत्यपि वाक्यमेवेति चेत्, अस्त्वेवम्, परन्त्विहेदं विचार्यं किमस्यामाकाङ्क्षाया जातायामेव वाक्यार्थप्रत्ययः, अथ ज्ञातायामिति। तत्र जननमात्रेणेति प्रथमपक्षे आत्ममनस्संयोगादिवत् सत्तयैवोपयोगाद्धेतुकोटावाकाङ्क्षाविशेषणमनुचितम्। अत आसत्तियोग्यतामात्रनिवेशेन हेतूक्तौ 'अयमेति पुत्रो राज्ञः' इति वाक्यानन्तरमेव 'पुरुषोऽपसार्यताम्' इति वाक्यप्रयोगे राजपदार्थपुरुषपदार्थयोरासत्तियोग्यतासद्भावात् तत्र संसर्गज्ञान-

पूर्वकत्वरूपसाध्यस्य वस्तुत. पुरुषस्य राजसम्बन्धित्वे संसर्गवत्त्वरूपसाध्यस्य चाभावाद् व्यभिचारः। तर्हि ज्ञायमानतयोपयोग इति द्वितीयपक्षोऽस्तु। अतो हेतौ तन्निवेशाद् व्यभिचारोऽपि परिहृत इति चेत्, आसत्तियोग्यताव्याप्तिपक्षधर्मतादिवत् स्वरूपसत्तया प्रत्ययाजनकत्वे हि ज्ञायमानत्वपक्ष· स्यात्, नत्वेवम्। आसत्त्यादिज्ञानवतः पुंसः स्वयं साकाङ्क्षत्वमस्ति चेत्, तावतैव बोधसद्भावात् निवृत्ताकाङ्क्षस्यासम्भवाच्च आकाङ्क्षाज्ञानस्य कारणत्वे हि तस्यामसत्यामपि तज्ज्ञाने सति बोधापत्तिरिति।

नन्वाकाङ्क्षा ज्ञायमाना कारणमित्युक्तावपि न निवृत्ताकाक्षत्वे बोधापत्तिः, आकाङ्क्षासद्भावस्याप्यपेक्षितत्वात्। ततो जननमात्रेण वाक्यार्थप्रत्ययं लभत इति कथं निश्चय इति चेत्, आकांक्षात्वेन कारणत्वापेक्षया ज्ञायमानाकाङ्क्षत्वेन कारणत्वकल्पने गौरवात्, ज्ञानानुत्पत्तिसमयेऽपि ज्ञानमुत्पद्यत एवेति कल्पने गौरवाच्च तथा निश्चय.। एवं प्रत्यक्षस्थले जिज्ञासाया. सत्तया कारणत्वादपीहाप्येवम्। दूराद्दूर्ध्वसामान्यदृष्टौ हि ततो विशेषजिज्ञासा, तत· प्रत्यासत्तौ विशेषसन्निकर्ष, तत. स्थाणुरयमिति विशेषप्रत्यक्षमित्येव क्रम.।

तत्र जिज्ञासाविषयकज्ञानान्तरं न जायते, तद्वदिहापि जिज्ञासाया पदार्थविशेषस्मरणे सति जिज्ञासावगत्यभावेऽपि आसत्तियोग्यताप्रतिसन्धानमात्रेण संसर्गावगतिर्भवत्येव, न तु जिज्ञासावगत्यर्थं विलम्बोऽस्तीति।

न च जिज्ञासायामुत्पन्नाया जिज्ञासावगति., तत पदार्थविशेषस्मरणम्, ततः प्रत्यय इति क्रम इति वाच्यम्, केवलजिज्ञासाया आकाङ्क्षत्वाभावात्, पदार्थविशेषस्मरणविशिष्टजिज्ञासाया एव तत्त्वस्य प्रागुक्तत्वात् तादृशविशिष्टजिज्ञासाज्ञानमेवाकाङ्क्षाज्ञानं वाच्यम्, तच्च विशेषस्मृतिसंसर्गग्रहयोर्मध्ये नानुभविकम्।

ननु जिज्ञासायाः सत्तया कारणत्वसंभवेऽपि ज्ञायमानत्वेन कारणत्वमिष्यते व्यभिचारपरिहारार्थम्। अतिरिक्तशब्दप्रमाणकल्पनापेक्षया चात्र लाघवमस्त्येवेति चेत्, कामभस्तु। एवमाकाङ्क्षाविशेषितोऽपि हेतुर्नाव्यभिचारी, 'अयमेति पुत्रो राज्ञः, पुरुषोऽपसार्यताम्'इति कृत्स्नप्रयोगेऽप्यन्यत्रावधानादिना अयमेति पुत्र इत्येतावदश्रुत्वा राज्ञ इत्यादि यदा श्रूयते, तदा श्रुतेषु हेतुसत्त्वात् संसर्गज्ञानपूर्वकत्वरूपसाध्याभावाच्च व्यभिचारात्।

अथ सहोच्चारितयावत्पदरूपत्वे सत्याकाङ्क्षादिमत्त्वादिति हेतु.। अतो हेत्वभावान्न व्यभिचार। तत्र श्रोतुरानुभविक. संसर्गप्रत्ययस्तु कतिपयपदेष्वेव यावत्त्वभ्रमेण हेतुभ्रमात् सूपपाद इति चेत्, न, यावत्त्वभ्रमाभावेऽपि एतावदेव व्याहृतमधिकं वेति संदेहेऽपि श्रुतस्य भागस्यायमर्थ इति संसर्गज्ञानोदयस्यानुभवसिद्धत्वाद् यावत्त्वनिश्चयस्य कारणत्वासंभवेन हेतुकोटौ तन्निवेशायोगात्। हेतुज्ञानं हि निश्चयरूपमेवानुमितिकारणमिति।

ननु भ्रान्तिरसौ राज्ञ इत्यादिमात्रात् संसर्गप्रतीति, अत. प्रमा प्रत्येव यावत्त्वघटितहेतुनिश्चयस्य कारणत्वस्वीकारान्न यावत्त्वनिवेशासंभव इति चेत्, उच्यते, न खल्वसौ भ्रान्तिरपि विना कारणं भवितुमर्हति। तत्रप्रत्यक्षानुमानरूप-प्रमितिकरणद्वयमात्रवादिना भ्रान्तिरियमिन्द्रियदोषाधीनेति दुर्वचम्, अस्या अप्रत्यक्ष-रूपत्वात्। नापि हेत्वाभासे हेतुभ्रमाधीनेति कतिपयपदेषु यावत्त्वभ्रम एव हि हेतुभ्रमो वाच्य., स न संभवति, यावत्त्वसंदेहादित्युक्तत्वात्।

अथ कतिपयत्वरूपदोषदुष्टपदकदम्बप्रतिसन्धानमेव भ्रान्तिजनकमिति चेत्, यद्येवमुच्यते, तर्हि यद् दुष्टं सत् व्याप्तिज्ञानपरामर्शादिनिरपेक्षं भ्रान्तिं जनयति, तदेवादुष्टं सत् तथैव प्रमितिं जनयतीति स्वीकृतप्रायम्। पदकदम्बं दोषासमवधान-सहकारेण व्याप्त्यादिनिरपेक्षं प्रमितिजनकं दोषसहकारेण तथा भ्रमजनकत्वात् चक्षुरादिवदिति।

## [आ] प्रभाकरमते दोषाभाव:

ननु वैशेषिकमते एवं दोषसंभवेऽपि पौरुषेयशब्दस्यानुमानान्तर्भाववादिन: प्राभाकरस्य नायं दोष., तेनान्यथाख्यातेरनङ्गीकारात्, असंसर्गाग्रहस्यैव भ्रान्ति-पदार्थत्वात्। अतो यावत्त्वविशेषित एव हेतु:। स ज्ञातश्चेत् संसर्गप्रमा जायत एव। कतिपयपदश्राविणस्तु न संसर्गप्रमा, कारणाभावात्, न भ्रम, अन्यथाख्यात्य-भावात्, किन्तु पदार्थाना पृथगुपस्थिताना मिथोऽसंसर्गाग्रहमात्रमिति चेत्, तथापि तन्मतसाधारण्येनापि हेतुर्व्यभिचरित एव, अनाप्तवाक्ये संसर्गज्ञानपूर्वकत्वाभावात्।

अथासंसर्गाग्रहपूर्वकत्वमेव तन्मते साध्यम्, न संसर्गज्ञानपूर्वकत्वम्। यदि तु प्रतारकस्यासंसर्गग्रह एवास्तीति असंसर्गाग्रहपूर्वकत्वरूपसाध्याभावाद् व्यभिचार-स्तदवस्थ इति मन्यते, तर्हि असंसर्गाग्रहविशिष्टपदार्थस्मृतिजनकत्वं साध्यं विवक्षितमस्तु इति चेत्, तर्हि अनुमानस्य संसर्गानुमितिहेतुत्वाभावात् संसर्गज्ञाने शब्दोऽतिरिक्तप्रमाणमेव स्यात्।

ननु हेतुकोटावाप्तोक्तत्वरूपविशेषणस्याप्रवेशात् संसर्गज्ञानपूर्वकत्वस्यैव साध्यत्वादाप्तवाक्येषु संसर्गग्रहोऽनुमानात् सिद्ध्यतीति चेत्, न, आप्तत्वं प्रमात्मका-नुभवशीलत्वम्। तत् सर्वविषयकं यत्किञ्चिद्विषयकं प्रकृतविषयकं वेति विकल्प्य दोषस्य प्रथमप्रयोगावसर एवोक्तत्वात्।

## [इ] जिज्ञासायोग्यताकाङ्क्षेति प्रतिपादनम्

जिज्ञासैवाकाङ्क्षेत्युपगम्यैतावत् प्रतिपादितम्, तस्या ज्ञायमानत्वेन कारणत्वा-भावात्। तथा कारणत्वस्वीकारेऽपि प्रकारान्तरेण दोषाच्चानुमानं दूषितम्। अथ वस्तुत आकाङ्क्षाया अन्यादृशत्वात् सत्तया हेतुत्वाद्धेतौ तत्प्रवेशस्याशक्यत्वाददोषो

दुरुद्धर इति ब्रूम —नहि जिज्ञासा कारणं भवितुमर्हति, अजिज्ञासोरपि वाक्यार्थ-प्रत्ययोत्पत्त्या व्यभिचारात्। अतो जिज्ञासायोग्यता आकाङ्क्षेति वक्तव्यम्। योग्यता च न तावत् स्मारिततदाक्षिप्तयोरविनाभावः, नद्याः, कच्छे इत्यत्र वाक्यभेदो न स्यादित्युक्तत्वात्, अपि तु स्मारिततदाक्षिप्तयोरविनाभावे सति तदुत्पाद्यसंसर्गावगम-प्रागभावः। तदर्थश्च स्मारितस्य तदाक्षिप्तस्य वाऽविनाभावस्थले तेनाविनाभावेन तदभावे प्रकारान्तरेण य उत्पाद्य, यद्वा अविनाभावे जिज्ञासोपयोगितया वस्तुतो वर्तमाने यः स्मारितार्थेनोत्पाद्यः संसर्गावगमः, तत् प्रागभाव आकाङ्क्षेति। तथा हि—पदस्मारितमादायैव गन्धवती पृथिवीत्यादौ साक्षादेवाविनाभावोऽक्षतः। 'नीलं सरोजम्' इत्यादौ तदभावेऽपि नीलरूपस्य गुणत्वेन द्रव्यमन्तराऽसंभवात्, सरोजस्य च नानावर्णस्य सर्वात्मना वर्णं विनाऽसंभवात्। एवं गामानयेत्यादौ गोकर्मकत्वस्य क्रियामन्तरा आनयनक्रियाया मूर्तद्रव्यादिकारकमन्तरा चासम्भवाद् यथायथमाक्षिप्तमादायाविनाभाव ऊह्य। एवमविनाभावशब्दादेव तत्र तत्र जिज्ञासापि भवति। सा च स्मारकपदसद्भावे तदर्थान्वयेन शाम्यति। तदभावे चाकिञ्चित्करत्वा-दनुत्पन्नेवावतिष्ठते।

एतदुक्तं भवति—नाविनाभाव आकाङ्क्षाशरीरे प्रविष्ट, किन्त्वविनाभावो न योग्यतेति सूचनार्थमविनाभावे सतीत्युक्तम्। तथा च गामानयेत्यादौ गोपदस्य धात्वन्वयात् प्राक् साकाङ्क्षत्वस्य, जातेऽन्वये निराकाङ्क्षत्वस्य च लोकानुभवसिद्धत्वा-दुत्पाद्यसंसर्गावगमप्रागभाव एवाकाङ्क्षा। तत्पदस्य साकाङ्क्षत्वं नाम तत्पदस्मारितो-त्पाद्यः पदान्तरस्मारितेन सह यः संसर्गावगमस्तत्प्रागभावः। जलं नद्याः, पुत्रो राज्ञ इत्यादौ षष्ठ्यन्तपदस्य यत्पदार्थेन सह संसर्गावगम उत्पाद्यः, तत्पदार्थेन जलेन पुत्रेण च सह तस्योत्पादितत्वात् प्रागभावाभावान्निराकाङ्क्षत्वमेव।

न च कच्छेन पुरुषेण च सहोत्पाद्यस्यावगमस्य प्रागभावोऽस्तीति शङ्क्यम्, तस्यानुत्पाद्यत्वात्। अयमेवावगम उत्पाद्य इति च सति संभवेऽविनाभावेन, अन्यत्र वक्तृतात्पर्येण प्रथमश्रुतत्वेन वा केनापि प्रकारेणावसयेम्। तथा च तदुत्पाद्यसंसर्गा-वगमप्रागभाव एव तस्याकाङ्क्षेति सिद्धम्।

## [ई] आकाङ्क्षायाः सत्तया कारणत्वम्

इयञ्च सत्तया कारणम्, ज्ञाततया कारणत्वञ्च दुर्वचम्। संसर्गावगम-प्रागभाव इत्यस्याभावस्यावगमरूपप्रतियोगिज्ञानेन ज्ञेयत्वात् प्रतियोगिनश्चावगमस्य संसर्गरूपविषयग्रहणेनैव ग्राह्यत्वात् शब्दस्यानुमानान्तर्भावपक्षेऽनुमितेः प्राक् संसर्गस्य गृहीतत्वेन तदवगमप्रागभावस्य दुर्ग्रहतया हेतोरेव दुर्ग्रहत्वापत्तेः। हेतुग्रहणे च तद्घटकस्य संसर्गस्यापि प्रागेव सिद्धिस्वीकारप्रसङ्गादनुमानवैयर्थ्यात्। अतो द्विविधानुमानप्रयोगस्यापि दूषितत्वाच्छब्दो नानुमानमिति।

तदुक्तं न्यायकुसुमाञ्जलौ—

अनेकान्तः परिच्छेदे सम्भवे च न निर्णयः।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना[1] ॥

एवं सर्वस्य शब्दस्यानुमानान्तर्भाववादिनां वैशेषिकाणां मतं निरस्तम्।

## ८. प्राभाकराणामर्थनिरसनम्

### ( क ) प्राभाकरमतस्य स्पष्टीकरणं तत्खण्डनञ्च

अथ वेदस्य पृथक्प्रमाणत्वं लौकिकशब्दस्यानुमानताञ्चातिष्ठमानाना प्राभाकराणामर्द्धजरतीयपक्ष उपन्यस्य निरस्यते। त एवं निर्णीतवन्त—लोके व्यवहाराच्छक्तिग्रह इति पदानां कार्यान्विते शक्तिः। य एव लौकिकाः शब्दास्त एव वैदिका इति न्यायेन वेदस्याप्यन्विताभिधायकत्वमतः सिद्धम्। तत्र 'लोके एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बत्वात्' इत्यनुमानत एव वक्तृज्ञानरूपसाध्यविशेषणतया संसर्गस्याप्यनुमितत्वात् सत्यप्यन्विताभिधानशक्तिबलाद् बोधे सोऽनुमितिगृहीतार्थग्रहरूप एवेति लौकिकश्शब्दोऽनुवादभूतः, न त्वेवं वेदे, तस्यापौरुषेयत्वेन वक्तुरभावेन तज्ज्ञानानुमानप्रसक्त्यभावात् संसर्गानुमित्यसंभवादन्विताभिधानशक्त्यधीनबोधस्यैव प्राथम्यादिति। इदमपि तैर्लौकिकवाक्यस्यानुमानत्वस्वीकारे निमित्तम्। पदानामपूर्वाख्यकार्यतदन्वितान्यतराभिधायकत्वात् लौकिकवाक्यस्य च सर्वलाक्षणिकत्वाल्लाक्षणिकं पदं नानुभावकमिति सिद्धान्तान्न शब्दविधया प्रामाण्यम्। वेदश्च कार्यपर एवेति। तन्मतं वैशेषिकादपि स्थूलतरम्, व्यवहारादन्विताभिधानशक्तिर्वाक्यस्य निर्णीतेति आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बज्ञानरूपसामग्री यथा वेदे तथा लोकेऽपि बोधं जनयेदेव, क्लृप्तसामग्रीसत्त्वेऽपेक्षणीयान्तराभावेन विलम्बायोगात्। अतो वाक्यजन्यबोध एव प्रथमः। अनुमितिरूपसंसर्गज्ञानं तु पाश्चात्यम्। अनुमितिहेतुर्विशिष्टलिङ्गज्ञानं हि नाम बोधसामग्रीत्वेनोक्तमाकाङ्क्षादिविशिष्टपदकदम्बज्ञानमेव। तथा चेदृशलिङ्गज्ञानानन्तरं साध्यहेत्वोर्व्याप्तिज्ञानादिकमनुमितौ अधिकमपेक्ष्यत इति। अतो वेदवल्लोकेऽपि पदार्थान्वयस्य प्रागेव प्रतीतत्वाद् विलम्बेनानुमानेन निर्णेयं किमस्ति, सिद्धेऽनुमित्ययोगात्। तत्सत्त्वेऽपि लिङ्गमनुवादरूपं ज्ञातग्राहित्वात्, न शब्द इति।

### ( ख ) शब्दजन्यबोधे वक्तुराप्तत्वानपेक्षा

अथ लोके शब्दजन्यबोधे अयमाप्त इति निश्चयोऽपि कारणमिति चेत्, न, व्युत्पत्तिकाले पदानामीदृशनिश्चयाभावेऽपि बोधजनकत्वावधारणात् तदयोगात्। अशक्यञ्चैतत् कारणत्वकल्पनं वेदे लोकेऽपि। तथा हि—आप्तत्वनिश्चयस्य बोधसामान्येऽपेक्षितत्वे वेदादपि बोधो न स्यात्, तत्र वक्तुरभावेन तस्य दुर्घटत्वात्।

१. न्या० कु० ३।१३।

न च लौकिकपदघटितसामग्रीमात्रमाप्तत्वनिश्चयसापेक्षमिति वाच्यम्, वेदलोकपदभेदे हीदं शक्तिवैलक्षण्यं स्यात्। स एव न, लोकवेदाधिकरणविरोधात्।

ननु नद्यास्तीरे फलानि सन्तीत्यनाप्तवाक्यजन्यबोधे विसंवादात् पौरुषेयवाक्ये प्रामाण्यव्यभिचारदर्शनात् वेदवदिह सामग्री वर्तमानापि सन्देहात् कार्याक्षया भवतीति चेत्, न, सामग्र्या सत्यामन्यादृशसन्देहस्य कार्यविरोधित्वायोगात्। चाक्षुषज्ञानस्य क्वचिद् भ्रमत्वदर्शनेन चक्षुष प्रामाण्यसन्देहे सत्यपि हि विस्फारितं चक्षुः वस्तु दर्शयत्येव।

ननु सति सन्देहे निश्चायकं न भवतीति यत्, अयं निर्बन्धो ज्ञायमानकरणस्य, लिङ्गं हि सति सन्देहे न निश्चायकम्, चक्षुस्तु न ज्ञायमानतया करणमिति चेत्, न, यो हि सन्देह. सामग्र्यनुप्रविष्टं कारणं किमपि विघटयति, तस्मिन् सति कार्याभाव इति युक्तम्, इह च सन्देह. कुत्र ? किमाकाङ्क्षादिविशेषणविशिष्टवाक्यविषये, कि वा वाक्यजन्यबोधप्रामाण्यविषये, आहोस्विद् वाक्यप्रयोक्त्राप्तत्वविषये ? नाद्यः, तत्र सवस्याप्यशस्य वेद इवासंदिग्धत्वात्। न द्वितीय., तत्संदेहस्य वाक्यार्थज्ञानरूपधर्मिग्रहणाधीनत्वात् तदर्थे तदुत्पत्तेरावश्यकत्वेनाद्युत्पत्तिवर्णनायोगात्। न तृतीयः, आप्तत्वनिश्चयस्य वेदे व्यभिचारादकारणत्वस्य कथ्यमानत्वादनुपयुक्तविषयसन्देहस्याकिञ्चित्करत्वात्। न केवलं वेदलोकयोरेकशब्दाद् वेदे व्यभिचारादाप्तत्वनिश्चयस्याकारणत्वम्, किन्तु लोके व्यभिचारादपि। भवति हि वेदानुकारेणोदात्तादिस्वरसमावेशेन पठ्यमाने मन्वादिवाक्येऽपौरुषेयत्वाभिमानिनो गोडस्यानधीतवेदस्य मीमासकस्यार्थनिश्चयः।

नन्वाप्तत्वनिश्चयो वाक्यार्थप्रमा प्रति कारणम्, अयं तु निश्चयो भ्रान्तिरिति चेत्, न, मन्वादिवाक्येत्युक्तत्वात्। मनुप्रणीतत्वनिश्चयात् पश्चाज्जायमानस्यार्थनिश्चयस्य चास्य च समानविषयकतया भ्रान्तित्वायोगात्।

## ( ग ) अनाप्तोक्तत्वज्ञानविरहस्यापि कारणत्वाभावः

एवं तर्ह्याप्तत्वनिश्चयः कारणं मा भूत्, अनाप्तोक्तत्वज्ञानविरहः कारणमस्तु। मन्वादिवाक्येऽपौरुषेयत्वाभिमानिनोऽपि तत्सत्त्वान्न व्यभिचार इति चेत्, किमर्थमिदं कल्पनम् अशक्यञ्च। तथा हि—किमस्य लोकवेदसाधारण्येन कारणत्वमङ्गीकृत्य परकोलाहलेन मीमासानध्ययनेन च येन वेदापौरुषेयत्वमबुद्धं संदिग्धं वा, तस्यापौरुषेयत्वनिश्चयशून्यस्य व्युत्पत्तिमतो वेदश्रवणेऽर्थप्रत्यय एव न जायत इत्युच्यते, कि वा लोकवाक्यमात्रे तस्य कारणत्वं स्वीकृत्य वेदे जायत एव प्रत्ययः, किन्तु जातोऽपि निश्चितप्रामाण्यो नेति। आद्ये सत्यमेव कार्यम्. शपथानन्तरं वा प्रयोक्तव्यम्, साधकयुक्त्यभावादनुभवविरुद्धत्वाच्च।

न च संसर्गग्रहाभावेऽप्य संसर्गाग्रहमात्रे सति 'पीतश्शङ्खः' इत्यादिसंसर्गव्यवहारस्यास्मादिष्टत्वादिहाप्येवम्, न त्वर्थप्रत्यय इति वाच्यम्, तत्र वस्तुतश्शङ्खस्य पीतरूपसंसर्गबाधकसद्भावात् तथा त्वदिष्टत्वेप्यत्र वेदवाक्यार्थस्य वस्तुतः संसृष्टत्वेन तदयोगात्। स्थितस्यासंसर्गस्याग्रहो ह्यसंसर्गाग्रहः। बाधकाभावेऽप्यसंसर्गाग्रहाङ्गीकारे शब्दस्थले सर्वत्र संसर्गग्रहोच्छेदप्रसङ्गात्। जात इति द्वितीयपक्षे त्वपौरुषेयत्वनिश्चयस्याकारणत्वमेव वेदजन्यबोधे सिद्धमिति तत्राप्रामाण्यज्ञानात्मकाश्रद्धानिवृत्तिः कथमिति चिन्त्यताम्।

ज्ञायमानतयाऽकारणे चक्षुरादौ सति शङ्कायामपि सत्यां प्रत्यक्षं भवत्येव किल। तत्र यथा पश्चादेव सफलप्रवृत्तिजनकत्वादिज्ञानात् तन्निवृत्तिः, तथा वेदजन्यबोधेऽपीति चेत्, लोकेऽप्याप्तोक्तत्वावधारणाद्यधीनतच्छङ्कानिरासासंभवेऽपि बोधः पश्चादश्रद्धानिवृत्तिश्च स्याताम्, प्रमाणान्तरशब्दविशेषयोः क्लृप्तन्यायस्यात्राप्यविशिष्टत्वादिति। अन्यथा एतदापत्तिपरिहाराय वेदेऽप्यपौरुषेयत्वनिश्चयापेक्षापक्षमेव परिगृह्यानाप्तोक्तत्वशङ्कानिरासरूपकारणसापेक्षत्वाल्लौकिकशब्दस्यानुवादकत्वस्वीकारे वेदेऽपि तत्कारणसापेक्षत्वस्याविशिष्टत्वात् तस्याप्यनुवादकताप्रसङ्गः, तत्राप्यनुमानेन संसर्गनिश्चयसम्भवात्।

### ( घ ) हेतुकोटौ आप्तत्वनिवेशस्यानपेक्षा

नन्वेतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आप्तोक्ताकाङ्क्षादिमत्पदकदम्बत्वादिति लोके शक्यमनुमातुम्, न तु वेदे, अपौरुषेये ज्ञानपूर्वकत्वाप्तोक्तत्वयोरयोगादिति चेत्, उच्यते—अनाप्तोक्तत्वशङ्कानिरासस्यैव लोकेऽपि कारणत्वात् हेतुकोटौ आप्तोक्तत्वं न निवेश्यम्, निरस्तानाप्तोक्तत्वशङ्कत्वमेव पदविशेषणमिति तत्र साम्यमेव।

इयांस्तु विशेषः—लोके पदपक्षीकारेण पदत्वहेतुना ज्ञानपूर्वकत्वं साध्यते, वेदे तु तदसम्भवात् पदार्थपक्षीकारेण तादृशपदस्मारितत्वहेतुना संसर्ग एव साध्यते। तत्र च ज्ञानद्वारा संसर्गसाधनापेक्षया साक्षात् संसर्गसाधनं ज्याय एव। ज्ञानपूर्वकत्वसाध्यत्वपक्षेऽपि संसर्गसाधन एव तात्पर्यम्। पदपक्षकत्वे साक्षात् साधनासंभवाद् गौरवमाश्रितम्। अतः फलतः साम्यमेव। भवता चाप्तोक्तत्वनिश्चयादनन्तरमनुमानप्रवृत्तिस्वीकारः, पूर्वं वा। पूर्वञ्चेत्, हेतुकोटावाकाङ्क्षादिमत्त्वमात्रनिवेशादनाप्तवाक्ये हेतुसत्त्वाद् व्यभिचारः। अतः प्रथमपक्षस्वीकारे आप्तोक्तवाक्येष्वर्थसंसर्गस्यावश्यकत्वेन व्यभिचाराभावाल्लोकेऽपि साक्षात् संसर्गसाधनसौकर्याय पदार्थपक्षकानुमानस्वीकारो युक्ततरः। तथा मे पदार्था मिथोऽन्विताः, विशेषेणास्तपुरुषदोषाऽऽशङ्कापदस्मारितत्वादित्यनुमानेन लोके संसर्गनिश्चये वेदेऽप्येवं संभवात्, लोके प्रकारान्तराश्रयणेऽपि वेद एवमनुमानसंभवाच्चार्थेऽनुमाननिर्णीते सति वेदस्याप्यनुवादकत्वं कुतो नेति।

इदञ्चानुवादकत्वापादनमन्विताभिधानशक्तिरस्तीत्यभ्युपगम्य। एवमनुमानेन निर्वाहे सति च तत्र प्रमाणमेव नास्ति, विशिष्टार्थप्रतीत्यन्यथानुपपत्त्यैव शब्दस्यान्विते शक्तिकल्पनात्, तस्याश्चानुमानत एव सिद्धत्वात्। तस्मात् सर्वश्शब्दोऽनुमानं स्यात्। अथाकाङ्क्षादिमत्पदकदम्बज्ञानमात्रेण व्याप्तिप्रतिसन्धानादे प्रागेवान्वय-प्रतीतिरिति वेदेऽन्विताभिधानमिष्यते, तदा लोकेऽप्येवमेव। तस्माच्छब्दस्यानुवाद-कतेति कल्पना विपरीतकल्पनैव, लिङ्गस्यैवानुवादितत्वात्।

## ९. शब्दस्थलेऽनुमानस्य सर्वथाऽप्रसङ्गः

अथार्थनिर्णयस्य जातत्वात् सिद्धेऽनुमितेर्नावकाश इति मन्यते, तर्हि शब्दस्थलेऽनुमानकथाया एव नावसर। एवं व्यवहाराच्छब्दस्यान्विते शक्त्यव-धारणाल्लोक एवान्वितशक्तेर्निश्चितत्वात् तत्रैव लोके शब्दस्यानुवादकत्वमिति भवतां विपरीतकल्पनैव। तस्माच्छब्दसामान्यं पृथक् प्रमाणमिति।

तथा चोक्तं न्यायकुसुमाञ्जलौ—

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता॥
व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः[1]॥

## १०. जगदीशतर्कालङ्कारमतम्

**शब्दशक्तिप्रकाशिकाकारास्तु**

आकाङ्क्षादिमता पदेन प्रयोज्यस्तत्तदर्थसंसर्गावगाही यो बोधः, स नियन्त्रितार्थकत्वात् = तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वाद् न प्रत्यक्षः, न चानुमितिः।

अयमाशयः—अस्तितावान् घटोऽस्ति, घटमानयेत्याद्याकाङ्क्षादिमच्छब्देभ्य-स्तत्तन्निष्ठवृत्त्या पदार्थानां बोधानन्तरं घटादावस्तित्वादेः सम्बन्धावगाही विलक्षणो बोधः। पदानां यत्रान्वयव्यतिरेकाभ्यामाकाङ्क्षादिमत्त्वेन ज्ञानं कारणम् न तु 'अस्तित्वेन गां जानामि' इत्यनुव्यवसायसाक्षिकत्वाद् वाच्यार्थानामसंसर्गा-ग्रहसहितमुपस्थितिमात्रम्। विशिष्टज्ञानानुभवस्यास्वीकारे 'पर्वतो वह्निमान्' इत्यनुमितिस्थलेऽपि 'वह्निं जानामि' 'पर्वतं जानामि' इत्येवानुभवः स्यात्, न तु 'वह्निमत्तया पर्वतं जानामि' इत्याद्यनुभवः।

ननु विशिष्टमतेरानुभविकत्वेऽपि तत्र शब्दत्वजातौ मानाभावेन स्मृतित्व-मेवाङ्गीक्रियताम्, 'शृणोमि' इत्यनुव्यवसायस्य मानं तु विवादग्रस्तत्वादनादेयमेव।

---

१. ३।१४।१५।

अतः स्मृतिरेव स्वीकर्त्तव्येति चेत्, न, तद्धर्मिकतद्वत्तास्मरणं प्रति तद्धर्मिकतद्वत्ता-संस्कारस्य हेतुत्वेन, तस्य च तादृशबोधात् पूर्वं नियमतोऽसत्त्वात् ।

साक्षात्कारोऽपि वक्तुं न पार्यते, तथा सति साकाङ्क्षपदेनैवानुमित्यादिना-प्युपस्थितार्थस्योपनयमर्यादयाऽवगाहितापत्तिः स्यात् । पदोपस्थाप्यार्थावगाहिताया एवानुभवसिद्धत्वेनेष्टापत्तिरपि स्वीकर्तुं न शक्यते । तत्पूर्वमनुव्यवसायसामग्री-विरहात् तदुत्तरं तथाविधानुव्यवसायापत्त्यापीष्टापत्ति. कर्त्तुं न शक्यते । तत्तदर्थ-विषयकशाब्दबुद्धेरनुव्यवसायं प्रति तत्तदर्थसाकाङ्क्षपदजन्यतद्विषयशाब्दत्वेन विषयविधया कारणत्वकल्पनायामतिगौरवं स्यात् ।

ननु 'फलमुखं गौरवं दोषानाधायकम्' इति नयेनैतादृशदोषनिरासायैव तादृशगौरवं स्वीकर्त्तव्यमिति चेत्, न, 'जलाहरणयोग्यो घटो न सच्छिद्रः' इतीतरबाधसमवधाने 'घटेन जलमाहर' इति वाक्यजन्यशाब्दबोधानन्तरम् 'छिद्रेतरं शृणोमि' इत्यनुव्यवसाये तादृशाकाङ्क्षादिमत्पदजन्यपदार्थोपस्थित्यविषयस्य च्छिद्रेतरत्वादेर्भानाद् व्यभिचारात् ।

ननु तादृशवाक्याच्छिद्रेतरत्वादेर्बोध., का नो हानिः ? 'छिद्रेतरघटेन जलमाहरेत्' इत्यादिवाक्यादेव तादृशबोधो भविष्यतीति चेत्, न, अलौकिकप्रत्यक्षे विशेष्यविशेषणभावस्यानियमेन 'गौरस्ति' इत्यादिवाक्याद् गोविशेष्यकास्तित्वादि-प्रकारकस्येवास्तित्वविशेष्यकगोप्रकारकबोधोऽप्यापद्येत, तत् साधकानुव्यवसायस्य सामग्रीसत्त्वात् । अत एवासौ नानुमितिरपि, पूर्वपरामृष्टस्य वस्तुमात्रस्यैवासति बाधके शाब्दधीविषयतापत्तेः । तत्तदर्थविषयकशाब्दबोधं प्रति साकाङ्क्षपद-जन्यतत्तदर्थविषयकस्मृतेः कारणत्वं परिकल्प्य नायं दोषो वारयितुं शक्यः, यतो हि तादृशहेतुत्वस्वीकारेऽपि पदार्थानामन्वयबोधकाले, शाब्दत्वस्य प्रत्यक्षत्वादिव्याप्यत्वे पदोपस्थप्यार्थावगाहिप्रत्यक्षादाविष्टापत्तिसम्भवेऽपि, अपदार्थानामपि प्रत्यक्षानुमितिसामग्रीबलेन प्रत्यक्षानुमित्योरन्यतरप्रसङ्गस्य दुर्वारतापत्तेः । शाब्दबोधसामग्रीप्रत्यक्षानुमित्योः प्रतिबन्धिकेत्यभ्युपगम्य वारणं तु न सम्भवति, शाब्दबुद्धे. प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात् । तादृशबोधे—शाब्दत्वमेव न मन्यते इत्यपि वक्तुं न शक्यते, तदुत्तरम् 'शृणोमि' इत्यनुव्यवसायस्य सर्वसिद्धान्तसिद्धत्वात् । अन्यथाऽनुमित्यादे-रप्यपलापापत्तेः ।

एवञ्च तत्र शाब्दत्वजातिस्वीकारे तस्याश्च प्रत्यक्षत्वादिजातिविरुद्धत्वे जितं नैयायिकैः । अतः प्रत्यक्षत्वव्याप्यमेव शाब्दत्वमिति वक्तव्यमिति तादृश-बन्धकत्वकल्पनं न सम्भवतीति रहस्यार्थः ।

ननु शब्दाप्रयोज्यविषयताशालिप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति नोक्तदोष इति चेत्, न, शाब्दान्यप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमपेक्ष्य शाब्दबोधस्य प्रत्यक्षभिन्नत्वकल्पनायामेव लाघवात्, प्रतिबन्ध्यतावच्छेदकस्य गुरुशरीरत्वात्, पदार्थस्मृतेः स्वतन्त्रहेतुत्वकल्पनाच्च।

ननु प्रामाणिकं गौरवं न दोषायेति चेत्, तदपि न, मानाभावात्। तदाह—

साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचर।
सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा॥[1]

अथ लिङ्गजन्यत्वेनान्वयबोधस्यानुमितित्वसिद्धौ अगत्या शाब्दान्यानुमितौ तत्सामग्र्याः प्रतिबन्धकत्वं वाच्यम्। अतो लिङ्गजन्यत्वमेव शाब्दबोधस्येति चेत्, अत्रोच्यते—गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्बाधविरहित्वरूपं योग्यतामात्रं लिङ्गम्, बाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतानिश्चयस्यानावश्यकत्वात्।

अयं भाव.—बाधनिश्चयदशाया शाब्दबोधवारणाय योग्यतानिश्चयस्य हेतुत्वं स्वीक्रियते, निरुक्तयोग्यतानिश्चयस्य बाधज्ञानप्रतिबन्धकत्वात्। बाधनिश्चय एव शाब्दसामग्रीकाले न सम्भवतीति तादृशयोग्यतानिश्चयहेतुत्ववादिनामाशय.। स च न सङ्गच्छते, विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकत्वात् तदभावरूपकारणविरहादेव तदानी शाब्दवारणसम्भवात्, योग्यतानिश्चयस्य हेतुताकल्पने प्रयोजनाभावात्।

ननु इच्छाया उत्तेजकत्वानुरोधेन विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयः प्रतिबन्धकः, परोक्षज्ञानस्यानाहार्यत्वनियमेन तत्रेच्छाया अनुत्तेजकत्वात्। एवञ्च नानाप्रतिबन्ध्यप्रतिबन्धकभावकल्पनस्यावश्यकत्वे शाब्दं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वमेब न कल्प्यत इति बाधनिश्चयाभावेन न तदन्यथासिद्धिरिति चेत्, योग्यतामात्रलिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि योग्यतालिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वापातात्। विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयाभावस्य हेतुत्वेन तेनैवान्यथासिद्धस्य गवादावस्तित्वरूपयोग्यताज्ञानस्य न पृथग् हेतुत्वमिति तात्पर्यम्।

ननु तद्विषयकानुमितौ निराकाङ्क्षतद्बोधकपदजन्यपदार्थोपस्थितेः स्वातन्त्र्येण प्रतिबन्धकत्वकल्पनान्नैष दोष इति चेत्, न, शाब्दबुद्धौ योग्यताज्ञानत्वेनैव हेतुत्वात्, अनुमितौ तु हेतुमत्तानिश्चयस्यैव हेतुत्वाद् योग्यतासंशयस्थलीयान्वयबुद्धावनुमितित्वकल्पनासम्भवात्।

---

1. शब्दश० प्र० पृ० ६।

गौरस्तीत्यादावव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णविशिष्टचरमत्वादि-रूपानुपूर्वीविशेषरूपाकाङ्क्षायाः शब्दादिनिष्ठत्वेन गवादिरूपपक्षेऽसत्त्वान्न तस्या लिङ्गत्वम् न वा साधकत्वम्। योग्यताया अर्थनिष्ठत्वेनाकाङ्क्षायाः शब्दनिष्ठत्वेन च सामानाधिकरण्यसम्बन्धेन वैशिष्ट्याप्रसिद्धया नैकविशिष्टापरस्य हेतुत्वसम्भव इति तात्पर्यम्।

अथ गौरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपद-स्मारितत्वात्, घटवत्, अथवा गौरस्तितावान्, अस्तिपदसमभिव्याहृतगोपद-स्मारित्वात्, चक्षुर्वत्—इत्याद्यनुमानत एवास्त्वन्वयधियोऽन्यथासिद्धिः। पदानामेक-वाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्वं तस्यावश्यकत्वात्।

न च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचार., स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्करत्वात्, एकविधव्यभिचारज्ञानसत्त्वेऽप्यन्यविधव्याप्ति-निश्चयस्य सम्भवाच्च, समानाकारस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वादिति नव्यवैशेषिकाः। तत्, न गवादे. पदस्मारितत्वाद्यभावग्रहदशायामुत्पन्नस्य गौरस्ती-त्याद्यन्वयबोधस्योक्तहेतुनाप्यनिष्पत्तेः।

एवञ्च पदस्मारितत्वाभावग्रहदशायामुक्तहेतुमत्तापरामर्शासम्भवादनिष्पत्तेः। स्वरूपसत्येवान्वयबुद्धावुपयुज्यते, न तु ज्ञाता, प्रमाणाभावात्, पदैरस्मारितस्यापि पदजन्या पदार्थस्मृति· तत्स्मारितत्वग्रहदशायामन्वयधीप्रसङ्गाच्च। तथा च घटवद् भूतलमित्यादिशाब्दबोधे घटादिपदस्मारितस्य घटादेरपि घटादिपदस्मारितत्व-भ्रमात्मकग्रहात् तादृशबोधे भानापत्ते.। एतेन गोपदमस्तित्ववद्गोचरज्ञानपूर्वकम्, अस्तिपदसाकाङ्क्षगोपदत्वात्, यन्नैवम्, तन्नैवम्, यथाऽऽकाशमित्येवं पदपक्ष-कमप्यनुमानं कणभक्षपक्षानुसारिणामपास्तम्, गवादिपदानां ज्ञानपूर्वकत्वाद्यभाव-निश्चयदशोत्पन्नस्य गवादिमुख्यधर्मिकास्तित्वाद्यन्वयबोधस्य सार्वजनीनस्योक्त-लिङ्गादप्यनिष्पत्ते., वाक्यार्थस्यापूर्वत्वेन तद्गर्भसाध्यस्य प्रायशः प्रागनुपस्थित्यानु-मानायोगाच्च।

यद्येकपदार्थेऽपरपदार्थवत्त्वं योग्यता, तदाऽपूर्ववाक्यार्थस्थले नैयायिकैरपि शाब्दबोधानभ्युपगमाद् नास्त्ययं दोष इति चेत्, उच्यते—वाक्यार्थबोधस्यानुमितित्वे सत्येव साकाङ्क्षपदत्वादिलिङ्गकत्वं कल्प्यं भवेत्, तदेव त्वसिद्धम्, प्रमाणाभावात्।

अयं भावः—अयं बोधः, किञ्चिल्लिङ्गजन्यः, अनुमितित्वाद् इत्यनुमाना-ल्लिङ्गजन्यत्वं साधनीयम्। एवञ्च लाघवज्ञानादिवशात् पदस्मारित्वादिलिङ्गजन्यत्वं सेत्स्यति, तच्च न सम्भवति, अनुमितित्वहेतोः स्वरूपासिद्धत्वात्। 'अस्तित्वेन गामनुमिनोमि' इत्यादेरनुव्यवसायस्य तत्रासत्त्वात्, प्रत्युत, गौरस्तीति वाक्या-दस्तित्वेन गौः श्रुतः न त्वनुमित इत्यनुभवाच्च।

ननु श्रुधातोः शब्दप्रत्यक्षादेरेव शक्यतावच्छेदकत्वेन कथं गौः श्रुत इत्यनुव्यवसायस्य गौरस्तीति शब्दानुकूलत्वमिति चेत्, न, 'श्रोतव्यो मन्तव्यः' इत्यादिप्रयोगदृष्टया शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदकत्वात् प्रमात्वबाधकाभावादुक्तानुव्यवसायस्य शाब्दत्वांशे भ्रमत्वं कल्पयितुं न शक्यते। वह्न्याद्यनुमितेरपि, वह्न्याद्यनुमितिः, वह्न्यादिपदजन्या, वह्न्याद्यनुमितित्वादित्यनुमानेन पदजन्यत्वं प्रसाध्यते, तेनैव हेतुनाऽन्वयबोधत्वं सिषाधयिसितुं न शक्यते, अनुमिताविवान्वयमतावपि समानविषयकप्रत्यक्षसामग्र्यादे प्रतिबन्धकतया तदभावजन्यत्वेनैकशेषस्य दुष्करत्वात्। तदभावजन्यत्वेन शाब्देऽप्यनुमित्यन्यत्वसाधने बाधकाभावादिति भावः।

ननु पदज्ञानजन्यत्वेन शाब्दत्वसाधने निराकाङ्क्षवाक्यस्थलीयपदार्थोपस्थितिमूलकोपनीतभाने व्यभिचारवारणायाकाङ्क्षादिमत्पदज्ञानजन्यत्वमेव हेतुः कार्यः। तथा च वह्न्याद्यनुमितौ पूर्वमाकाङ्क्षाज्ञानासम्भवात् तेन तत्र तत्साधनासम्भव इति चेत्, न, घटादिपदैरर्थस्य घटादेः स्मरणे सति तदीयव्याप्तेरिव दहनाद्यर्थैस्तदर्थकवह्न्यादिपदस्य स्मरणोत्तरं तदीयाकाङ्क्षाद्यवगमस्य सुवचत्वात्, वाच्यतावद् वाचकत्वस्यापि सम्बन्धस्य स्मारकतायामविशिष्टत्वात्। पदज्ञानस्य पदार्थोपस्थितिद्वारैव शाब्दं प्रति हेतुतया शाब्दाव्यवहितपूर्वं तज्ज्ञानस्य नियमतोऽसत्त्वेनाकाङ्क्षाज्ञानस्य स्वातन्त्र्येण हेतुत्वादेकपदस्मारितधर्मिकापरपदस्मारितसंसर्गबोधेच्छारूपाकाङ्क्षायाश्च पदज्ञानकालेऽऽसम्भवाच्च।

आनुपूर्वीरूपाकाङ्क्षाज्ञानस्य पदज्ञानकाल एव सम्भव इति तु नाशङ्कनीयम्, ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितिस्थले साध्यज्ञानविरहेऽपि उद्बोधकान्तरात् साध्यवाचकपदस्मरणसम्भवेन, पूर्वं साध्यस्यानुपस्थित्या साध्यवाचकपदस्य स्मरणासम्भवो न शङ्कितुं शक्यते।

अथ च घटादन्य इत्यादिवाक्याद् घटप्रतियोगिताकान्यत्वादिप्रकारेण निरवच्छिन्नविशेष्यताको घटान्यस्य बोधः सर्वजनसिद्धः। स चास्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तथाविधान्वयबोधं प्रति हेतुत्वादुपपद्यते। वैशेषिकाणां तु—भेदो घटप्रतियोगिताकः, घटसाकाङ्क्षान्यपदस्मारितत्वादिति रीत्या अनुमित्या न तन्निर्वाह, पक्षविधयान्यत्वस्य भानेऽप्यन्यत्वप्रकारेणान्यस्य तत्राभानात्। न च तत्रान्यपदमेव घटान्यत्वप्रकारेण घटान्यस्य लक्षकम्, घटादित्यस्य व्यर्थतापत्तेः। अन्यथा घटोऽस्तीत्यादावपि घटादिपदस्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवात्, तत्राप्यस्तित्वघटयोरन्वयबोधापलापापत्तेः।

तदेतत् सकलमभिसन्धायोक्तम्—

योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका।
प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः[1]॥

---

१ शब्दश० प्र० ४।

## ( क ) शब्दार्थयोः सम्बन्धस्यावश्यकत्वम्

## औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः—

मीमांसकमतं सम्यक् समालोच्योऽत्र यत्नत. ।
निबध्यतेऽथ निष्कर्ष. प्रीयता परमेश्वर: ॥

लोके हि 'बालो गच्छति' इति वाक्यश्रवणानन्तरं बालकर्तृकं गमनं समवगच्छन्ति श्रोतार । शब्दाश्च प्रदीपवत् सम्बद्धानेवार्थान् प्रकाशयन्ति. नासम्बद्धान् । अन्यथा घटपदात् पटोऽपि प्रतीयेतेति शब्दस्यार्थेन साकं कश्चन सम्बन्धो वाच्य., येन शब्दविशेषादर्थविशेषप्रतीतिरियमुपकल्पेत । स च सम्बन्धः क इति जिज्ञासाया शब्दार्थयोस्तादात्म्यं सम्बन्धमामनन्ति शाब्दिका:, 'अस्मात् पदादयमर्थो बोद्धव्य.' इतीश्वरेच्छारूपं सम्बन्धं तर्करसिका इति । विस्तरस्तूपक्रम एवावेदितोऽयं विषय इति तत इव ग्रहीतव्य: ।

## ( ख ) शाब्दिकपद्धतावनुपपत्तिप्रदर्शनम्

तत्र शाब्दिकनये मधुशब्दोच्चारणे शब्दार्थयोरभेदान्मुखमाधुर्यापत्तिः । विभिन्नदेशयो. शब्दतदर्थयोरुच्यमानं तादात्म्यं सहृदयहृदयोद्वेजनाय कल्पेत । नैयायिकनये तु ईश्वरमनभ्युपगच्छतां तदिच्छारूप: संकेतो दुर्ग्रह. स्यादित्येवमनुशयाना मीमांसका: प्रत्याय्यप्रत्यायकभावापरपर्यायमनुभाव्यानुभावकत्वं शब्दार्थयो: सम्बन्धमुररीकुर्वन्ति । शब्दस्यार्थोऽनुभाव्य., अर्थस्य चानुभावक. शब्द: । पदसमुदायात्मकानि हि वाक्यानि श्रूयमाणान्यर्थविशेषं प्रत्याययन्ति । तत्र शब्दस्यार्थ: प्रत्याय्य:, अर्थस्य शब्द: प्रत्यायक इति । प्रत्ययशब्देनात्र पदजन्यपदार्थस्मरणस्य परिग्रहो न स्यादिति तद्व्यावर्तनायेदमेव प्रत्याय्यप्रत्यायकत्वमनुभाव्यानुभावकत्वेन व्यपदिश्यते ।

## ( ग ) मीमांसकमतस्याशयः

अत्र मीमांसकानामयमाशय:—सर्वत्र हि प्रमाणप्रमेयौ परस्परं संसक्तावेव संलक्ष्येते । तथा हि—यथा चक्षु: संयुक्ततादात्म्येन सम्बद्ध्यमानं रूपं प्रकाशयति, धूमादिश्च व्याप्त्यादिना संसर्गेण वह्न्यादिकम्, तथा प्रमाणभूतस्य शब्दस्यापि स्वप्रमेयेण सार्द्धं केनचन सम्बन्धेन भवितव्यमेव । तत्र हि विप्रकृष्टयोश्शब्दार्थयो: प्रसिद्धस्तावत् संयोग: सम्बन्ध: सम्भावयितुमपि न शक्यते । विप्रकृष्टत्वादेव च न समवाय:, न च वैशिष्ट्यम् । तन्मूलकानि सम्बन्धान्तराण्यपि नैवात्रात्मलाभं लभन्ते । तस्मात् सम्बन्धस्यान्यस्यासम्भवादनुभावकत्वमेव शब्दार्थयो: सम्बन्ध: कल्पयितुं शक्यते, नान्य: ।

## [अ] आत्माश्रयत्वदोषपरिहारः

अथार्थमनुभावयन् शब्दो यदि स्वोपपाद्यमनुभावकत्वमेवापेक्ष्यार्थमनुभावयेत् तदाऽऽत्माश्रय आपद्येतेति शङ्कितुं न शक्यते। यतो मीमासकैः सर्वेषु कारणेषु तत्तत्कार्योपजननानुकूला काचनोपेयते शक्तिः। सा च कारणरूपता, तां व्यवस्थापयत् पदार्थान्तरं वेति द्वौ पक्षौ। एवञ्च व्यवस्थिततत्तदर्थाभिधानानुकूलां शक्तिमपेक्ष्य पदानि स्वयं निजमर्थमभिदध्युरिति कोऽवसर आत्माश्रयस्य ?

## [आ] परस्पराश्रयत्वदोषपरिहारः

अर्थावबोधे फले सति तदेकोन्नेयस्य शक्तिरूपसम्बन्धस्य ज्ञानम्, सम्बन्धज्ञानादर्थावबोध इति परस्पराश्रयशङ्का तु समुन्मेषं प्राप्नुयात्। सा संप्रति परिह्रियते—

प्रमाणानां प्रमेयैः साकं सार्वत्रिकः सम्बधो वर्तत इति प्रतिपादितं पुरस्तात्। तत्र च तस्य सम्बन्धस्यार्थप्रत्यायने गतिद्वयं वर्तते।

तत्र प्रथमा—सम्बन्धः स्वयमविज्ञात एव स्वरूपसन्नर्थविगमे हेतुर्भवति। यथा प्रत्यक्षे चक्षूरूपसन्निकर्षः। तत्र हि अज्ञातेन्द्रियसन्निकर्षवृत्तस्यापि पुरुषस्योन्मिषितनेत्रयुगलस्य भवति रूपोपलब्धिः।

अपरा च—पूर्वज्ञातः सम्बन्धः स्मृतिपथमारूढोऽर्थावबोधे निमित्तं भवति, यथानुमानादौ। तत्र हि अनवगतव्याप्तिसम्बन्ध., विस्मृततत्सम्बन्धो वा धूमेन धूमध्वजमनुमिमान. साक्षात्कृतः।

अनयैव रीत्या शब्दप्रमाणेऽप्यनुभावकत्वशक्तिरूपः पदपदार्थयो. सम्बन्धोऽपि ज्ञायमान एवार्थप्रतिपत्तिहेतुर्भवतीति स्वीकर्त्तव्यम्।

## [इ] ज्ञातायाः शक्तेर्बोधप्रयोजकत्वम्

एवञ्च यदि शब्दार्थयोरनुभवजननानुकूला शक्तिः सम्बन्धः स्वीक्रियते, तदा तामनवगच्छतोऽव्युत्पन्नस्यापि शब्दश्रवणे पावकमजानतस्तस्मिन् स्पृष्टे दाह इव शाब्दबोध. प्रसज्येतेति शङ्का सुदूरमपास्ता।

अयमस्त्यत्र विशेषः—यत्र वस्तुप्रयोजिका शक्तिः, सा ज्ञाननिरपेक्षैव तद्वस्तु प्रयुङ्क्ते, ज्ञानप्रयोजिका तु शक्तिः स्वयं विज्ञातैव स्वं कार्यं समुत्पादयि-

तुं प्रभवतीति। अत एव शक्तिज्ञानसहकृतं पदज्ञानं पदार्थस्मृतिं विदधदेव शब्दज्ञानजन्यबोधहेतुरिति सर्वतन्त्रसिद्धान्तः।

## [ई] वृद्धव्यवहारादिभिः सम्बन्धज्ञानम्

श्रोतारः सम्बन्धज्ञानाच्छब्दार्थमवगम्य तदन्यथानुपपत्त्या सम्बन्धमवगच्छन्तीति नोच्यते येनान्योन्याश्रयो दोष आपद्येत, किन्तर्हि वृद्धव्यवहारादिभिरुपायैः शब्दार्थसम्बन्धं प्रतिपद्यन्ते। प्रतिपन्नसम्बन्धाश्च व्युत्पन्नाः सन्तः शब्दश्रवणेऽर्थमवगच्छन्ति। अतो नास्ति परस्पराश्रयदोषशङ्काचर्चापि। वृद्धव्यवहाराद्युपायाश्च—

> शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
> वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः[1]॥

इत्यभियुक्तोक्ता ग्राह्याः।

तेषु चोपायेषु व्याकरणादयस्तानेव पदपदार्थसम्बन्धविशेषान् व्युत्पादयन्ति, ये पूर्वत एव भाषाया व्युत्पन्नाः। अव्युत्पन्नस्तु पदमात्रे योऽत्यन्तबालः, स वृद्धव्यवहारेणैव प्रथमं व्युत्पाद्यते। अतोऽयमेव मुख्यतया सर्वत्र स्वीक्रियते। वृद्धव्यवहारप्रक्रिया चोपक्रम एव प्रदर्शिता द्रष्टव्या।

ननु येन वृद्धव्यवहारेण बालो व्युत्पाद्यते सोऽपि शब्दार्थसम्बन्धज्ञानसव्यपेक्ष एव। स च यदि ततः पूर्वेण संव्यवहारेण, सोऽपि ततः पूर्वतरेणेत्युत्प्रेक्ष्यते, तदास्या अपर्यवसानेनानवस्थादोषप्रसङ्गस्तु वृद्धव्यवहारपरम्पराया बीजाङ्कुरवद अनादित्वात् परिहरणीयः। बीजाङ्कुरे हि न स्याद् बीजाद्योऽङ्कुरः, तस्मादेवाङ्कुरात् तस्य बीजस्य समुत्पत्तिः, परन्तु पूर्वस्मादङ्कुरात्। अङ्कुरोऽपि तथान्यस्माद् बीजान्तरादित्यनवस्थितायामपि बीजाङ्कुरपरम्पराया न दोषं मन्यन्ते, तथैवात्रापि। इदं नामानादित्वाश्रयणम् 'अगतिकगति'न्यायेनेति न मह्यं रोचत इति य एवं मन्यते, स प्रतिवक्तव्यो यत्—यावन्मार्गान्तरं नोपलभ्यते, तावदीदृशेषु विषयेषु तत्त्वान्वेषणपरैः रोचनीयमेवानादित्वमिति। अथवाऽलमतिविस्तरेण 'उपपद्यते चाप्युपलभ्यते च'[2] इति न्यायमनुसरन्तः सर्वे तीर्थकराःसंसारस्यानादित्वमभ्युपगच्छन्त्येव।

## (घ) शब्दार्थसम्बन्धानां नित्यत्वम्

इयञ्चार्थनिरूपिता पदनिष्ठाऽभिधाशक्तिः। सा च नित्येति। तथा च सूत्रम्—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्"[3] इति।

१. सि० मु० श० ख० ८१। २. वे० सू० २।१।३६। ३ जै० सू० १।१।५।

अस्यायमर्थं—उत्पत्तिशब्देनात्र जननान्तरभाविनी स्थितिर्लक्ष्यते। औत्पत्तिकः सदा स्थितः, नित्य इति यावत्। शब्दस्यार्थेन सम्बन्ध. सज्ञासंज्ञिलक्षण·[1] ज्ञाप्यज्ञापकभावरूपः। अर्थो ह्याकृतिरूपो नित्यः; शब्दोऽपि नित्य एव। नित्ययोस्तयो शब्दार्थयोः सम्बन्धोऽपि स्वभावसिद्धो नित्य इत्युक्तं भवति। तस्य = सम्बन्धस्य, ज्ञानम् = ज्ञापकं प्रतिपत्तिहेतुः। उपदेशः = गामानयेत्यादिरनादिर्वृद्धव्यवहार इत्यर्थः। एवं सम्बन्धस्यानादिता प्रतिज्ञाय तदुपपादयितुमाह—अव्यतिरेकश्चेति। अतीतेषु कालेषु कदापि यस्मात्तस्य व्यवहारस्याभावो नास्ति, तस्मादनादिशब्दार्थसम्बन्ध इति भाव.। अर्थेऽनुपलब्ध इति शब्दप्रतिपाद्यस्य वाक्यार्थस्यानिर्ज्ञातपूर्वत्वमाचष्टे। तत्प्रमाणं प्रकृतं चोदनात्मकं वेदवचनं धर्माधर्मप्रमितिकरणम्। अनेनानधिगतकालत्रयाबाधितार्थविषयकप्रमाजनकं वेदवाक्यं प्रमाणमेवेत्युक्तम्। इदञ्चानधिगतेत्यादिलक्षणलक्षितं प्रामाण्यं वैदिकलौकिकसर्वप्रमाणसाधारणम्।

वेदे विशेषमाह—अनपेक्षत्वादिति। वेदा हि नित्यः, अपौरुषेयत्वात्, प्रत्यक्षादिप्रमाणान्तरप्रभववक्तृपुरुषज्ञाननिरपेक्ष एव स्वार्थे प्रवर्तते। तस्मान्न वेदेऽप्रामाण्यशङ्काकलङ्क इति। लौकिकाना तु पुरुषवचसां प्रयोक्तृपुरुषज्ञानमूलतया स्वप्रामाण्याय तत्प्रामाण्यमुखनिरीक्षकाणा प्रामाण्यमनियतं भवेत्। नैषा कथा वेदे, तस्य पुरुषबुद्ध्यनपेक्षत्वात्।

बादरायणस्येति वचनं पूजार्थम्। यथोदितं प्रमाणसामान्यलक्षणं वेदप्रामाण्यगतमनपेक्षत्वलक्षणं वैशिष्ट्यं चाचार्यबादरायणस्यापि संमतमेवेति। प्रसाधितं ह्येतद् भगवता बादरायणेन वेदापौरुषेयत्वं देवताधिकरणे—"अत एव च नित्यत्वम्'[2] इति।

## [अ] अनादित्वस्याशयः

अथ पूर्वपूर्ववृद्धव्यवहारमनुपतन्नेवोत्तरोत्तरः प्रवर्तते शाब्दव्यवहार इति तु युक्तम्, परन्तु नैतद् युज्यतेऽस्यानादित्वम्। अनेन पदेनायमर्थो व्यवहर्तव्य इतीदम्प्रथमतया संकेतः कश्चिदेकेन बहुभिर्वा कदाचित् कृत इत्येवास्तु, अलं नित्यायाः शक्तेः सम्बन्धत्वकल्पनया इति चेत्, इष्टापत्तिः। अङ्गीकृतमेतदस्माकमाचार्यैः शब्दविशेषेषु। तथा हि—यज्ञदत्तो विष्णुमित्र इत्येवञ्जातीयका यदृच्छाशब्दसंज्ञिताः संज्ञाशब्दाः। ते हि यदृच्छयैव पित्रादिभिर्जातानामेकादशेऽहनि नामकरणसंस्कारकाले 'एकादशेऽह्नि पिता नाम कुर्यात्' इति स्मृत्यनुसारेण संकेतिताः। न हि तेषां शब्दानां पूर्वव्यवहारानुगता शक्तिरस्ति। तस्मादीदृशेषु शब्दविशेष्वादिमानेव

१ शा० भा० १।१।५। २. वे० सू० १।३।२६।

संकेतोऽविप्रतिपन्नः सर्वेषाम्। परं नैष पन्था शब्दानां विषय आश्रयितुं शक्यते। तद्यथा— काममुत्प्रेक्ष्यतां कालविशेषः कश्चिद्, यदा नैव कानिचिद् भाषापदानि भवन्ति स्म। तथापि तस्मिन् काले कः खलु पुरुषः शब्दानां संकेतं विदध्यात्, विदधद् वा कथञ्चित् स्वं संकेतं कैः शब्दैः प्रकाशयेत्। ततोऽसम्भवमेवेदं प्रथमं संकेतकरणम्। तथा चोक्तं पार्थसारथिमिश्रैः—'सम्बन्धं हि कुर्वताऽवश्यं केनचिद् वाक्येन स कर्त्तव्यः, गौः सास्नादिमानित्यादिना। न चाप्रसिद्धमर्थप्रतिपादकत्वेन सास्नादिशब्दमर्थप्रतिपादनाय शक्नोति कर्त्तोच्चारयितुम्'[1] इति।

सम्बन्धग्रहकाले च व्युत्पित्सुर्बालोऽनुभावकत्वमेव शब्दानां कल्पयति, न व्यवहर्त्तुः संकेतविशेषम्, यतः कदाचिद् व्यवहरतोर्वृद्धयोः कलहोऽपीदृशो भवति— 'अस्य पदस्यायमर्थोऽन्यो वा' इति। न हि तत्र बालस्य व्यवहर्तृपुरुषतः संकेत इति कल्पना कर्त्तुं शक्या। अनेकदेशानेकजनव्यापकश्चायं शाब्दव्यवहारः कथङ्कारं पुरुषविशेषकृतसंकेतमूलः संभाव्येत। तस्मादनेन संकेतयित्रा पुरुषविशेषेण विशिष्टा काचन विधानपरिषत् प्रतिष्ठापनीया भवेत्, यत्र स्वकः संकेतः संकेतयित्रा प्रस्तूयेत। तत्र समुपस्थिताश्च विविधदिग्देशेभ्यः समागता मूककल्पाः सन्तः प्रस्तुतं तमर्थमनुमन्येरन्। तस्मात् पुरुषकृतः शब्दानामर्थेषु संकेताख्यः सम्बन्ध इति मनोरथमात्रम्। अनादिः शक्तिरूपः सम्बन्ध इत्येव तु श्रेयान् पन्थाः।

## [आ] प्रभाकरमतम्

तत्र जगतः सृष्टिप्रलयावपलपन्तः प्राभाकराः 'न कदाचिदनीदृशं जगत्' इति वदन्तः शब्दार्थव्यवहारपरम्परामनादिमेव मन्यन्ते। तौ मन्यमानानां तु श्रुतिस्मृतीतिहासपुराणन्यायेभ्यस्तत्प्रामाण्यादेव सर्गादिभुवां देवर्षीणामुपपद्यतेऽतीत-कल्पस्य शब्दार्थव्यवहारस्यानुसन्धानम्। तन्मूलकश्चोत्तरोत्तरो व्यवहार इति निर्विचिकित्सितमेवैतत्।

## [इ] शब्दार्थसम्बन्धानां नित्यत्वे शङ्कासमाधाने

अत्राहुः—नित्ये शब्दार्थसंबन्धे प्रतिज्ञायमाने महत् कल्पनागौरवं प्राप्नोति। एकस्यार्थस्य वाचकताशक्तिरेकस्मिन्नेव पदे कल्पयितुं युक्ता। एवं वाच्यताशक्ति-रप्येकस्य पदस्यैकस्मिन्नेवार्थे कल्पयितुं साम्प्रतम्, न बहुषु पदेषु बहुषु चार्थेषु, कल्पनागौरवात्। अनुभूयन्ते चैकार्थवाचकानि नानापदानि देशभेदेन च। तत्र सर्वत्रानादिं शक्तिं कल्पयतः—अन्यायश्चानेकार्थत्वमिति, अनेकशब्दत्वमिति च न्यायविरोधः। इदं पदमस्मिन्नर्थे प्रयोक्तव्यमिति संकेतलक्षणः सम्बन्धो नाना भवन्नपि न दुष्यति, देशभेदात् पुरुषभेदाच्चेति।

---

१ शा० दी० पृ० ११७।

अत्र समादध्म —यद्यप्यनन्तशक्तिकल्पनायां गौरवं न्यायविरोधश्च स्यादेव, तथापि विषयेऽस्मिन्नीदृशेन सामान्यात्मना विचारेण निर्णयो दुर्लभः। तद्विशिष्यैव चिन्ता विदध्मः। यत्रैकस्यामेव भाषायामेकश्शब्दोऽनेकेष्वर्थेषु प्रयुज्यते, यथा पीलुशब्द आर्यैर्वृक्षविशेषे प्रयुज्यते, म्लेच्छैश्च हस्तिनि । तत्रार्यम्लेच्छप्रसिद्ध्यधिकरणन्यायेनार्यप्रसिद्ध्यनुरोधाद्[1] वृक्षविशेषः शक्यः, म्लेच्छानान्तु पृथुत्वसान्द्रत्वरूपाद् वृक्षसादृश्याद् गजे गौण्या वृत्त्या प्रयोग इति निर्णीयते। यत्र तु गौणीमूलं सादृश्यं न लक्ष्यते, तत्र यववराहादिशब्देषु वाक्यशेषाद्यनुरोधादेक एवार्थो मुख्यः, इतरेष्वर्थेषु शब्दप्रयोगार्थप्रतिपत्ती शक्तिभ्रमादिति व्यवस्था। क्व शक्तिः स्थिता, क्व च भ्रान्तेति विनिगमकं किमपि वस्तु यत्र न लक्ष्यते, तत्र त्वगत्या नानाशक्तिकल्पनं सर्वेषामविशिष्टम्। यथा हरिशब्दस्य यमानिलेंद्रचन्द्रार्कविष्णुसिंहांशुवाजिशुकाहिकपिभेकेषु, यथा च चक्रशब्दस्य रथावयवकोकादिष्वर्थेष्विति स्थितम्।

## २. देववाण्याः प्राचीनतमत्वम्

देशभेदेन भाषाभेदेन च यान्यनेकार्थानि पदानि तान्यधिकृत्य विचारे तु वयमेवं निश्चिनुमः—भवितव्यं ह्येकया तादृश्या भाषया या सर्वदेशसर्वजनभाषाणा मूलप्रकृतिभूता, यस्याश्च सर्वे भाषाभेदतत्प्रभेदा भवन्ति, यथाऽवन्या चतुर्विधो भूतग्रामः।

सा च सर्वप्राचीनतया साम्प्रतमुपलभ्यमाना क्लृप्ता देववाणी वेदवाणी वा भवितुमर्हति। तथा च सूचयामास भगवान् वररुचिः शौरसेनीप्रभृतीना बह्वीना प्राकृतभाषाणा मूलं संस्कृतम् 'शौरसेनी, प्रकृतिः संस्कृतम्' [ प्राकृतप्रकाश ] इत्येवमादिना। 'य एव लौकिकाः शब्दा, त एव च तेषामर्थाः' इति च लोकवेदाधिकरणे[2] सिद्धान्तितम्। तस्मात् संस्कृतभाषाया नातिभिन्ना वेदवाण्येव अखिलानां भाषाप्रभेदाना मूलभूता प्रकृतिरिति। तत्रत्यान्येव पदानि प्रधानतया वाचकानि। ततो विकृतिमापन्नानि भाषान्तरपदानि तु निरूढलक्षणया, लक्षणया, गुणवृत्त्या, पुरुषकृतसंकेतेन, आरोपितशक्त्या वा यथायथमर्थप्रत्यायकानीति वैदिका आतिष्ठन्ते।

## ३. भाषावैज्ञानिकमतम्

आधुनिका भाषाविज्ञानवादिनस्तु अस्या अपि वैदिकभाषायाः प्रकृतिप्रत्यययोगाद् विदेशीयभाषान्तरस्थपदसादृश्यात्, एवञ्जातीयकेभ्यो हेत्वन्तरेभ्यश्च संस्कृतभाषाया अन्यासा विदेशीयभाषाणाञ्च सामान्यभूता नित्यानुमेयामेवापूर्वां भाषामुत्प्रेक्षन्ते।

---

१. पू० मी० अ० १।३५। २. पू० मी० १।३।१०।

## ४. अनित्यत्वनिरसननिष्कर्षः

अनयोः पक्षयोर्लाघवगौरवविमर्शस्तु नास्य निबन्धस्य विषय इति अप्रासङ्गिकविचारकलङ्कपङ्कभिया त्यज्यते। सर्वतोभावेन सर्वप्रकृतिमूलभूतभाषास्थितानां पदानां स्वैरर्थविशेषैः सह शक्तिलक्षणः सम्बन्धः पूर्वोक्तयुक्त्या नित्य एव, न पुरुषसंकेतकृतोऽनित्य इति पर्यवसन्नमेव।

## ५. अर्थस्यापि नित्यत्वम्

सा च शक्तिर्धर्मिग्राहकप्रमाणेन सिद्ध्यन्ती ससम्बन्धिकैव शब्दाश्रयार्थविषया च सिद्ध्यति। न हि तस्या नित्यत्वं शब्दार्थनित्यत्वमन्तरा संभवतीति 'औत्पत्तिक'[1] सूत्रे पदात्मनस्तस्य नित्यत्वं प्रासाधि शाबरभाष्ये। अर्थस्यापि नित्यतासंपत्तये 'आकृतिरेव शब्दार्थ'[2] इत्याकृत्यधिकरणे व्युदपादि। आनुपूर्वीविशेषविशिष्टा वर्णा एव पदमिति कृत्वा शब्दनित्यत्वाधिकरणे[3] वर्णनित्यताप्युपापादि। विलक्षणानुपूर्वीविशिष्टपदसमूहात्मकस्य वेदवाक्यस्य च नित्यत्वं निरधारि अपौरुषेयत्वाधिकरणे।[4] एवञ्च शब्दार्थसम्बन्धनित्यत्वसाधन एव प्रायः सम्पूर्णस्तर्कपादो वर्तते इति ज्ञेयम्। तत्र च वर्णाः स्वरूपतो नित्याः, आनुपूर्व्या अनित्यत्वावश्यम्भावाच्च पदवाक्यानां प्रवाहानादित्वमेवेति विवेकः।

## ६. (क) शाब्दबोधोपजनप्रकारः

अयमत्र शब्दाच्छाब्दबोधस्योपजनस्य क्रमः—गौः पश्यतीत्यादौ गकारौकारविसर्जनीयादिशब्दं प्रयोक्तुमिच्छयोद्गच्छन्नान्तरः पवनः कण्ठताल्वादिस्थानैः संयुज्य नित्यान् गकारादिवर्णान् क्रमेणाभिव्यनक्ति। ततः तत्तत्पदघटकक्रमवत् सर्ववर्णविषयः समूहालम्बनस्मृत्यात्मा प्रत्यवमर्शः श्रोतुरुपजायते, तदेवोच्यते पदज्ञानमिति।

अथ पूर्वोपदर्शितानुभावकत्वशक्तिरूपार्थसंबन्धवत्तया व्युत्पत्तिकालावगतपदज्ञानेनैकसंबन्धिज्ञानविधया पदार्थेषु स्मर्यमाणेषु पदैः पदार्था अनुभाव्यन्ते। तदिदं पदार्थाभिधानं नाम। अभिहिताश्च ते पदार्था आकाङ्क्षायोग्यतादिज्ञानसचिवा एकवाक्यताज्ञानसंकृताश्च संसृष्टं वाक्यार्थमवबोधयन्तीति।

## (ख) अभिहितान्वयवादान्विताभिधानवादयोर्भेदः

सोऽयमभिहितैः पदार्थैरन्वयो बुध्यत इत्याशयेनाभिहितान्वयवाद इत्यभिधीयते। अन्विताभिधानवादिनां मते तु पदार्थसंसर्गानुभावकत्वं पदेषु सम्बन्धः, तन्मूलश्च पदार्थस्मृतिद्वारा पदैरन्वितस्य वाक्यार्थस्य बोध इति विशेषः।

---

१ पू० मी० १।१।५। 
२. पू० मी० अधि० १।३।१०।
३. पू० मी० अ० १।१।३।
४. पू० मी० अ० १।१।८।

## ७. शब्दार्थयोर्विजातीयसम्बन्धत्वनिरासः

अथ शब्दश्रवणसमनन्तरजायमानविशिष्टार्थप्रत्ययस्यान्यथानुपपत्त्यापि कल्प्यमानः शब्दार्थसम्बन्धोऽनुभावकत्वशक्तिरूप एवेति कोऽयमभिनिवेशः ? क्लृप्तसम्बन्धविलक्षण. कोऽपि विजातीय एव कल्प्यते वैशिष्ट्यवत् । अथवाऽनुभावकत्वं सम्बन्धं मन्यमानैरपि पदार्थस्मृतिद्वारैव तदुपगम्यते । अत पदार्थस्मृतिजननानुकूल-शक्तेरेव सम्बन्धत्वकल्पना ज्यायसी । एवञ्च 'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते'[1] । इति संगच्छत इति चेत्, अत्रोच्यते—शब्दार्थयोर्विजातीय· सम्बन्ध इत्याद्यस्तावत् कल्पो नोद्भवति । शब्दाना ह्यर्थानुभवजननयोग्यता व्युत्पत्ति-दशायामादौ क्लृप्ता । कारणानाञ्च कार्योत्पादानुकूला शक्ति सार्वत्रिकी । तस्या एव लाघवेन सम्बन्धत्वमात्रकल्पने संभवति, ता परित्यज्य विजातीय. सम्बन्ध , तस्य च स्मृतिप्रयोजकमूलसम्बन्धतेति द्वयकल्पनं गौरवान्न हृदयमावर्जयति । पदानामर्थ-स्मरणानुकूलशक्तिसम्बन्धत्वस्वीकारभूते द्वितीयस्मिन् कल्पे गौरवपरिहारेऽपि स्मृति शक्तत्वान्यसंयोगादिसम्बन्धान्तरसव्यपेक्षाया एव स्मारकताया हस्तिहस्तिपकादौ दर्शनात् स्मारकत्वशक्तेरेव स्मृतिप्रयोजकमूलसम्बन्धत्वं कल्प्यमानं नैव विचारसहं स्यात् । 'पदमभ्यधिकाभावात्' इति वार्त्तिकमपि न पदानामनुभावकत्वशक्ति सम्बन्धं परिसञ्चष्टे । तथा सति हि शब्दमात्रप्रामाण्यभङ्गः प्रसज्येत । अत. 'पदमभ्यधिका-भावात्' पदार्थज्ञानेऽज्ञातस्याधिकांशस्याभावात् स्मारकान्न विशिष्यते = स्मारक-सममेव भवतीति व्याख्येयमिदं वार्त्तिकम् । संसर्गविनिर्मुक्तं पदार्थस्वरूपमात्रं सङ्गतिग्रहणकाले सर्वैर्ज्ञातमेवेति तद्विषयं शब्दप्रमाणजनितं च ज्ञानं न स्मृति, नाप्यनुभवः, किन्तु स्मृतिसममेव तदुपगन्तव्यमिति तात्पर्यार्थः ।

शब्दानामर्थविशेषप्रत्यायनागुण शक्तिविशेषोऽस्तीति नात्राधिकं वक्तव्यम् । स्वीकारतिरस्काराद्यर्थबोधिका शक्तिः 'हा हा हूं हूं' इत्येवंजातीयकेषु शब्दविशेषेषु लोके लक्ष्यते इत्यत्र नास्ति केषाञ्चिद् विप्रतिपत्तिलेशः । इत्थं तिरश्चा वाशितेष्वपि । किञ्च, यावदशब्दरूपा अपि हस्तावर्जनविक्षेपणादयश्चेष्टा यथायथमाकारणानिरा-कारणाद्यर्थविशेषद्योतकाः सन्ति काममत्रोहनीयाः । तथैव सर्वेषां मूलभाषा-शब्दानामर्थप्रतीतिप्रयोजनाः सहजाः शक्तिविशेषाः समाहितचेतोभि. सूक्ष्मेक्षिकया समुन्नेतव्याः । तस्मान्नित्ययो· शब्दार्थयोरर्थानुभाव्यानुभावकत्वशक्त्यात्मा नित्य एव सम्बन्धो भाविक इति सिद्धम् ।

> वाच्यवाचकयोस्तावत् सम्बन्धो नित्य एव हि ।
> मीमासामतमार्गेण माननीयो मनीषिणाम् ॥

---

१. श्लो० वा० श० प० १०७ तम श्लो० १ पृ० १६७ ।

## ८. अथ बौद्धमतम्

### ( क ) शब्दस्य बौद्धमते विचारः

प्रमाणत्वाभाव. शब्दोऽयमननुमानस्वभाव.। प्रमाणत्वे हि तस्यानुमानेऽन्तर्भावप्रयास. सफलो भवेत्। न चास्यैतदस्ति। तथा हि—शब्दज्ञानं बाह्यार्थाविसवादेन प्रमाणमेष्टव्यम्। अविसवादकत्वं च सम्बन्धमन्तरा न सम्भवति। न च शब्दानां बाह्यार्थेन सह कश्चित् सम्बन्धः !

### [ अ ] तादात्म्यस्य सम्बन्धत्वखण्डनम्—

शब्दार्थयो सम्बन्धो भवन् तादात्म्यं तदुत्पत्तिर्वा भवेत्। तत्र शब्दार्थयोरतितरा भेदेन प्रतिभासनात् तादात्म्यं खपुष्पायमाणं स्यात्। तादात्म्य नामाभेद.। नितरा भिन्नप्रतिभासेऽप्येकत्वेऽङ्गीक्रियमाणे गवाश्वयोरप्येकत्वप्रसङ्ग.। मुखे शब्द: प्रतीयते, भूमावर्थ इति भिन्नदेशतया प्रतीयमानयोस्तयो. कथङ्कारं तादात्म्यं सम्पद्येत'? तयोस्तादात्म्ये क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणप्रसङ्ग.।

### [ आ ] उत्पत्तेः सम्बन्धत्वनिरसनम्

अन्वयव्यतिरेकाभावात् तदुत्पत्तिरपि सम्बन्धो वक्तुं न पार्यते। तथा हि शब्दव्यापारमन्तरेण स्वकारणादेव चक्रचीवरकुलालदण्डादे. समुत्पद्यमानो घटादिरर्थो दृश्यते। शब्दोऽपि बाह्यार्थ विनैव पुरुषेच्छामात्रेण ताल्वादिव्यापारादेवोत्पद्यते। अन्यथा 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इत्यादिशब्दानामर्थाभावेऽप्युत्पत्तिप्रतीतिः। अतोऽर्थासंस्पर्शिन. शब्दा न बाह्यार्थे प्रतीतिं जनयितुमलम्, तत्कथं प्रामाण्यभाजो भवेयु·? ते हि विकल्पमात्राधीनजन्मान. स्वमहिम्ना तिरस्कृतबाह्यार्थान् प्रत्ययानुत्पादयन्ति, यथा 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इति। तथा चोक्तम्—

> नान्तरीयकताभावाच्छब्दाना वस्तुभिः सह।
> नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः॥[1]

वस्तुभिः = स्वलक्षणैः सह शब्दनान्तरीयकताया अविनाभावस्याभावात् तेभ्यः शब्देभ्यो नार्थसिद्धिः = न बाह्यवस्तुनिश्चय., यस्मात्ते वक्त्रभिप्रायसूचकाः[2]।

> वचसां प्रतिबन्धो वा को बाह्येष्वपि वस्तुषु।
> प्रतिपादयतां तानि येनैषा स्यात् प्रमाणता॥
> भिन्नाक्षग्रहणादिभ्यो नैकात्म्यं न यदुद्भवः।
> व्यभिचारान्न चान्यस्य युज्यते व्यभिचारिता॥[3]

---

१. प्र० वा० श० वि० क० ३।२१३–१६। २. प्रमाणवा० स्ववृ० टी० ३।२१२।

३. तत्त्व० सं० का० १५१२–१५१३।

'न हि वाच्यै वस्तुभि सह कश्चित् तादात्म्यलक्षण:, तदुत्पत्तिलक्षणो वा प्रतिबन्धो वचसामस्ति, येन तानि वस्तूनि प्रतिपादयता तेषा वचसा प्रामाण्यं स्यात्। तत्र तावद् न तादात्म्यलक्षणप्रतिबन्धोऽस्ति भिन्नाक्षग्रहणादिभ्यो हेतुभ्य·। तत्र भिन्नाक्षग्रहणम् = भिन्नेन्द्रियेण ग्रहणम्। तथाहि—

श्रोत्रेन्द्रियेण शब्दो गृह्यते, अर्थस्तु चक्षुरादिना। आदिशब्देन कालदेश-प्रतिभासकारणभेदो गृह्यते'।[1]

अथ पुरुषदोषाणामेव महिमा न शब्दानामित्युच्यते, तदपि न, दोषवतोऽपि मूकादे पुरुषस्यानुच्चारितशब्दस्य ईदृशासत्यप्रत्ययोत्पादनसामर्थ्यासंभवात्। असत्यपि च पुरुषहृदयकालुष्ये आप्तप्रयुक्तानि अङ्गुल्यादिवाक्यानि बाह्यार्थ-शून्यान् मिथ्याप्रत्ययानुत्पादयन्त्येव। अत. शब्दानामेवैष स्वभावो न वक्तृदोषाणाम्।

अथाप्ता नेदृंशि वाक्यानि प्रयुञ्जन्ते, प्रयुञ्जाना वा नाप्ताः स्युरित्यप्य सङ्गतम्; एवमपि हि वक्तृदोषाणामयथार्थज्ञानोदयकारणत्वासिद्धि, व्यतिरेका-सिद्धेः। यदि हि वक्तृदोषाभावेऽमून्यपि वाक्यानि प्रयुज्येरन्, चायथार्थान् प्रत्ययान् कुर्यु·, तदाऽन्वयव्यतिरेकाभ्या वक्तृदोषजत्वं शाब्दज्ञानस्य स्यात्। आप्तैस्तु तेषामप्रयोगे 'किं शब्दाभावात् अयथार्थज्ञानानुत्पत्ति, आहोस्वित्! दोषाभावात्' इति सन्दिग्धो व्यतिरेक, शब्दे तु निश्चित·—सत्स्वपि दोषेषु शब्दानुच्चारणे मिथ्याज्ञानानुत्पत्ते.। न चाप्तत्वम् ईदृग्वाक्यप्रयोक्तृत्वेन विरुध्यते, तथाविधशब्दोच्चारणे सत्यपि आशयदोषाभावतोऽनाप्तत्वायोगात्। तथा हि—आप्तोऽपि कस्मैचिदुपदिशति 'न त्वयाऽननुभूतार्थवाक्यं प्रयोक्तव्यम्—यथा 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इति। अत शब्दस्यैवैष महिमा, न वक्तृदोषाणाम्।

किञ्च, बाधकप्रत्ययोत्पत्तावपि शब्दो मिथ्याज्ञानं जनयत्येव नेन्द्रियवदुदास्ते। अतोऽर्थाऽसंस्पर्शिन. शब्दा विकल्पमात्राधीनजन्मानः सिद्धाः। तदुक्तम्—

> विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।
> तेषामन्योन्यसम्बन्धो नार्थान् शब्दाः स्पृशन्त्यमी॥[2]

## [इ] वाच्यवाचकभावलक्षणसम्बन्धस्य खण्डनम्

अथ तादात्म्यतदुपत्तिभ्यामन्य एव वाच्यवाचकभावलक्षणः स्वाभाविकः प्रतिबन्धोऽस्ति। एवन्तर्ह्यसंकेतविदोऽपि प्रमातु शब्दादुच्चरितान्नियतार्थप्रतीतिः प्राप्ता, योग्यतामात्रेणैव प्रदीपात् घटादिप्रतीतिवत्। तथा हि—अभिनवनारिकेल-

---

१. तत्त्वस० पृ० ४४१। २ स्या० म० पृ० १४५।

द्वीपायात. प्रमाताऽग्निशब्दं श्रुत्वाऽप्यग्निशब्दान्न कञ्चिदर्थं प्रत्येति। अथ तास्तान् संकेतानपेक्ष्य तदर्थप्रत्यायनयोग्य एवायं शब्दो जात इत्युच्यते, तत्, न, न ह्येवमस्य प्रामाण्यमवतिष्ठते, सर्वत्र संकेतस्य योग्यत्वात्। अतो न ज्ञायते किं विवक्षितमर्थमाहान्यो वेति। अस्तु वा कश्चिदन्य एव सम्बन्धः। तथा च सोऽपि केन सम्बन्धेन ताभ्यां सम्बद्ध इति प्रष्टव्यम्। अन्येन चतुर्थेन सम्बन्धेनेति चेच्चतुर्थोऽपि केन सम्बद्धः, पञ्चमेन केनचिच्चेत्, सोऽपि केनेति अनवस्थाया-मन्त्यासिद्धौ पूर्वेषामसिद्धिः स्यात्। अर्थासम्बद्ध एव शब्दार्थयोः सम्बन्ध इति चेत्, योऽसम्बद्धः, स कथं सम्बन्धो भवति घटस्येव पटः। ननु संबन्धस्य ईदृश एव स्वभावो येन सम्बन्धान्तरनिरपेक्ष एव परं सम्बध्नातीति चेत्, उच्यते—प्रमाणसिद्धे हि वस्तुनि स्वभावेनोत्तरमभिधीयते। यथाऽग्नेरेवायमीदृशः स्वभावो दाहकत्वं नाम नान्यस्याकाशादेः। सम्बन्धसिद्धौ तु प्रमाणं किञ्चिन्निरूपयन्तो न पश्यामः।

## [ई] स्वभावतः शब्दानां नियतार्थव्यभिचारित्वखण्डनम्

अथ शब्दशक्तिस्वाभाव्यादेव शब्दाना नियतार्थाव्यभिचारित्वम्। तथा हि यदि घट इत्ययं शब्दः स्वभावादेव कम्बुग्रीवाकारं जलधारणसमर्थं पदार्थमभि-दधाति, तत्कथं संकेतान्तरमपेक्ष्य पुरुषेच्छया तुरगादिकमभिदध्यात्? न हि शालिबीजं स्वहेतोरङ्कुरजननस्वभावमुत्पन्नं संकेतान्तरमपेक्ष्य पशुं समुत्पादयितुं समर्थं स्यात्। नाप्याप्तप्रणीतशब्दाना प्रामाण्यमभिधातुमुचितम्। तथाहि—आप्तत्वं क्षीणदोषत्व-मुच्यते। क्षीणदोषता च परचित्तवृत्तिः काचिदभिधीयते। परचित्तवृत्तीनाञ्च दुर्लक्ष्यत्वात् कायवाग्व्यापारस्य कार्यलिङ्गस्य त्वन्यथापि सन्दर्शनात्। सरागा अपि वीतरागा इव चेष्टन्त इति न्यायात् कथमाप्तत्वं विनिश्चीयतामिति। सम्बन्ध-दूषणेन च वैदिकशब्दानां प्रामाण्यं निरस्तमिति पृथङ्नोक्तम्। कथं तर्हि सर्वोऽयं निःसन्दिग्धो लौकिको व्यवहार इति चेत्, तथा तथासंकेतेन विवक्षावशान्न काचित् क्षतिः। यथा चोक्तम्—वक्तुरभिप्रायं सूचयेयुः शब्दा इति बौद्धाः।

## ९. बौद्धमतसमालोचनम्

### (क) सम्बद्धस्यैव अर्थस्य प्रत्यायकत्वम्

अथ किञ्चित् पर्यालोच्यते—वस्तुनि सम्बन्धासम्भवप्रतिपादन चित्ररमण्या-मभिलाषोत्पादनमेव बौद्धानां भवेत्। न हि वस्तुनि शब्दस्य सम्बन्धाभावः सम्भावयितुमपि शक्यते। तथाहि—शब्दोऽर्थेन सम्बद्ध एव तं प्रकाशयति प्रतिनिय-तार्थप्रत्ययहेतुत्वात्, चक्षुर्वत्। शाब्दप्रत्ययो वा सम्बद्धाभ्या शब्दार्थाभ्या जन्यते प्रतिनियतप्रत्ययत्वात्, दण्डीत्यादिप्रत्ययवत्। तादात्म्यतदुत्पत्तिलक्षणसम्बन्धा-

भावेऽपि योग्यतालक्षणसम्बन्धस्यायाससहस्रेणापि निराकर्तुं दुश्शकत्वात्। चक्षू-रूपयोस्तादात्म्यतदुत्पत्त्यभावेऽपि तद्दर्शनात्। न खलु चक्षुषो घटादिरूपेण सह तादात्म्यं तदुत्पत्तिः संयोगो वा सौगतैरभ्युपगम्यते, प्रतीतिविरोधानुषङ्गात्, अप्राप्यकारित्वक्षतिप्रसङ्गाच्च। नापि चक्षुषतादात्म्यतदुत्पत्त्यभावे रूपप्रकाशन-योग्यतास्वभावसम्बन्धोप्यसंभवः, श्रोत्रादिवत् तस्यापि तदप्रकाशकत्वप्रसङ्गात्।

योग्यतातः शब्दस्यार्थवाचकत्वेऽर्थस्यापि शब्दवाचकत्वन्तु भावाना प्रतिनियतशक्तिकत्वात् परिहरणीयम्। योग्यता हि शब्दार्थयोः प्रतिपाद्यप्रतिपादक-शक्तिः, ज्ञानज्ञेययोर्ज्ञाप्यज्ञापकशक्तिवत्। संकेतसचिवयोग्यतावशात् शब्दस्यार्थ-वाचकत्वस्वीकाराद् न यस्मात् कस्माच्चित् शब्दात् यस्य कस्याप्यर्थस्य प्रतीति-रापादयितुं शक्येत। संकेतो हि 'इदमस्य वाच्यम्, इदं वाचकम्' इत्येवंविधो वाच्यवाचकयोर्विनियोगः। स यस्य पुरुषस्यास्ति, तस्यैव शब्दः स्वार्थं प्रतिपादयति, नान्यस्य। अन्यथा धूमादिसाधनमप्यस्याग्न्यादिसाध्यं गमयेदविशेषात्। अविनाभावो हि साधनस्य साध्यगमकत्वेऽङ्गम्। स च सर्वदा सर्वं प्रत्यस्यास्ति। येन पुरुषेणैव साध्यसाधनयोरविनाभावो गृहीत, तं प्रत्येव साधनं साध्यस्य गमकमित्यभ्युपगमे येनैव शब्दार्थयो. संकेतो गृहीत, तं प्रत्येव शब्दोऽर्थस्य वाचक इत्यभ्युपगन्तव्यमविशेषात्।

### ( ख ) स्वाभाविकसङ्केतस्य सम्बद्धत्वम्

ननु संकेतः पुरुषेच्छाकृतः, न हि तदिच्छया वस्तुव्यवस्था युक्ता, अतिप्रसङ्गात्। अतोऽर्थोऽपि वाचकः, शब्दस्तु वाच्यः कथन्न स्यात्, तदिच्छाया निरङ्कुशत्वात्। इत्यप्यसमीचीनम्, धूमाग्निवत् तत्संकेतस्य सहजयोग्यतानिबन्धनत्वात्। यथैव हि धूमाग्न्योर्नैसर्गिक एवाविनाभावः सम्बन्धः, तद्व्युत्पत्तये तु भूयोदर्शनादिनिमित्त-माश्रीयते, तथा शब्दार्थयोः स्वाभाविक एव प्रतिपाद्यप्रतिपादकशक्त्यात्मा सम्बन्धः। तज्ज्ञानाय तु संकेतः समाश्रीयते। सासिद्धिकार्थशक्तिव्यतिक्रमे च चक्षूरूपादीनामपि प्रकाश्यप्रकाशकशक्तेर्व्यतिक्रमः स्यात्। एवञ्च चक्षुःप्रदीपादीना प्रकाश्यत्वं घटादीना तु प्रकाशकत्वं स्यात्।

### ( ग ) सकलार्थशक्तस्यापि सकेतान्नियतार्थप्रतिपादकत्वम्

अथ यदि शब्दस्यैकार्थप्रत्यायने स्वाभाविकी शक्तिः, तदा संकेतशतैरपि ततोऽर्थान्तरे धूमादनग्निप्रतीतिवत् प्रतीतिर्न स्यात्। अनेकार्थप्रत्यायने तथा शक्तिस्वीकारे तु युगपत् ततोऽनेकार्थप्रतीतिप्रसङ्गात् प्रतिनियतेऽर्थे प्रवृत्तिर्न स्यादित्यपि न समीक्षिताभिधानम्, सकलशब्दानां सकलार्थेषु प्रत्यायनशक्तिसंभवात्। कथमन्यथाऽनवगतसम्बन्धे शब्दे प्रयुक्ते सन्देहः स्यात्—

'कमर्थं प्रतिपादयितुमनेन शब्दः प्रयुक्तः' इति। न चैवं सकृत् सर्वार्थप्रतिपत्तिप्रसक्तेः प्रतिनियतेऽर्थे शब्दात् प्रवृत्तिर्न स्यादिति वाच्यम्, प्रतिनियतसंकेतवशात् शब्दाना प्रतिनियतार्थप्रतिपादकत्वस्योपपत्ते.। एकस्यापि हि शब्दस्य देशादिभेदेन प्रतिनियतः संकेतोऽनुभूयते। तथा हि—यवशब्द आर्यैर्दीर्घशूके पदार्थे प्रयुज्यते, ते हि यव-शब्दात् दीर्घशूकं पदार्थं प्रतिपद्यन्ते, म्लेच्छास्तु प्रियङ्गुम्। एवं 'त्रिवृत्' शब्दमृपय. स्तोत्रीयानवके प्रयुञ्जते, आर्यास्तु लताविशेषे। दृश्यते च सर्वत्र रूपप्रकाशने योग्यस्यापि चक्षुष. प्रत्यासन्नतिमिरवशादसन्निहिते दूरतिमिरवशाच्च सन्निहिते रूपे, विशिष्टाञ्जनादिवशात् अन्धकारान्तरितेऽपि ज्ञानजनकत्वम्, काचकामलादि-वशाच्च पीतरूपाभाववति शङ्खे पीतज्ञानजनकत्वम्। तस्माद् यथाऽनेकरूपप्रकाशन-योग्यस्यापि चक्षुषो दूरतिमिरादिप्रतिनियतसहकारिवशात् प्रतिनियतदूररूपादि-ज्ञानजनकत्वं तथाऽनेकार्थप्रत्यायनयोग्यस्यापि शब्दस्य प्रतिनियतसंकेतवशात् प्रतिनियतार्थप्रतिपादकत्वविरुद्धम्।

### ( घ ) शब्दस्य ज्ञापकताया सङ्केतापेक्षत्वम्

यदि चक्षुरादिवत् शब्दस्यार्थे योग्यतालक्षणसम्बन्धसंभवे चक्षुर्वदेव शब्दात् संकेतमनपेक्ष्यैवार्थप्रतीतिः स्यादित्युच्यते, तदपि न विचारसहम्; शब्दस्य ज्ञापकतया तत्सापेक्षस्यैवार्थप्रतीत्यङ्गतोपपत्तेः। यज्ज्ञापकं तद् ज्ञाप्ये धूमादिवत् प्रतिपन्नप्रतिबन्धमेव प्रतीति जनयति, शब्दश्च ज्ञापक इति। चक्षुरादीनां तु कारकत्वाद् युक्तं स्वार्थसम्बन्धग्रहणानपेक्षाणां तदुत्पादकत्वम्। स्वयं हि प्रतीयमान-मप्रतीतार्थप्रतीतिहेतुर्ज्ञापकमुच्यते। तद्रूपता च शब्दादेरेवास्ति, न चक्षुरादेः। अतः स एव प्रतिपन्नप्रतिबन्धं स्वार्थं गमयति। शक्तिस्तु स्वाभाविकी यथा रूपप्रकाशने चक्षुरादेः तथाऽर्थप्रकाशने शब्दस्य। तथा चोक्तम्—'वाच्यवाचक-लक्षणो हि शब्दार्थयोः प्रतिबन्धः। तथा हि वाच्यस्वभावा अर्थाः, वाचकस्वभावाश्च शब्दा इति तज्ज्ञप्तिवाद'। यदैवं कथन्न संकेतमन्तरेणैव ततस्तदवगतिः। उच्यते—तथाविधक्षयोपशमाभावात्। न हि रूपप्रकाशनस्वभावोऽपि दीपोऽसति चक्षुषि तत् प्रकाशयति, चक्षु.कल्पश्च क्षयोपशम। स च संकेततपश्चरणभावनादि जन्यः तथोपलब्धेः[१]।

### ( ङ ) शब्दस्यार्थस्य स्पर्शित्वम्

'अतोऽर्थासंस्पर्शिन· शब्दाः' इत्यप्यापातरमणीयम्; यत आप्तोपदिष्टस्य शब्दस्यार्थासंस्पर्शित्वप्रसाधने आप्तपुरुषोच्चारितात् 'नद्यास्तटे फलानि सन्ति' इति वाक्याद तिरस्कृतबाह्यार्थप्रत्ययप्रतीतेराप्तोक्तशब्दात् प्रवृत्तस्य तदर्थप्रतीतेः प्रत्यक्षबाधा स्यात्। अनाप्तोच्चारितस्य तथात्वे तु तस्यैवार्थासंस्पर्शित्वं युक्तम् नान्यस्य। अन्यथा

१. अनेकान्तजय० पृ० ३६।

काचादिदोषदुष्टचक्षुःप्रसूतप्रत्यक्षस्यार्थासंस्पर्शित्वोपलम्भाद् गुणवच्चक्षुःप्रभवप्रत्यक्ष-स्यापि अर्थासंस्पर्शित्वम्, तश्च मिथ्यात्वं स्यादिति भावः। उपर्युक्तशब्दद्वयातिरिक्त-शब्दस्तु नास्त्येव। 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इत्याप्तोच्चारिताद् विपर्ययज्ञानो-त्पत्तिप्रतीते. शब्दस्यैष तिरस्कृतबाह्यार्थप्रत्ययोत्पादकत्वरूपो महिमा न वक्तृदोषाणाम् इत्यपि न विचारकोटिमाटीकते, आप्तैस्तथाविधवाक्यस्याप्रयोगात्।

नन्वाप्तैरेवंविधानि वाक्यानि न प्रयुज्यन्ते, तथापि सन्दिग्धो व्यतिरेकः 'किं शब्दाभावादयथार्थज्ञानानुत्पत्ति., वक्तृदोषाभावाद् वा' इदमपि न विचारसहम्, अनुच्चारितशब्दस्यापि दोषवतः पुरुषस्य हस्तसंज्ञादिना प्रतारकत्वप्रतीते। न च हस्तसंज्ञादिना शब्दानुमानं ततो वितथप्रत्यय इत्यभिधातव्यम्, तथाप्रतीत्य-भावात्। नद्यादिवाक्यादुत्पन्ने च क्वचिद् विज्ञाने तरङ्गिणीतीरमनुसरन् अनासादितफलः पुरुषः पुरुषमेवाधिक्षिपति—'दुरात्मनाऽनेन विप्रलब्धोऽस्मि' इति न शब्दम्। ननु पुरुषस्य गुणवतो दोषवतो वा शब्दोच्चारणमात्र एव व्यापारः, अर्थप्रतिपत्तिस्तु शब्दनिबन्धनैवेति अर्थप्रतीतिविपर्यये शब्दस्यैव व्यापारः न वक्तृदोषाणामिति नैव वक्तव्यम्, आप्तोच्चारितात् 'नद्यास्तीरे फलानि सन्ति' इति वाक्यात् सत्यप्रत्ययोदयेऽप्येवं शब्दस्यैव व्यापारः स्यात्, तद्वक्तुस्तदु-च्चारणमात्रे चरितार्थत्वात्। अतः कथमेकान्ततः शब्दस्यार्थासंस्पर्शित्वमेव स्वरूपं स्यात्?

अथ च विपर्ययज्ञानोत्पत्तेर्याबद्भिः सह कार्यकारणभावभावित्वमवगम्यते, तावतां तत्र व्यापार.। सा चात्र शब्दोच्चारणे सत्यपि अनाप्तयोगिता विना न दृष्टेति शब्दवत्तदाशयस्यापि तत्र व्यापार.।

किञ्च, चक्षुरादिवदर्थप्रकाशकत्वमात्रं शब्दस्य स्वरूपं न पुनर्यथार्थप्रकाश-कत्वमयथार्थप्रकाशकत्वं वा, तस्य गुणदोषनिबन्धनत्वात्। सति हि नैर्मल्यादिगुणे चक्षुर्यथावद् वस्तु प्रकाशयति, काचादिदोषे तु सति न यथावत्। एवं शब्दोऽपि वक्तृगुणदोषापेक्षः सत्येतररूपं वस्तु प्रकाशयति। अत एवाङ्गुलिशिखराधिकरण-करेणुशतवचसि बाध्यमानेऽपि पुनः पुनरुच्चार्यमाणे भवति भ्रान्ति, प्रकाशकत्वस्य शब्दस्वरूपस्य बाधकशतोपनिपातेऽप्यनपायात्।

बाधकप्रत्ययप्रवृत्तावपीन्द्रियस्य चन्द्रद्वयविषयमिथ्याज्ञानजनकत्वप्रतीतेः 'नेन्द्रियवदुदास्ते' इति न समीचीनम्। न च बाधकप्रत्ययप्रवृत्तौ इन्द्रियं चन्द्रविषयक विज्ञानं नोत्पादयतीति वाच्यम्, प्रतीतिविरोधात्।

## १०. शब्दस्य प्रमाणत्वनिष्कर्षः

एवञ्च शब्दः प्रमाणम्, अर्थोपलब्धिनिमित्तत्वात्, प्रत्यक्षादिवत्, स्वपरपक्ष-साधनदूषणसमर्थत्वाच्च, सम्यग् ज्ञानवत्, तथा सकलतत्त्वविप्रतिपत्तिनिवृत्ति-

निमित्तत्वात्, योगिज्ञानवत्। न खलु देशकालस्वभावविप्रकृष्टाखिलार्थानां मेरुपर्वतरामरावणादिपरमाण्वादीना शब्दादन्यतो विप्रत्तिपत्तिनिवृत्ति· संभवति, तदुपायान्तरासंभवात्। लिङ्गं विप्रकृष्टार्थप्रतिपत्तिसाधनं सम्भवतीति चेत्, न, देशकालस्वभावविप्रकृष्टार्थप्रतिबन्धलिङ्गस्य कस्यचिदप्यप्रतिपत्ते.। ततो योग्यता-लक्षणसम्बन्धात् शब्दस्यैव विप्रकृष्टार्थे प्रामाण्यमभ्युपगन्तव्यमिति आर्हता.।

इति तृतीयोऽध्याय.।

---

# अथ चतुर्थोऽध्यायः

## आकाङ्क्षादिविचारः

यद्यपि तृतीयाध्याये प्रसङ्गात् विस्तरेणाकाङ्क्षा निरूपिता नैयायिकनयेन, तथापि मतान्तरमनुसृत्यात्रापि किञ्चिद् विचार्यते। विशेषतो योग्यतादिविचाराया यमध्याय आरभ्यते।

### १. आकाङ्क्षास्वरूपम्

आकाङ्क्षात्वञ्च वाक्यसमयग्राहिकात्वम्[1]। वाक्यस्य यः समयः = संकेतः, तद्विषयकस्य बोधस्य जनिकात्वमित्यर्थः। यत्किञ्चिद्विषयकेच्छापरपर्यायरूपाया आकाङ्क्षायाः वाक्यसमयग्राहिकात्व न सम्भवतीति तु न शङ्क्यम्, एकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वयार्थः कः' इत्येवंरूपाया आकाङ्क्षायाः स्वीकारात्। समन्वयश्च—घटपटादिपदार्थज्ञानानन्तरं तदर्थनिरूपिततात्पर्यविषयीभूतसम्बन्धेन सम्बन्धरूपयोग्यतावतोऽर्थस्य यज्ज्ञानं तादृशज्ञानविषयिणी या इच्छा ज्ञानविषयविषयिणीति यावत्। साऽऽकाङ्क्षेत्यर्थः। 'एकपदार्थज्ञानानन्तरम्' इत्यस्यैकपदार्थमात्रज्ञानानन्तरमित्यर्थः। तेन यत्र 'घटमानय' इत्यादौ द्वयोः पदार्थयोर्ज्ञानं जातं तत्रोक्ताया आकाङ्क्षाया अभावाद् बोधो न स्यादित्यापादयितुं न शक्यते। अस्ति च तत्राप्येकपदार्थमात्रज्ञाने सेति न कापि क्षतिरित्यर्थः।

### २. आकाङ्क्षाया आत्मनिष्ठत्वम्

न्यायनये साऽऽकाङ्क्षा आत्मनिष्ठैव, इच्छारूपायास्तस्या आत्मनिष्ठत्वस्यौचित्यात्। तथा चोक्तम्—

> बुद्ध्यादिषट्कं संख्यादि पञ्चकं भावना तथा।
> धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश[2]॥

### . अर्थाकाङ्क्षात्वोपपादनम्

वेदान्तिमते तु अन्तःकरणधर्मत्वं तस्याः[3]। नन्वाकाङ्क्षाया आत्मधर्मत्वेऽन्तःकरणधर्मत्वे वा 'अयमर्थोऽर्थान्तरमाकाङ्क्षति' इति व्यवहारो नोपपद्येतेति चेत्, न समवायसम्बन्धेनात्मनि वर्तमानाया आकाङ्क्षाया अर्थे आरोपात्। विषयता-

---

१. द्र० ल० म० पृ० ४६५। २. भु० प्र० ख० का० ३२। ३ रत्नप्रभा पृ० ४६६।

सम्बन्धश्चारोपप्रयोजक.। नन्वाकाङ्क्षाया विषयतासम्बन्धेनार्थे सत्त्वादारोपानुपयोग इति चेत्, न, आधारत्वनियामकत्वाभावात् सम्बन्धत्वस्यैवाभावात्, 'सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो विशिष्टबुद्धिनियामकश्च' इत्यभियुक्तोक्तेर्वृत्तिनियामकत्वस्यैव सम्बन्धत्वस्यौचित्यात्, विषयतासम्बन्धेनायमिच्छावान्, आकाङ्क्षावान् वेति व्यवहारादर्शनात्।

## ( क ) अभिधानापर्यवसानपदार्थः

अर्थे आकाङ्क्षाया आरोपणमेव 'अभिधानापर्यवसानम्' उच्यते[1]। करणव्युत्पत्त्या अभिधानपदं शब्दोच्चारणार्थम्। तस्यापर्य्यवसानम् = फलानुत्पादः। एवञ्च तदुच्चारणजन्यतादृशशाब्दबोधे तदुच्चारणजन्यतादृशशाब्दधीप्रागभाव आकाङ्क्षेति फलितम्। न चाभिधानपदं भावव्युत्पत्त्या शाब्दबोधपरम्, तस्यापर्यवसानम् = अभाव.। तथा च तादृशशाब्दबोधे तादृशशाब्दबोधाभाव आकाङ्क्षेति फलतीति वाच्यम्, 'घट· कर्मत्वम्' इत्यादावतिव्याप्तेः। अतोऽभिधानापर्यवसानशब्दस्य पारिभाषिकार्थोऽत्र ग्रहीतव्य·। स चेत्थम्—यत्पदनिष्ठयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावः, तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधे अभिधानापर्यवसानमिति फलितोऽर्थ.। प्रयुक्तत्वञ्चात्र—'कारणाभावात् कार्याभाव.' इति प्रतीतिसाक्षिक: स्वरूपसम्बन्धविशेषः। तत्प्रतियोगिजन्यप्रतियोगिकत्वं वा तत्प्रयुक्तत्वम्। भवति चाव्यवहितपूर्ववर्तित्वरूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारपदस्य व्यतिरेकप्रयुक्तः 'घटवत्कर्मत्वम्' इति भेदान्वयबुद्ध्यभाव इति तादृशान्वयबोधे घटपदस्यानुस्वारपदवत्त्वमाकाङ्क्षा। एवं विनिगमनाविरहादव्यवहितोत्तरवर्तितारूपसमभिव्याहारसम्बन्धेनानुस्वारपदनिष्ठस्य घटपदस्य व्यतिरेकप्रयुक्तोऽपि 'घटवत्कर्मत्वम्' इति भेदान्वयबुद्ध्यभाव इत्यनुस्वारपदस्या घटपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा।

## ( ख )

नन्वेवम् 'जलं घटः' इत्यत्र तादृशबोधापत्ति·, 'यादृशसमभिव्याहारसम्बन्धेन यत्पदनिष्ठस्य यत्पदस्य व्यतिरेकप्रयुक्तो यादृशान्वयबुद्ध्यभावः, तादृशसमभिव्याहारसम्बन्धेन तत्पदस्य तत्पदवत्त्वमाकाङ्क्षा इति नैयायिकैराकाङ्क्षायाः पदधर्मत्वस्य स्वीकारात्। विस्तरस्तु तत्त्वचिन्तामणौ द्रष्टव्यः।

अभिधानम् = उपस्थिति·, अपर्यवसानम् = अन्वयबोधजनकत्वेनेच्छाऽभावाभावः, इच्छेति यावत्, अभावाभावस्य प्रतियोगिरूपत्वात्। एवञ्चाकाङ्क्षाया अभावरूपत्वशङ्का शान्तिमिता।

---

१. ल० म० पृ० ४६५।

### ( ग ) पदे आकाङ्क्षारोपाभावः

केचित्तु अभिधानापर्यवसानमित्यस्य बोधजनकत्वस्यासमाप्तिरित्यर्थ इत्याहुः।

पदे आकाङ्क्षाया आरोपो न भवति, मानाभावात्; अर्थबोधोत्तरमेव जिज्ञासोदयाच्च। 'इदं पदं साकाङ्क्षम्' इति व्यवहारस्तु साकाङ्क्षार्थबोधकपरतया नेयः। साकाङ्क्षपदस्य साकाङ्क्षार्थबोधके लक्षणेति भावः।

## ४. आकाङ्क्षायाः शब्दधर्मत्वे भाष्यविरोधो निष्कर्षश्च

आकाङ्क्षायाः शब्दधर्मत्वं भाष्यविरुद्धम्। तथा हि—"समर्थः पदविधिः[1]" इति सूत्रे भाष्ये—'परस्परव्यपेक्षां सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा। न ब्रूमः शब्दयोरिति, किन्तर्हि, अर्थयोः? इह 'राज्ञः पुरुषः' इत्युक्ते राजा पुरुषमपेक्षते—'ममायम्' इति, पुरुषोऽपि राजानमपेक्षते 'अहमस्य' इति"[2]।

अस्मादेव भाष्यविरोधाद् यत्पदस्य यत्पदाभावप्रयुक्तशाब्दबोधाजनकत्वं तत्पदे स्वाव्यवहितपूर्ववृत्तित्व, स्वाव्यवहितोत्तरवृत्तित्वान्यतरसम्बन्धेन तत्पदवत्त्वमाकाङ्क्षा। 'तज्ज्ञानञ्च शाब्दबोधे कारणम्' इति वदन्तो नैयायिकाः प्रत्याख्याताः।

वस्तुतस्तु—अव्यवहितत्वसम्बन्धेन तत्पदवत्त्वरूपाकाङ्क्षाया आसत्तावन्तर्भावेण प्रकृतिप्रत्यययोरव्यवहितोत्तरत्वमेवाकाङ्क्षा। आकाङ्क्षायाः पदधर्मत्वे मौनिनाऽनुच्चारितत्वेन पदाभावेनाकाङ्क्षाया अभावाद् मौनिशब्दाद् बोधो न स्यात्, अर्थनिष्ठत्वे तु पदज्ञानजन्योपस्थितिविषयीभूतार्थस्य सत्त्वेन तत्राकाङ्क्षायाः सुवचत्वम्। न च पदाभावे तज्ज्ञानस्याप्यसम्भवेन तज्जन्योपस्थितिविषयीभूतार्थस्याप्यभावेन तत्रापि कथमाकाङ्क्षायाः सम्भव इति वाच्यम्, लेखरूपसंकेतज्ञानप्रयोज्यपदज्ञानस्य सत्त्वेन ततोऽर्थोपस्थितिसम्भवात्।

## ५. आकाङ्क्षोत्थापकत्वविवेचनम्

आकाङ्क्षोत्थापकञ्च—एकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानम्[3]। अत उक्तज्ञानविषये तादृशान्वयबोधाजनकत्वेऽपि 'आकाङ्क्षा' इति व्यवहारः। समन्वयश्च—'घटम्' इत्येतावन्मात्रेण घटपदार्थे ज्ञाते, अपरपदार्थस्य = आनयपदार्थस्य यो व्यतिरेकः = तद्विषयकज्ञानाभावः, तत्प्रयुक्तस्यान्वयबोधाजनकत्वस्य = शाब्दबोधजनकत्वाभावस्य घटपदार्थे विद्यमानस्य ज्ञानमाकाङ्क्षोत्थापकमित्यत आकाङ्क्षाजनकीभूतज्ञानविषये घटपदार्थनिष्ठान्वयबोधजनकत्वाभावरूपेऽपि आकाङ्क्षाव्यवहार इति तात्पर्यम्।

---

१. पा० सू० २।१।१। २. म० भा० २।१।१।

३. ल० म० पृ० ४६५ प० १३–१५।

## ६. आकाङ्क्षाज्ञानस्यैकदैव बोधहेतुत्वम्

एकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तान्वयबोधाजनकत्वमूलकाकाङ्क्षाज्ञानस्य शाब्दबोधहेतुत्वादेकवारं जाते शाब्दबोधे तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः[1]। अत एव 'अजनितान्वयबोधजनकत्वमाकाङ्क्षात्वम्' इति केचित् कोविदा वदन्ति।

## ७. आकाङ्क्षाज्ञाने प्रामाण्यनिश्चयाभावस्यानिवेशः

ननु आकाङ्क्षाज्ञानस्य शाब्दबोधजनकत्वेऽप्रामाण्यनिश्चयाभावस्य विशेषणत्वं कल्पनीयम्। अन्यथा सत्यप्याकाङ्क्षाज्ञाने 'इदं ज्ञानमप्रमा' इति निश्चयसत्त्वे शाब्दबोधो नोद्भवेत्। तदपेक्षयाऽऽकाङ्क्षाज्ञानाभावस्य प्रतिबन्धकत्वस्य क्लृप्ततयाऽप्रामाण्यज्ञानाभावविशिष्टाकाङ्क्षाऽभावनिश्चयाभावस्य कारणत्वे लाघवमिति चेत्, न, आकाङ्क्षाज्ञानस्य हेतुत्वे 'तदभाववति तत्प्रकारकम्' इत्येकविधाप्रामाण्यग्रहाभावनिवेशेन लाघवात्। आकाङ्क्षाज्ञानाभावनिश्चयस्य प्रतिबन्धकत्वे तु 'तदभाववति तदभावप्रकारकम्, तद्वति तदभावप्रकारकम्' इति द्विविधाप्रामाण्यग्रहाभावनिवेशेन, 'प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववति अभावे प्रतियोगितासम्बन्धेन तत्प्रकारकम्' इत्यप्रामाण्यग्रहाभावनिवेशेन च गौरवाद् बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकनिश्चययो प्रतिबन्धकत्वेनातिगौरवाच्च।

एवमाकाङ्क्षाज्ञानस्य शाब्दबोधाजनकत्वे शब्दसामग्रीकाले आकाङ्क्षाज्ञानाभावविशिष्टात्मत्वमानसवारणाय तत्र शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यपि गौरवमूह्यम्। तज्ज्ञानस्य शाब्दबोधहेतुत्वे च तत्र तज्ज्ञानाभावरूपविषयाभावादेव न तादृशं मानसमिति न तत्र शब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यपि लाघवं बोध्यम्।

## ८. बोधकाले वर्तमानस्यैवाकाङ्क्षाज्ञानस्य हेतुत्वम्

कार्याधिकरणक्षणे वर्तमानस्यैवाकाङ्क्षाज्ञानस्य शाब्दबोधहेतुत्वं नान्यथा। तेनैकबोधानन्तरमपि चिकीर्षितद्वितीयबोधात् प्रागप्याकाङ्क्षाज्ञानरूपकारणस्य वर्तमानत्वाद् द्वितीयबोधो न भवति[1], द्वितीयबोधकाले आकाङ्क्षाज्ञानरूपकारणाभावात्।

## ९. महावाक्यार्थबोधेऽपि आकाङ्क्षाया हेतुत्वम्

ननु आकाङ्क्षापदार्थघटकीभूते 'एकपदार्थज्ञाने' इत्यत्र 'एकपदार्थमात्रज्ञाने' इत्यस्य निवेशात् पदार्थद्वयादिविषयकावान्तरवाक्यार्थबोधानन्तरं महावाक्यार्थबोधो

१. ल० म० पृ० ४६५ प० १६१८। १. ल० म० पृ० ५०१

न स्यात्, तदानीमाकाङ्क्षाज्ञानाभावादिति चेत्, न, बोधविषयत्वेन तात्पर्यविषयीभूत-सम्बन्धनिरूपकैकपदार्थाकाङ्क्षितसकलक्रियाकारकादिविषयकबोधस्यान्वयबोधशब्देन विवक्षितत्वात् खण्डवाक्यार्थस्य क्वचित् क्रियातद्विशेषणयोः, क्वचित् कारकतद्विशेषणयोः प्रथमं बोधेऽपि महावाक्यजन्यबोधविषयीभूतसकलक्रियाकारकादि-विषयकबोधस्यानुत्पन्नत्वेनाकाङ्क्षायाः सत्त्वात्। अत एव 'तात्पर्यविषयीभूतान्वय-बोधजनकत्वाभाव आकाङ्क्षा' इति कैश्चिदुच्यते।

क्रियातद्विशेषणकारकतद्विशेषणैतत्सकलविषयकबोधविषयार्थस्य निरा-काङ्क्षत्वादेव "क्रेङ्कारः स्मरकार्मुकस्य[1]" इत्यादिपद्ये 'तथाविधः क्वाणो वः प्रेम तनोतु' इत्यनेन वाक्यसमाप्तावपि पुनस्तत्क्वाणस्य 'नववयोलास्याय वेणुस्वनः' इति विशेषणाभिधानेन समाप्तपुनरात्तं दोष आलङ्कारिकैः प्रदर्शितः।

समाप्तपुनरात्तत्वञ्च क्रियाकारकभावेनान्वयबोधकसकलपदोक्त्यनन्तरं तद्[2]घटकयत्किञ्चिदन्वयिविशेषणोपादानत्वम्। समाप्तम् = जनितविवक्षितान्वयबोध-

---

१. "क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवः
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः।
तन्व्याः कञ्चुलिकाऽपसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः॥"

[ का० प्र० उ० का० ७ ]

स्वगृहं प्रति प्रस्थितान् पथिकान् प्रति कस्यचित् सहृदयस्योक्तिः।
तन्व्याः = कृशाङ्ग्याः, कञ्चुलिकायाः = चोलिकायाः, अससारणे भवद्भिः क्रियमाणे सति यो भुजयोराक्षेपः = धूननम्, तेन स्खलतां कङ्कणानां क्वाणः = शब्दो वः = युष्माकं प्रेम तनोतु।

कीदृशः क्वाण इत्यपेक्षायां क्रेङ्कार इत्यादीनि पञ्च रूपकालङ्कारेणोक्तानि। तथा हि—स्मरकार्मुकस्य = मदनधनुषः, क्रेङ्कारः = विजयकालिकज्याकर्षणजन्यः शब्दः, तथा सुरतक्रीडा एव पिक्यः = कोकिलाः, तासां रवः = कूजितम्। तथा रतिः = सुरतमेव प्रीतिरेव वा विलासादिरूपफलोत्पत्तिस्थानत्वात् मञ्जरी, तत्सम्बन्धिनो ये मधुलिहः = भ्रमराः तेषां झङ्काररूपः। तथा लीलाकटाक्षादिविक्षेप एव चकोरी, तस्या ध्वनिरूपः। तथा नववयसः = तरुणस्य, नववयसाम् = तरुणानां वा, लास्याय = नृत्याय, वेणुस्वनः = वंशीध्वनिरूपः। अत्र मालारूपकालङ्कारः।

२. वाक्यस्य पुनरुपादनं स्वघटकद्वारा बोध्यम्। तदेवाह—तद्घटकेत्यादिना। तद्घटकम् = समाप्तवाक्यघटकं यत्किञ्चिदर्थस्वरूपम्, तदन्वयि यद् विशेषणं तदुपादनं हि तत्।

जनकं सत्, तदन्वयिशब्दोपादानेन पुनरात्तम् = पुनरनुसन्धानविषयीभूतम्। वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानं यत्रेति भाव.। अत्र पद्ये 'एतादृश: क्वाणो वः प्रेम तनोतु' इत्यनेन वाक्यसमाप्तावपि पुनस्तत्क्वाणस्य 'नववयोलास्याय वेणुस्वनः' इति विशेषणाभिधानेन समाप्तपुनरात्तत्वं दोष.।

अत्र निराकाङ्क्षत्वस्यैव दोषबीजत्वेनावान्तरवाक्यार्थबोधेनैव निराकाङ्क्षत्वमस्ति। तस्य च निराकाङ्क्षत्वस्य सर्वत्र सत्त्वेन तादृशस्थले एव तद्दोषप्रदर्शनमसङ्गतं स्यात्।

## १०. आवृत्तेर्दूषकताबीजत्वम्

ननु यदि अन्वयबोधजनकत्वाभावस्याकाङ्क्षात्वं स्वीक्रियते, तदा 'राज्ञ.' इत्यस्य पुत्रपुरुषयोरुभयत्राप्यन्वयतात्पर्येणोच्चारिते 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यताम्' इति वाक्ये पुत्रेणान्वयबोधे वृत्ते पुरुषेणान्वयबोधो न स्यात्। तत्रान्वयबोधाजनकत्वस्याभावादिति चेत्, न; सति तात्पर्ये आवृत्त्या बोधद्वयस्येष्टत्वात्, द्वितीयवाक्ये बोधजनकत्वाभावस्य सत्त्वात्। किन्त्वत्र पुनर्बोधे आवृत्तिरेव दूषकताबीजम्। एवञ्चावृत्तिनिराकाङ्क्षत्वैतदन्यतरद् दूषकताबीजमवधार्यम्। एतेनालङ्कारिकैः समर्थितं समाप्तपुनरात्तस्यानित्यदोषत्वं प्रत्याख्यातम्।

ननु 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति न्यायविरोधरूपदूषकताबीजस्यापि जागरूकत्वे भवदुक्तमावृत्तेरेव दूषकताबीजत्वं व्याहन्येतेति चेत्, न; आवृत्तिमूलकस्यास्य न्यायस्य स्वातन्त्र्येण प्रतिबन्धकत्वाभावात्।

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः[१] ॥

इति शाकुन्तले,

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥[२]

इत्यत्र च पूर्ववाक्यार्थोपपादकत्वेनाकाङ्क्षाया अनिवृत्तेः समाप्तपुनरात्तत्वाभावः।

१. अभि० श० १।२६।    २. वै० सि० म० पृ० ५०२।

## ११. समभिव्याहारनिष्ठकारणताप्याकाङ्क्षा

यत् पदं यदर्थेन सह तात्पर्यविषयीभूतयादृशार्थान्वयबोधकं तत्पदे तत्पदस्य पूर्वोत्तरवर्त्तित्वादिरूपसमभिव्याहार आकाङ्क्षा। तज्ज्ञानञ्च शाब्दबोधे कारणमिति केचनाहुः। तत्, न, सद्व्युत्पन्नासद्व्युत्पन्नविभागविलयापत्तेः। यदि च तादृशबोधे यत्समभिव्याहारः कारणम्, तादृशबोधे तत्कारणत्वज्ञानमपि कारणमिति नोक्तदोष इति चेत्, तदाऽऽवश्यकत्वात् तस्यैवाकाङ्क्षात्वं युक्तम्।

केचन च 'तत्तत्समभिव्याहारे तत्तद्बोधाजनकत्वनिश्चयः प्रतिबन्धकः' इत्याहुः। तदपि न; 'घटमानय' इत्यादौ घटपदाम्पदादौ प्रत्येकं गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानवतोऽकारणत्वनिश्चयाभाववतो विपरीतव्युत्पन्नस्य ततो बोधापत्तेः, प्रतिबन्धकत्वे गौरवाच्च।

अथ च बोधविषयत्वेन तात्पर्यविषयीभूतसम्बन्धनिरूपकैकपदार्थाकाङ्क्षितसकलक्रियाकारकादिविषयकस्यान्वयबोधाजनकत्वज्ञानस्य 'एतत् पदमेतत्पदेन सहान्वयं बोधयतु' इत्याकारकसमभिव्याहारकारणताज्ञानमूलकत्वात्[1] तत्तत्समभिव्याहारनिष्ठबाधकारणताऽन्वयबोधाजनकता चाकाङ्क्षा। एवञ्च 'यत्र यत्र समभिव्याहारनिष्ठकारणताज्ञानं तत्र तत्रान्वयबोधाजनकत्वज्ञानम्' इत्यन्वयव्याप्त्या 'स स समभिव्याहारस्तादृशतादृशान्वयबोधजनकः' इति ज्ञानं कारणं फलितम्।

येषां समभिव्याहाररूपकारणस्य ज्ञानं नास्ति, तेषा नैव बोधो भवतीति व्यतिरेकव्याप्तिरप्यस्ति। समभिव्याहारस्य कारणत्वादेव यस्य पुरुषस्य यादृशसमभिव्याहारे यादृशान्वयबोधकत्वग्रहः, तस्य तादृशान्वयबोध इत्यनुभवसिद्धम्। 'स स समभिव्याहारः तत्तदन्वयबोधजनकः' इत्ययमेव वाक्यविषये ऐश्वरः समयः। संसर्गनिरूपितशक्ति वाक्ये स्वीकुर्वद्भिर्मीमासकैरप्यतितरामाद्रियतेऽयं सिद्धान्तः[2]।

शाब्दबोधे समभिव्याहारस्य कारणत्वादेव 'घटनिष्ठकर्मतानिरूपकमानयनम्' इत्येतदर्थनिरूपितबोधजनकत्वाभाववति 'घटः कर्मत्वम् आनयनं कृतिः' इति वाक्ये तादृशार्थनिरूपितबोधजनकत्वज्ञानवतो भ्रान्तस्य बोधो भवति, शब्दशास्त्रोक्तप्रकृतिप्रत्ययविभागतत्तदर्थविभागतत्तदन्वयबोधविषयकज्ञानवतो स न जायते। अतः समभिव्याहाररूपाऽकाङ्क्षाऽवश्यमङ्गीकार्या। यथा दाहं प्रति वह्निः स्वरूपतः

१. 'उक्तान्वयबोधाजनकत्वज्ञानेनैव शाब्दबोधप्रयोजकतत्तत्समभिव्याहारनिष्ठकारणताज्ञानं कारणम्' इति कार्यकारणभावस्वीकारात्। तेन 'घट. कर्मत्वम्, आनयनं कृतिः' इत्यादितो न बोध, 'घटनिष्ठकर्मतानिरूपकमानयनम्' इति बोधं प्रति घटपदोत्तराम्पदत्वरूपसमभिव्याहारज्ञानस्य कारणत्वात्।

२. ल० म० पृ० ५०१ पं० ६–११।

कारणम् न तु तज्ज्ञानमपेक्ष्यते, तथैवाकाङ्क्षास्वरूपसत्येव हेतुः, न तु तज्ज्ञानमपेक्ष्यते, यतो हि तावतैव बोधान्तरवारणं सम्भवति।

## १२. तात्पर्येणाकाङ्क्षाया अन्यथासिद्धिसिद्धान्तनिरासः

ननु अन्वयबोधाजनकत्वस्याकाङ्क्षात्वे तस्याः प्रागभावरूपत्वात् 'अहो विमलं जलं नद्याः कच्छे महिषाश्चरन्ति' इत्यत्र नदीजलविषयकबोधे वृत्तेऽपि भाविकालिकनदीकच्छान्वयप्रागभावस्य सत्त्वात् पुनर्नदीकच्छान्वयबोधापत्तिः? न च तात्पर्याभावान्न तदापत्तिरिति वाच्यम्, 'आकाङ्क्षाया अभावान्न तत्र बोधः' इति प्रवादविरोधादिति चेत्, न, स्वरूपसतोऽन्वयबोधस्य तत्तत्समभिव्याहारजन्येऽन्वयबोधान्तरे प्रतिबन्धकत्वस्वीकारात्।

ननु 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र तात्पर्यभ्रमात् पुरुषान्वयबोधस्यापि दर्शनात् प्रतिबन्धकत्वासम्भवोऽन्वयबोधस्येति चेत्, न, समभिव्याहारमूलकस्यान्वयबोधाजनकत्वज्ञानस्यापि कारणत्वस्वीकारात्[1]।

अयमाशयः—'अयमेति' इत्यादिस्थले तात्पर्यभ्रमेण पुरुषेऽन्वये जातेऽपि तदनन्तरं पुत्रान्वये तात्पर्यग्रहेऽप्यन्वयानापत्तिः। अतस्तात्पर्यविषयान्वयाजनकत्वमेवात्र विवक्षितम्। एवञ्च तात्पर्यविषयपुत्रान्वयाजनकत्वस्य सत्त्वान्नोक्तापत्तिः।

अन्वयबोधाजनकत्वज्ञानमूलिकैव 'सकृदुच्चरितः सकृदेवार्थं गमयति' इति व्युत्पत्तिः। 'रामकर्तृकग्रामवृत्तिसंयोगानुकूलो वर्तमानकालिको व्यापारः' इत्याकारकबोधतात्पर्येण 'रामो ग्रामं गच्छति' इति वाक्यमुच्चरितम्' इति तात्पर्यज्ञानसत्त्वेऽपि 'तादृशार्थबोधजनकमिदं वाक्यम्' इत्याकारकज्ञानाभावे श्रोतुर्बोधो न भवति, असत्यपि तादृशे तात्पर्ये बोधजनकत्वज्ञाने बोधो भवत्येवेति तात्पर्यज्ञानेनाकाङ्क्षया अन्यथासिद्धत्वं केनापि मेधाविना प्रतिपादयितुं न पार्येत। प्रत्युत, 'यादृशार्थबोधतात्पर्येण पदमिदमुच्चरितम्, तादृशार्थबोधजनकं नास्ति' इति भूयो भूयो व्यवहरन्तो विद्वांसो बहुधा विलोक्यन्ते। 'न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते, अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वात्'[2] इति वाचस्पतिमिश्रप्रतिपादितदिशा शास्त्रपरिशीलनपरिष्कृतप्रतिभावताम् 'सामान्यक्रियाकारकार्थबोधकपदघटितमिदं वाक्यम्' इति सामान्यरूपेणाकाङ्क्षायाः कारणत्वम्। वाक्यानामानन्त्यात् प्रतिवाक्यं विशेषग्रहस्यासम्भवात् विशेषरूपेणाकाङ्क्षायाः कारणत्वं न स्वीकुर्वन्ति शाब्दिकाः।

## १३. अर्थाकाङ्क्षयोः सम्बन्धनिरूपणम्

शाब्दबोधकारणीभूताया आकाङ्क्षायाः सामान्यतः कारणत्वस्वीकारे 'पदभेदेन व्युत्पत्तिभेदः' इति प्रवादो व्याकुप्येतेति चेत्, अत्र प्रवादे पदपदेन

१. ल० म० पृ० ५०३ पं० १–३। २. साङ्ख्य क० कौ०।

नामपदद्वयस्य, नामाख्यातयोः, आख्यातनिपातयो , निपातनाम्नोश्च ग्रहणम् । तथा चैतेषा भेदेनेत्यर्थः । यथा 'राजपुरुष ' इत्यत्र पदद्वयभेद , 'देवदत्तो ग्रामं गच्छति' इत्यत्र नामाख्यातयोर्भेदः, 'साक्षात् करोति' इत्यत्राख्यातनिपातयोर्भेदः, 'सुजनः' इत्यत्र निपातनाम्नोर्भेदश्चावगन्तव्य. । एवञ्च नामपदद्वयादिभेदेन तत्तत्पदसमुदाये व्युत्पत्तिभेद इत्येवार्थः[1] ।

आकाङ्क्षा च उत्थापकता, विषयता, एतदन्यतरसम्बन्धेन, उभयसम्बन्धेन, वाऽर्थान्तरजिज्ञासा ।

अन्यतरसम्बन्धस्योदाहरणम्—'पश्य मृगो धावति' । अत्र दर्शनार्थस्य कारकभावनाकाङ्क्षोत्थापकत्वम्, धावनन्तु आकाङ्क्षाविषय एव । धावनरूपकारकविषयकाकाङ्क्षोत्थापकत्वं दर्शननिष्ठम् । एवञ्च दर्शने उत्थापकतासम्बन्धेनैवाऽऽकाङ्क्षा, धावने विषयतासम्बन्धेनेति तत्त्वम् ।

उभयसम्बन्धोदाहरणम्—'पचति तण्डुलं देवदत्त' । अत्र क्रियाकारकयोः पाककर्मणोर्द्वयोरपि परस्परमाकाङ्क्षोत्थापकत्वम्, आकाङ्क्षाविषयत्वञ्च[2] । अत एव 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादौ कर्मत्वपदोपस्थाप्यकर्मत्वज्ञाने तदर्थान्वययोग्यानयनार्थस्य यज्ज्ञानम्, तद्विषयेच्छारूपाकाङ्क्षाया. सत्त्वेऽपि 'घटमानय' इति वाक्यजन्यशाब्दबोधवत् शाब्दबोधो न भवति, यतो हि द्वितीयान्तपदोपस्थाप्यस्यैवानयनपदोपस्थापितानयने आकाङ्क्षा । आनयपदोपस्थापितस्यैव च द्वितीयान्तपदोपस्थापितार्थे आकाङ्क्षेति सर्वमनवद्यम् ।

## १४. क्रियाकारकभावस्य वाक्यशक्यत्वम्

यद्यपि विशेष्यविशेषणभावनिरूपिता शक्तिः वाक्ये, क्रियाकारकभावनिरूपिता च शक्तिः विभक्तिमात्रनिष्ठेति वैयाकरणसमयः । एवञ्च 'पश्य मृगो धावति' इत्यत्र विभक्तेरभावात् क्रियाकारकभावसम्बन्धस्य खपुष्पायमाणत्वं स्यात्, तथापि एतादृशस्थले विभक्तेरभावात् तादृशः सम्बन्धो वाक्यशक्य एव ।[3]

## १५. विषयतासम्बन्धस्यापि आकाङ्क्षावैशिष्ट्यनियामकत्वम्

यद्यपि उत्थापकतासम्बन्धेनाकाङ्क्षाविशिष्टस्यैव साकाङ्क्षत्वं सार्वजनीनानुभवसिद्धम्, तथापि भाष्यप्रामाण्याद् विषयतासम्बन्धस्यापि आकाङ्क्षावैशिष्ट्यनियामकत्वे मनागपि विचिकित्सा नादर्तव्या । तथा हि—'विभाषा साकाङ्क्षे[4]' इति सूत्रभाष्ये 'भवेत् पूर्व परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथं ?

१. ल० म० पृ० ५०४ प० १–३ । २. ल० म० पृ० ५०२ प० १–५ ।
३. पा० सू० ३।२।११४ । ४. म० भा० ३।२।११४ ।

साकाङ्क्षम् ? परमपि साकाङ्क्षम्, कथम् ? अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम्'[1]। अस्मिन्निति विषयसप्तमीति नागेशः[2]। तथा च विषयतासम्बन्धेन साकाङ्क्षत्वं प्रदर्शितमेव।

अत्र कैयटः—'अस्त्यस्मिन्निति—सहशब्दो विद्यमानार्थवृत्तिः। तेन विद्यमानाकाङ्क्षः साकाङ्क्षोऽर्थ उच्यते। लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद् द्वयोरपि साकाङ्क्षत्वमित्यर्थः' इति।[3]

नन्वेवं प्रतिशाब्दबोधमाकाङ्क्षाया भिन्नरूपत्वात् कार्यकारणभावस्यानुगमो न स्यादिति चेत्, न, आकाङ्क्षात्वेनानुगमस्य संभवात्।

## १६. नागेशमतसमालोचनम्

अत्रेदं सुधीभिराकलनीयं यद् विषयतासम्बन्धेनार्थस्य साकाङ्क्षत्वे 'तस्या आकाङ्क्षाविषयेऽर्थे आरोपः' इति लघुमञ्जूषाग्रन्थविरोधः, विषयतासम्बधेनाकाङ्क्षायास्तत्र सत्त्वादारोपस्यानुपयोगात्। 'साकाङ्क्षः' इत्यस्य 'आकाङ्क्षासम्बन्धी' इत्यर्थेऽप्यारोपासङ्गतिः, आकाङ्क्षायास्तत्र स्वत एव सत्त्वात्।

अथ च समभिव्याहाररूपसम्बन्धस्य कारणत्वञ्च वाक्यार्थेन सम्बन्धं विनाऽनुपपन्नमित्येतत्कार्यकारणभावबलादेव वाक्यशक्तिसिद्धिः, अन्यथा पदशक्तेरप्यसिद्धिः।

## १७. आकाङ्क्षाविषयकवेदान्तिमतम्

वेदान्तिनस्तु पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा। क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाश्च जिज्ञासाविषयत्वम्। क्वचिज्जिज्ञासामन्तराऽपि शाब्दबोधदर्शनात् तत्संग्रहाय योग्यत्वपदोपादानमिति वदन्ति।

इत्याकाङ्क्षाविचारः।



---

१-२. ल० म० पृ० ५०५ पं० ६। ३. कै० प्र० ३।२।११४।

## २. योग्यताविचारः

### १. प्राचीनतार्किकमतम्

#### ( क ) वाक्यपदीयमतम्

प्रकृतवाक्यघटकैकपदार्थे निरूपितप्रकृतवाक्यघटकापरपदार्थवृत्तिवक्तृ-तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गतावच्छेदकताख्ये सम्बन्धिनिष्ठात्यन्ताभाव-प्रतियोगितावच्छेदकत्वाभावो योग्यता, तस्या ज्ञानञ्च शाब्दबोधे कारणम्। यथा 'जलेन सिञ्चति' इत्यत्र सेकः स्वनिरूपितकारणतासम्बन्धेन जले, जलञ्च स्वनिष्ठकारणतानिरूपकत्वसम्बन्धेन सेकेऽन्वेतीति 'जले सेकनिरूपितकरणत्वं नास्ति' इति प्रतीतिसाक्षिकोऽभावो नास्तीति सेककरणत्वरूपसंसर्गवृत्तिसेककरणत्वस्वरूप-संसर्गतावच्छेदके धर्मे जलरूपसम्बन्धिनिष्ठनिरुक्तात्यन्ताभावीयप्रतियोगितावच्छेदकत्वं नास्तीति उक्तप्रतियोगितावच्छेदकत्वाभावरूपयोग्यतायाः सत्त्वात् शाब्दबोध.। 'वह्निना सिञ्चति' इत्यत्र तु वह्निरूपसम्बन्धिनि सेककरणत्वं नास्तीत्यभावस्य सत्त्वात् सेककरणत्वस्य प्रतियोगितावच्छेदकतया उक्तावच्छेदकत्वाभावरूपयोग्यताया अभावान्न शाब्दबोधः। स्ववृत्तिप्रमेयत्वादिरूपसंसर्गस्य तत्रापि विद्यमानत्वाद् योग्यताऽभावो मा भूदिति तात्पर्यविषयीभूतान्तनिवेशः। न चेदृशयोग्यताज्ञानं शाब्दबोधात् प्राङ् न संभवति, वाक्यार्थसंसर्गस्यापूर्वत्वादिति वाच्यम्, सत्या पदार्थोपस्थितौ क्वचित् संशयात्मकस्य, क्वचिद् निश्चयात्मकस्य योग्यताज्ञानस्य शाब्दबोधात् प्रागपि सत्त्वात्।

#### ( ख ) अन्योन्याभावस्थले दोषनिरासः

ननूक्तयोग्यतायाः शाब्दबोधकारणत्वाङ्गीकारेऽन्योन्याभावस्थलमव्याप्तं स्यादिति चेत्, न, प्रतियोगितापदेन तदभावाग्रहप्रतिबन्धकाग्रहविषयत्वरूपायाः प्रतियोगिताया विवक्षितत्वात्, अन्योन्याभावस्थले च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिप्रकारकज्ञानस्याभावज्ञानविरोधितया तादृशप्रतियोगितायाः सत्त्वात्। 'जलेन सिञ्चति' इत्यादौ सेके जलकरणकत्वघटोभयाभावसत्त्वेनाभावीयप्रतियोगि-तायाः संसर्गे सत्त्वेन दोषः स्यात्, अतः संसर्गतावच्छेदके प्रतियोगित्वावच्छेदकत्वा-भावनिवेशः। निवेशिते च तस्मिन् संसर्गतावच्छेदके जलकरणकत्वत्वेऽभावीयप्रति-योगितावच्छेदकतात्पर्याप्त्यधिकरणत्वाभावेन दोषाभावः।

### ( ग ) ज्ञायमानयोग्यतायाः कारणत्वम्

अत्र ज्ञायमानैव योग्यता शाब्दबोधे कारणम्, न तु स्वरूपसती। यद्यपि वृत्त्योपस्थितस्यैव पदार्थस्य शाब्दबोधभानविषयत्वनियमेन संसर्गस्य च तथात्वाभावेन शाब्दबोधविषयता न स्यात्, तथापि तात्पर्यज्ञानविषयतयाऽऽकाङ्क्षाज्ञानविपयतया वा तत्त्वं बोधनीयम्।

## २. नव्यनैयायिकमतम्

### ( क ) अयोग्यतानिश्चयस्य शाब्दबोधप्रतिबन्धकत्वम्

शाब्दबोधं प्रति योग्यताज्ञानं न कारणम्, तादृशकारणताग्राहकप्रमाणाभावात्। अपि तु 'वह्निना सिञ्चति' इत्यादौ बोधादर्शनेनायोग्यतानिश्चयः प्रतिबन्धकः, प्रतिबन्धकाभावस्य कारणत्वं सिद्धमेव। एवञ्च 'वह्निना सिञ्चति' इति वाक्यघटक'सिच्'धात्वर्थसेके वह्निकरणकत्वाभावप्रकारकसेकविशेष्यकनिश्चयस्यायोग्यतानिश्चयस्वरूपस्य प्रतिबन्धकस्य वर्तमानत्वाद् न वह्निकरणकसेकानुकूलकृतिमानिति बोधो बुद्धिमतां भवति।

अत्रेदमाकूतम्—लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्वत्ताज्ञानमात्रं प्रति अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभाववत्तानिश्चयस्य प्रतिबन्धकत्वं लाघवात् सिद्धान्तितम्। एवञ्च 'वह्निकरणकसेकानुकूलकृतिमान्' इति शाब्दबोधस्य, लौकिकसंनिकर्षाजन्यत्वात्, दोषविशेषाजन्यत्वात् सेकधर्मिकवह्निकरणकत्वान्वयवत्ताज्ञानमात्रान्तर्गतत्वेनोपादातुं शक्यत्वात् सेकधर्मिकवह्निकरणकत्वान्वयप्रकारकशाब्दबोधात्मकतादृशज्ञानं प्रति 'सेको वह्निकरणकत्वान्वयाभाववान्' इत्याकारकस्य सेकधर्मिकवह्निकरणकत्वान्वयाभाववत्तानिश्चयस्य स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकज्ञानभिन्नस्य वा बाधकालिकेच्छाजन्यज्ञानभिन्नस्य 'सेको वह्निकरणकत्वान्वयाभाववान् इति ज्ञानमप्रमा' इत्यप्रामाण्यज्ञानाविषयस्यायोग्यतानिश्चयस्य बाधनिश्चयविधया प्रतिबन्धकत्वं सिद्धमेवास्तीति तेनैव 'वह्निना सिञ्चति' इत्यत्र शाब्दबोधवारणे सिद्धे तद्वारणार्थं पुनर्योग्यताज्ञानस्य कारणताकल्पनमधिकं गौरवमेवेति न योग्यताज्ञानं कारणं कल्पनीयम्। अयोग्यतानिश्चयाभावस्य तु प्रतिबन्धकाभावविधया स्वभावत एव कारणत्वं सिद्धयतीति न तदर्थं पृथक् कारणत्वकल्पनायासः कर्त्तव्यः।

लौकिकसंनिकर्षजन्यस्य 'पीतः शङ्खः' इति ज्ञानस्य 'पीतो न शङ्खः' इति निश्चये सत्यपि जायमानत्वाद् व्यभिचारवारणाय प्रतिबन्ध्यकोटौ लौकिकसंनिकर्षाजन्येति विशेषणदानम्। मण्डूकवसाञ्जनदोषवशाज्जन्यस्य रज्जौ सर्पज्ञानस्य

'नायं सर्पः' इतिनिश्चयसत्त्वेऽपि जायमानत्वात् व्यभिचारवारणाय प्रतिबन्धककोटौ दोषविशेषाजन्येति। 'ह्रदो वह्निमान्' इति ज्ञानं प्रति 'वह्न्यभाववान् ह्रदो वह्निमान्' इत्याहार्यज्ञानस्य अप्रतिबन्धकत्वात् प्रतिबन्धककोटौ अनाहार्येति। 'ह्रदो वह्निमान्' इति ज्ञानं प्रति 'ह्रदो वह्न्यभाववान्' इति 'ज्ञानमप्रमा' इत्यप्रामाण्यज्ञानविषयज्ञानस्याप्रतिबन्धकत्वात् प्रतिबन्धककोटौ अप्रामाण्यज्ञानानास्कन्दितेति।

### ( ख ) योग्यताज्ञानस्य कारणत्वखण्डनम्

योग्याज्ञानस्य यदि कारणत्वं न स्वीक्रियेत तदा यत्र बाधनिश्चयो नास्ति, योग्यताज्ञानञ्च नास्ति तत्र बाधनिश्चयाभावमात्रेण शाब्दबोध आपद्येत। अतस्तद्वारणाय योग्यताज्ञानस्य कारणत्वं तदभावस्य च शाब्दबोधाभावप्रयोजकत्वं प्रवक्तव्यम्। तथा च 'वह्निना सिञ्चति' इत्यत्र शाब्दबोधस्तु न स्यात् किन्तु यावत् योग्यताज्ञानं नोत्पद्यते तावत् शाब्दबोधोऽपि नोत्पद्येतेति व्यवस्था कथन्न स्यादिति तु नाशङ्कनीयम्, 'वह्निना सिञ्चति' इत्यत्र अयोग्यताज्ञानाभावात्मकेन बाधनिश्चयाभावेन शाब्दबोधापत्तिस्तु इष्टापत्तिरेव। बाधनिश्चयाभावस्य तद्वत्ताबुद्धि प्रति क्लृप्तकारणत्वात् योग्यताज्ञानस्यातिरिक्तकारणताकल्पने गौरवात् कारणत्वमेवासिद्धम्। तेन योग्यताज्ञानाभावस्य शाब्दबोधाभावप्रयोजकत्वमपि न संभवति। एवञ्च योग्यताज्ञानविलम्बात् शाब्दबोधविलम्बोऽप्यप्रामाणिक एव। परन्तु यत्र यथार्थबाधनिश्चयः, तत्र सर्वथैव शाब्दबोधाभावः, यत्र बाधनिश्चयभ्रमः, तत्र यावत् भ्रमः, तावत् शाब्दबोधविलम्बः। अतः सर्वथैव योग्यताज्ञानस्य न कारणत्वम्, योग्यताज्ञानाभावस्य च प्रतिबन्धकत्वन्नेत्याहुः[1]।

## ३. नव्यनैयायिकमतखण्डनम्

तन्न विचारसहम्—यद्विषयकानुमित्यादिज्ञानं न जातम्, शाब्दबोध एव जातः, तद्विशिष्टबुद्धौ अयोग्यताज्ञानाभावापेक्षया लाघवाद् योग्यताज्ञानत्वेनैव कारणतासिद्धेः। किञ्च ज्ञानमात्रं प्रति एकरूपेण योग्यतानिश्चयस्य प्रतिबन्धकत्वासम्भवः, 'घटाभाववद्भूतलम्' इति निश्चयोत्तरमपि 'घटप्रकारकभूतलविशेष्यकचाक्षुषं मे जायताम्' इतीच्छाबलात् घटादेरपि चक्षुःसन्निकर्षेण भूतलादौ चाक्षुषोत्पत्त्या व्यभिचारापत्तेः। अतस्तच्चाक्षुषेच्छाविरहविशिष्टतदभावनिश्चयत्वेन विशिष्यैव प्रतिबन्ध्यप्रतिबन्धकभावो वक्तव्यः। अनुमितौ च तत्प्रकारकानुमितित्वेन तदभावनिश्चयत्वेनेच्छाविरहवैशिष्ट्यमनन्तर्भाव्यैव प्रतिबन्ध्यप्रतिबन्धकभावः कल्प्यः। एवञ्च शाब्दबुद्धौ पृथगेवायोग्यतानिश्चयस्य प्रतिबन्धकत्वकल्पनापेक्षया लाघवात् योग्यज्ञानस्यैव कारणत्वकल्पनं सुधियां प्रमोदावहम्।

---

१. तत्त्वचिन्तामणिः, हेत्वाभासप्रकरणे रत्नकोशकारमतनिरुपणे।

## ४. शाब्दिकानां मतम्

### ( क ) शाब्दबोधे बाधज्ञानस्य प्रतिबन्धकत्वखण्डनम्

शब्दप्रयोज्यबोधे बाधज्ञानस्य प्रतिबन्धकत्वमेवासिद्धमिति कुतस्तदभावज्ञानस्य कारणत्वं स्यात्। यतो हि संशयोत्तरं विशेषदर्शने तद्वत्ताबुद्धिदर्शनं भवत्येव। ननु बाधज्ञानस्य संशयनिश्चयसाधारण्यानुरोधेन ज्ञानत्वेनैव प्रतिबन्धकत्वम्, विशेषदर्शनस्य तूत्तेजकत्वमिति चेत्, न, योग्यतासंशयानन्तरं पदार्थोपस्थित्यादिसत्त्वे शाब्दबोधदर्शनेन निश्चयत्वेनैव तस्य प्रतिप्रबन्धकत्वात्। ननु बाधज्ञानसत्त्वेऽपि आहार्यप्रत्यक्षज्ञानोदयेन प्रत्यक्षान्यज्ञानस्यैव प्रतिबन्ध्यत्वं वक्तव्यम्। तस्य च प्रतिबन्ध्यत्वस्यार्थापत्तावपि सत्त्वेन तस्याश्चाप्रतिबन्ध्यत्वेनानुमितित्वादेरेव प्रतिबन्ध्यतावच्छेदकत्वमिति शाब्दज्ञाने तस्या क्लृप्तत्वादक्लृप्तकल्पनापेक्षया योग्यताज्ञानस्य स्वातन्त्र्येण कारणत्वं स्वीकार्यमिति चेत्, न, इच्छाया उत्तेजकत्वानुरोधेन बाधज्ञानसत्त्वेऽपि प्रत्यक्षज्ञानदर्शनात् प्रत्यक्षज्ञानत्वस्यैव प्रतिबन्ध्यतावच्छेदकत्वात्, उपनीतभानसाधारणप्रतिबन्ध्यताया. शाब्देऽभावाद् बाधकालेऽपि आहार्यशाब्दबोधस्यापेक्षणात्। पित्तादिदोषवशात् 'पीतत्वाभाववान् शङ्ख' इत्याकारकबाध सत्त्वेऽपि 'पीत. शङ्खः' इति यथा प्रत्यक्षं भवति तथा पदार्थोपस्थितिवशात् शाब्दबोधोऽपि भवत्येव। यथा 'अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृता संख्यया[1]' इति पद्ये 'परार्द्धपरया संख्ययाऽस्य भूपतेः कीर्तयो लक्षीकृता.' इत्याकारको बोध. 'सख्या परार्द्धाधिकत्वाभावती' इति सत्यपि बाधे सुधियामपि बोधो दृश्यते। एवम् 'बन्ध्यात्वं प्रसवकर्तृत्वाभावाधिकरणवृत्ति' इति बाधे वर्तमानेऽपि 'एष बन्ध्यासुतो याति' इति वाक्याद् बोधो बुद्धिमतामपि भवति।

### ( ख ) बाधज्ञानस्य प्रतिबन्धकत्वेऽनुभवविरोधः

अथ च यदि बाधः शाब्दबोधप्रतिबन्धकः स्यात्, तदा 'वह्निना सिञ्चति' इत्यादौ बोधाभावे श्रोतॄणाम् 'अद्रवेण वह्निना कथं सेकं ब्रवीषि ?' इत्याकारकोपहासभाजनं वक्ता न स्यात्। एवमेकप्रकरणस्थयोः 'आत्माऽस्ति' 'नास्ति आत्मा' इत्येवं विरुद्धयोः पक्षप्रतिपक्षयोरभ्युपगमव्यवस्थारूपे वादे बोधाजनकतयाऽबुद्धस्य योग्यतारहितार्थकस्य प्रत्याख्यानसंभवात् वादस्य प्रसङ्ग एव न स्यात्। 'वह्निना सिञ्चति' इत्येवमादिषु शाब्दबोधो न भवति, अपि तु पदार्थोपस्थितिरेवेति समाधानन्तु मनोरथमात्रम्, योग्यतायुज्यपि वाक्ये तथा समाधातुं शक्यत्वात्।

### ( ग ) अप्रवृत्त्या बाधस्य शाब्दबोधप्रतिबन्धकत्वखण्डनम्

अथ प्रवृत्तिं प्रति अन्वयव्यतिरेकाभ्या विशिष्टज्ञानं कारणम्। यथा 'जलमाहर' इतिवाक्यश्रवणानन्तरं जलाहरणे प्रवृत्तस्य पुरुषस्य प्रवृत्तिदर्शनात्

---

१ महीपतिमण्डलीककवि.।

तत्र प्रवृत्त्यन्यथानुपपत्त्या शाब्दबोधः कल्प्यते। 'वह्निना सिञ्च' इत्यादौ श्रोतुः प्रवृत्त्यदर्शनात् तत्र शाब्दबोधो नोदयत इति कथं तदनुरोधेन बाधज्ञानस्य शाब्दबोधाप्रतिबन्धकत्वं कल्प्यत इति चेत्, शृणु, अनुपदं दर्शितदिशा दुःखद्वेषेच्छासुखादिविषयकप्रवृत्ति प्रत्यपि विशिष्टज्ञानस्य हेतुत्वेन बाधनिश्चयस्य सत्त्वेऽपि 'अनेन क्वचिच्चौर्यं कृतम्' इति मिथ्याभिशापबोधवाक्येन; सतीपुत्रेऽपि 'व्यभिचारिणीपुत्रोऽयम्' इति गालिप्रदानवाक्येन, 'मुखं चन्द्रः' इत्युपमानोमेयाभेदनिर्देशकवाक्येन च दुःखादिदर्शनाद् योग्यतारहितार्थबोधकवाक्यस्थलेऽपि शाब्दबोधस्यावश्यं स्वीकर्त्तव्यत्वमापतेत्। इत्थं तथाविधवाक्यश्रवणात् दुःखादिदर्शनात् शाब्दबोधस्यावश्यकत्वं सुतरां सिद्ध्यति।

## ( घ ) अयोग्यार्थकवाक्येनोपस्थितमात्रस्य खण्डनम्

अयोग्यार्थकवाक्येनोपस्थितिरेव भवति न तु शाब्दबोध इत्येवं सिद्धान्ते तु 'मुखं चन्द्रः' इत्यादित इव 'मुखत्वम्, आश्रय, चन्द्रत्वम्, आश्रय.' इत्यतोऽपि चमत्कार. स्यात्। अनुभूयते तु नैव चमत्कार, बाधज्ञानकालेऽपि प्रवृत्तिप्रयोजकबोधदर्शनेन बाधस्य प्रतिबन्धकत्वं नास्ति। यथा 'नेदं रजतम्' इति भ्रमवतस्ततो निवृत्तौ, आप्तेन 'इदं रजतमेव' इति प्रयुक्ते बाधज्ञानकाल एव बोधो भवति, प्रवृत्तिश्चापि दृश्यते। रजतत्वप्रकारकप्रवृत्तौ रजतत्वप्रकारकबुद्धे. कारणतायाः सिद्धतया रङ्गादिविषयकरजतभ्रमानन्तरं प्रवृत्तावपि रजतत्वासंसर्गाग्रह एव हेतुरस्तु। बाधस्य संसर्गाग्रहरूपतया तदभावस्य विशिष्टबुद्धिमात्रे कारणताया आवश्यकत्वेन योग्यत्वाभावनिश्चयानन्तरं शाब्दबोधो न स्यादिति तु नाशङ्कनीयम्। यतो हि रजतत्वासंसर्गाग्रहकालेऽपि बोधपूर्वकप्रवृत्तिदर्शनं भवति।

## ( ङ) असंसर्गाग्रहस्य प्रवृत्तिप्रयोजकत्वनिरसनम्

ननु प्रत्यक्षस्थले असंसर्गग्रहसामान्याभावस्य कारणताया क्लृप्ततयाऽयोग्यतानिश्चयाभावस्यासंसर्गाग्रहत्वेनैव कारणत्वमस्त्विति चेत्, न; प्रत्यक्षसंसर्गाग्रहस्यैव तत्र प्रतिबन्धकतया असंसर्गाग्रहस्य पृथक् कारणताया असिद्धेः।

अथ च 'इदं रजतम्' इति भ्रान्तस्य बाधकालेऽपि असंसर्गाग्रहमात्रेण प्रवृत्तिरितिनैयायिकाः। तत्, न, असंसर्गाग्रहो नाम संसर्गाभावग्रहाभावः। तस्य च बाधज्ञानाभावरूपतया तदानीं बाधज्ञानाभावात्।

अत्रायमाशयः—विषयाबाधो योग्यता। सा च यत्संसर्गो यत्र पदार्थे येन सम्बन्धेन गृह्यते, तेन सम्बन्धेन तत्र तद्वत्त्वम्। तज्ज्ञानञ्च संशयनिश्चयसाधारणं भवत्येव। अन्यथा यस्य गेहे घटसंसर्गज्ञानं नास्ति किन्त्वज्ञानमात्रम्, तस्य 'गेहे घटोऽस्ति' इति वाक्याद् बोधानापत्तिः स्यात्।

प्रभाकरमते हि चक्षूरोगरूपदोषवशादविद्यमानस्यापि रजतत्वेन इदमर्थ-संसर्गाभावस्य ज्ञानाभावेनैव तत्र प्रवृत्तिरिति न युक्तम्; येन दोषेण विद्यमानस्या-संसर्गस्याग्रह, तेनाविद्यमानासंसर्गग्रहस्यैव वक्तुं शक्यत्वात् ।

किञ्च प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वे संभवति सति अभावरूपस्या-संसर्गाग्रहस्य प्रवृत्तौ कारणत्वकल्पनेऽक्लृप्तकल्पनात् गौरवं स्यात् । अत एव प्रवृत्तिं प्रति अनिष्टसाधनत्वाभावादीना न हेतुत्वम् । एवञ्च विशिष्टबुद्धिरेव स्यात्, पदार्थोपस्थितिमात्रोक्तिरसङ्गतैवेति तत्त्वम् ।

अथ सत्यपि बाधे शाब्दबोधो यदि स्वीक्रियते, तदा यत्र पदार्थोपस्थित्य-नन्तरं योग्यताविषयकसंशयात्मकं मानसादिज्ञानम्, ततोऽयोग्यतानिश्चय:, तत्राप्यन्वयबोध: स्यात् इति चेत्, सत्यम्,

किं बाधनिश्चयकाले तदापादनं क्रियते, तदुत्तरं वा ? नाद्यम्—विरोधि-निश्चयसामग्र्या: प्रतिबन्धकत्वस्य सर्वसम्मतत्वात् । न द्वितीयम्—तदानीमन्वय-बोधजनिकाया उपस्थितेरेव नाशात् ।

## ( च ) नाट्यादौ बाधज्ञानेऽपि बोधोपपादनम्

ननु बाधज्ञानसत्त्वेऽपि विशिष्टबुद्धिस्वीकारे नाट्यकाव्यजन्यबोधस्थले सम्बन्धिविशेषसाहित्येन 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा'[1] इत्यादिना विभावादीना प्रतीतिरुक्ता । तथा च रत्यादीन् स्थायिभावान् वासनारूपेण सामाजिकेषु स्थितान् आस्वादयोग्यता ये नयन्ति ते विभावयन्तीति व्युत्पत्त्या विभावा: = आलम्बनकारणानि ललनादीनि, उद्यानादीनि च उद्दीपनकारणानि रत्यादीन् भावान् अनुभावयन्ति = अनुभवविषयीकुर्वन्तीति अनुभावा: = कटाक्ष-भुजाक्षेपप्रभृतय: । विशेषेणाभित: काये चारयन्ति = पुन: पुनरभिव्यञ्जयन्तीति व्यभिचारिण: = निर्वेदादय: । काव्यादिना बोधकाले रामादीनां दर्शनीयचरितानाम-भावात्, काव्यादिनिबद्धतया नाट्यनैपुण्येन चाविद्यमानैरेव विभावादिभिर्नर्तके सीताविषयिणी अनुरागरूपा रामरतिरविद्यमानापि तस्मिन् स्थितेव प्रतीयमाना काव्यादिवासनापरिपक्वबुद्धीना हृदये चमत्कारमुत्पादयन्ती विभावादिवशादेव रामादिसम्बन्धराहित्येन रसस्य समूहालम्बनरूपतया विभवादिभि: सहैवाभि-व्यज्यमाना सामाजिकानां हृदये रसपदवीमधिरोहति । सर्पेऽसत्यपि सर्पतयाऽव-लोकिताद् दाम्नो भीरुदेतीति ।" बाधसत्त्वेऽपि विशिष्टज्ञानस्वीकर्तॄनये रामादि-सम्बन्धिराहित्येन रत्यादीनां प्रतीत्यसंभवात् सा न संगच्छेतेति चेत्, मैवम्; यत्र काव्यादौ विभावादीनां काव्यार्थवासनापरिपक्वबुद्धितासहकृतव्यञ्जनावृत्त्या

१. का० प्र० उ० ४, का० २७–२८–३० ।

सम्बन्धिविशेषीयत्वेनाप्रतीतौ साधारण्येन प्रतीतिः, तत्र विशिष्टज्ञानस्यानुभव-विरुद्धतया स्वीयत्वरूपसंसर्गाभावविषयकज्ञानमात्रेण स्वीयत्वसंसर्गग्रहप्रयोजनं सामाजिकनिष्ठस्थायिन इत्यादेरभिव्यक्तिरिति तात्पर्यात् ।

इदमत्र तत्त्वम्—जगतीह केचन पदार्था. स्वस्यैव, केचन अरेरेव, केचन च तटस्थस्य । तत्र यदि बोद्धुः स्वीयत्वेन विभावादय. प्रतीयेरन्, तदाऽन्यसामाजिक-सन्निधौ स्वरतिप्रकाशोऽनुचित इति व्रीडैव स्यात्, न तु रसास्वादः । शत्रुसम्बन्धित्वेन प्रतीतौ तु द्वेषाविर्भाव एव । उदासीनसम्बन्धप्रतीतावपि रसस्वादोऽ-नुभवविरुद्ध एव । अतः सम्बन्धविशेष एव स्वीकर्त्तव्यः, तत्परिहारनिर्णयश्च नास्तीति 'कामिनीयम्' इत्येतन्मात्रप्रतीतिर्जायते ।

**( छ ) बाधस्थले बोधेऽप्रामाण्यग्रहः**

नन्वेवमयोग्येनापि 'वह्निना सिञ्च' इत्यादिना शाब्दबोधे स्वीक्रियमाणे वह्निकरणकसेकक्रियायां प्रवृत्तिः स्यात्, दृश्यते तु नैवम्, इति चेत्, मैवम्; अप्रामाण्यज्ञानानास्कन्दितज्ञानस्यैव प्रवृत्त्युपयोगित्वात् अयोग्येन वाक्येन च जायमाने ज्ञाने बाधज्ञानेनाप्रामाण्यशङ्काया जननात् दोषाभावात् । शाब्दिकसिद्धान्ते तु बुद्धिस्थस्यैव सर्वत्र बोधविषयत्वेन बुद्धौ च बाधस्यैवाभावः । एवञ्च शाब्दा-न्यत्वमेव बाधप्रतिबन्ध्यतावच्छेदकमिति तत्त्वम् ।

तथाचोक्तम्—'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।'[1] वस्तुतस्तु—पीतत्वाभावनिश्चये सत्यपि शङ्खे 'पीतः शङ्खः' इति बोधोदयात् बाधज्ञानस्य प्रतिबन्धकत्वमप्रामाणिकम् ।

अयमाशयः—यत्र तद्वत्ताभानप्रयोजकसामग्री तदभाववत्ताभानप्रयोजक-सामग्री च । तत्र संशयात्मकमेव ज्ञानं जायते । यत्र चैककोटिभासिकैव सामग्री, तत्र कोट्यन्तरभानप्रयोजकसामग्र्यभावात् कोट्यन्तरभानं नोत्पद्यते । ननु ग्राह्यवत्ता-ज्ञानात् पूर्वं बाधाभावस्य सत्त्वात् 'भूतलं घटवत्' इति लौकिकप्रत्यक्षकालेऽपि 'भूतलं घटाभाववत्' इत्याकारकोपनीतभानसामग्र्यस्त्येवेति चेत्, न; एककोटिक-भानं प्रति अपरकोटिकलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वात् । अथ तस्याः प्रतिबन्धकत्वे भानाभावः, बाधसत्त्वेऽपि लौकिकसन्निकर्षजन्यसंशयनिरासाय तादृशप्रतिबन्धकत्वस्यावश्यकत्वात् । तथा च बाधकालेऽपि सत्यां सामग्र्यां बोधो जायत एव । तत्र घटतदभावभासकसामग्रीवशात् 'घटवद् भूतलम्', 'घटाभाववद् भूतलम्' इत्याकारकयोर्द्वयोरपि ज्ञानयोर्जातयोर्यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहः, तत्राप्रामाण्यग्रह इत्येव व्यवस्था प्रतिबन्ध्या प्रतिबन्धकाभावकल्पनेन लाघवात्

---

१. श्लो० वा० का० ६ सू० पृ० ३३ ।

ज्यायसी। तथा हि 'गेहे घटोऽस्ति' 'गेहे घटो नास्ति' इति द्वाभ्या प्रामाणिकै: प्रयुक्ताभ्या परस्परविरुद्धाभ्या वाक्याभ्या संशयात्मकयोग्यताज्ञानस्य सत्त्वादुभय-प्रकारकमपि ज्ञानं जायत एवेत्यर्थ:।

एतादृशस्थले संशय एव न बोध। ततो विशेपदर्शनान्निश्चय इति तु वक्तुमशक्यम्, बोधं विना संशयासम्भवात्। किन्तु विशेपदर्शने सत्यन्यतरस्मिन्न-प्रामाण्यज्ञानमेवोदयते।

**( ज ) अप्रामाण्यग्रहे भाष्यप्रमाणम्**

बाधज्ञानस्य प्रतिबन्धकत्वं नास्ति, किन्तु तादृशस्थले गदोपसामग्रीजन्यत्वेन अप्रामाण्यग्रहो भवतीत्यत्र[1] भाष्यमपि प्रमाणमस्ति। तथा हि 'भवति वै प्रत्यक्षाद-प्यनुमानबलीयस्त्वम्, तद्यथा—अलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च[2] गम्यते नैतदस्तीति'। अत्र कैयट.—तद्यथेति—आशुसंचाराच्चक्रभ्रान्तिरुत्पद्यते, रूपसहचारि-णस्तु स्पर्शस्यानेकदिक्कस्य युगपदग्रहणादन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यते। तदुक्तं हरिणा—

> स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्तत.।
> न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते ( दृश्यते ) हि तत्[3] ॥ इति।

**( झ ) गौतमस्य सम्मति**

एतदेव पूर्वोक्तं समर्थयमानो गौतमोऽप्याह—"अलातचक्रदर्शनवत्[4] तदुप-लब्धिराशु संचारात्" अत्रेदं तात्पर्यम्—'अयं छात्रोऽधीते, व्रजति, कमण्डलुं धारयति, पन्थानं पश्यति, शृणोत्यरण्यजान् शब्दान्' इति क्रियाणा क्रमाप्रतीते: युगपदासा दर्शनात् मनसो बहुत्वं प्राप्नोतीत्याशङ्क्य प्रत्याचष्टे—अलातेति—अलातचक्रं युगपत् सर्वदिगवृत्त्यपि शीघ्रतया भ्रमणात् एककालावच्छेदेन सर्वदिग्वृत्तित्वेनोप-लभ्यते। तत्र क्रमस्य सत्त्वेऽप्याशुसंचारात् क्रमो न गृह्यते। तथा मनस आशुसं-चारादेव क्रियाणामनेकासा यौगपद्योपलब्धिर्भवति। वस्तुतस्तु न क्रियाणा योगपद्यम्, येन मनसो बहुत्वं सिद्ध्येत्। एवञ्च बाधज्ञानकालेऽप्यनुमिति: स्वीकृतेव।'

**( ञ ) योग्यताज्ञानस्य शाब्दबोधजनकसिद्धान्तनिष्कर्ष:**

अत्रेमाकूतम्—नैयायिकाना निकाये शाब्दबोधे योग्यताज्ञानं कारणम्, अयोग्यतानिश्चयश्च प्रतिबन्धक इति तावत् सिद्धान्तितम्। एतावता प्रबन्धेना-योग्यतानिश्चयस्य प्रतिबन्धकत्वं प्रत्याख्यातम्। अवशिष्टे योग्यताज्ञानस्य कारणत्वे

---

१. पा० सू० ३।२।१२४। २. अनुमानप्रयोगश्च—अलातचक्रम्, युगपत्सर्वदिग्वृत्ति-रूपज्ञानीयविषयत्वाभाववत्, युगपत्सर्वदिग्वृत्ति स्पर्शज्ञानीयविषयत्वाभावात्।

३. वा० प० का० २, का० २६३। ४. न्या० द० अ० ३, आ० २।

यद्यभिनिवेशः स्यात्, तर्हि प्रवृत्त्याद्युपयोगियोग्यतासंदेहाद्योग्यतानिश्चयप्रसक्ता-प्रामाण्यज्ञानाभावविशिष्टबोधजनकत्वेन योग्यताज्ञानं स्वीकर्त्तव्यम्। तथाहि—योग्यतासंदेहादिना प्रयोज्या या प्रसक्ति, तद्विशिष्टं यत् 'जलं सेकनिरूपितकरण-त्ववत्' इति ज्ञानमप्रमा इत्याकारकमप्रामाण्यज्ञानम्, तदभावविशिष्टो य. 'जलं-सेकनिरूपितकरणत्ववत्' इति ज्ञानं प्रमा इत्याकारको बोध., तादृशबोधजनकतया योग्यताज्ञानस्य कारणत्वमस्तु। एवञ्च प्रवृत्त्याद्युपयोगी य., योग्यतासन्देहादि-प्रसक्ताप्रामाण्यज्ञानाभावविशिष्टो बोध., तज्जनकं योग्यताज्ञानम्। अत्र बोधे विशेषणीभूतस्याप्रामाण्यज्ञानाभावस्य प्रतियोगिनः 'जलं सेकनिरूपितकरणत्ववत्' इदं ज्ञानमप्रमा इत्याकारकस्याप्रामाण्यज्ञानस्य प्रतिबन्धकत्वमूलको योग्यताज्ञानस्य शाब्दबोधजनकत्वव्यवहार.।

### ( ट ) अप्रामाण्यज्ञानस्य लक्षणामूलकत्वम्

ननु बाधज्ञानस्याप्रतिबन्धकत्वे लक्षणोच्छेदापत्तिः। यतो हि सत्येव शक्यार्थ-बाधे आप्तोक्तवचसो बोधाभावप्रसक्तौ लक्षणाव्यवहार इति चेत्, सत्यम्, घोषादिनि-रुपितगङ्गादिनिष्ठाधिकरणत्वादिविषयकबोधे 'घोषादिनिरूपिताधिकरणत्वाभाववान् प्रवाह.' इत्याकारकबाधविषयकज्ञानजन्यस्य 'प्रवाहो घोषनिरूपिताधिकरणत्ववान्, इति ज्ञानमप्रमा इत्यप्रामाण्यज्ञानस्य लक्षणामूलकत्वादिति।

## ५. वाक्यपदीयकारमतम्

### ( क ) शक्तिविशेषरूपा योग्यता

वाक्यपदीयकारस्तु—वसननिष्ठामाच्छादनशक्तिमेव योग्यतां निर्वक्ति। समर्थयतेऽमुमर्थं प्रभाकरोऽपि। शाब्दबोधस्य प्रयोजिका या समभिव्याहृतपद-बोध्यकार्यनिरूपिता शक्ति, तादृशशक्तिमत्त्वं योग्यतेत्यर्थ.। यथा 'घटेन जलमाहरति' इत्यादौ घटकरणकजलाहरणरूपार्थबोधे समभिव्याहृतपदबोध्यजलाहरणरूपकार्य-निरूपिता घटे या शक्ति., सैव योग्यतेति तात्पर्यम्। घटादिप्रत्यक्षं प्रति यथा रूपादिः विषयविधया कारणम्, तथा घटादिविषयकशाब्दबोधं प्रति योग्यतापि विषयविधया कारणम्। अर्थात् यथा घटादयः पदार्थाः शाब्दबोधस्य विषयाः, तथा योग्यतापि विषय एव। योग्यतायाः शाब्दबोधविषयत्वादेव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेण घटादिना जलानयनासंभवात् योग्यतायाश्च शाब्दबोध-विषयत्वात् सच्छिद्रेतरत्वरूपयोग्यताप्रकारक एव बोध इति भावः।

शक्तिरूपयोग्यताया. शाब्दविषयत्वस्वीकारादेव प्रतिनिधित्वेनोपादीयं-मानाना पदार्थानामपि 'व्रीहिभिर्यजेत' इत्यादिश्रुतिप्रतिपाद्यत्वमुपपद्यते। यतो हि श्रुतावत्र 'केषाञ्चित् साहचर्येण जातिः शक्त्युपलक्षणम्'[१] इति हरिदर्शितदिशा

१. वा० प० तृ० का० जा० स० क० ३।

श्रुत्या व्रीहित्वसहचरितशक्तेरेव यागोपयोगित्वेन बोधितत्वान्नीवारादीनामपि तादृशशक्तिमत्त्वेन यागोपयोगित्वे सिद्धे तेषामपि श्रुतिजन्यशाब्दबोधविषयत्वं सिद्ध्यति।

अयमभिप्रायः—'खादिरे बध्नाति' इत्यादि श्रुत्या यागकर्मणि पशोः स्वातन्त्र्येण यत्र कुत्रापि गमनं न स्यादिति क्वापि शङ्कौ बन्धनं प्राप्तम्। अत्रेयं श्रुतिर्नियमार्था भविष्यति यत् 'खदिरकाष्ठविशेषनिर्मितशङ्कावेव बन्धनं विधातव्यं नान्यत्र काष्ठसामान्यनिर्मितशङ्कौ'। तत्र च खादिरालाभे नित्यकर्मणः प्रारब्धकाम्यस्य च कर्मणो लोपो माभूदिति कश्चनान्य. प्रतिनिधिरुपादीयते याज्ञिकैः। एवञ्च खादिरत्वसहचरितशक्तिमतोऽन्यस्यापि काष्ठस्य बन्धनसाधनं श्रुत्या प्रतिपाद्यत इति खादिरत्वांशस्य बाधेऽपि प्रतिनिधेः श्रुतिप्रतिपाद्यत्वमुपपद्यते। प्रतिनिधेरनुपादाने हि खादिरस्य जीर्णतया बन्धनशक्तेरभावे बन्धनलोप एव स्यात्।

अथ खादिरालाभे बन्धनस्यैव बाधोऽस्तु, किं प्रतिनिधेरुपादानेनेति वक्तुं न शक्यते। यतो हि बन्धनस्य प्राधान्येन श्रुतिबोधितेन खादिरत्वस्य च गुणतया खादिरत्वस्यैव बाधो युज्यते। नन्वेवम् 'स्रुचः संमार्ष्टि' इत्यत्र द्वितीयाश्रुत्या स्रुचां प्राधान्यमिति याज्ञिकसिद्धान्तव्याघात इति तु न वक्तव्यम्, द्रव्यसंस्कारककर्मण एव गुणतया स्रुचा प्राधान्याबाधात्। तथा हि दृष्टोपकारजनकत्वाभावात् संमार्जनस्याप्राधान्यमिति वदन्तः पराहताः।

'खादिरे बध्नाति' इत्यादौ खादिरत्वरूपं प्रवृत्तिनिमित्तं प्रवृत्तिनिमित्ताश्रयवृत्तेः समभिव्याहृतकार्यनिरूपितायाः शक्तेरप्युपलक्षणमिति शक्तेरपि प्रवृत्तिनिमित्तसामानाधिकरण्येन बोधे भानम्। तथा च प्रवृत्तिनिमित्तस्य शक्तेरप्युपलक्षणत्वेन खादिरत्वजातिविशिष्टस्य जीर्णत्वादिदोषेण त्यागेऽपि कार्यसाधनत्वशक्तेस्त्यागो न श्रेयस्कर। खादिरसदृशबर्बुरगता शक्तिः वर्णादिकृतसादृश्येन खादिरत्वादिबुद्ध्या गृह्यते।

अथ 'घटेन जलमाहर' इत्यादौ सामान्यरूपेण विशेषभानेनैव निर्वाहे शक्तिरूपयोग्यतायाः, शाब्दबोधे भानं निष्फलम्, 'खादिरे बध्नाति' इत्यादौ प्रतिनिधे. श्रौतत्वोपपत्तिरपि अपूर्वसाधनत्वरूपशक्तिविशिष्टे लक्षणया सेत्स्यतीत्युच्यते, तदपि न समीचीनम्, शक्त्यैव निर्वाहे जघन्याया लक्षणावृत्तेरनौचित्यात्। 'सामान्यरूपेण विशेषबोधेऽपि लक्षणा' इत्यर्थस्य अविवक्षितान्यपरवाच्यध्वनेः—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्[1]॥

---

१. का० प्र० उ० ४ उदा० सं० २३।

इत्युदाहरणे स्पष्टमुक्तत्वात्। 'अत्र वचनादि उपदेशादिरूपतया परिणमति' इति प्रकाश.। अत्रोपदेशादेरपि वचनादिरूपतया वचनत्वादिरूपसामान्यधर्मेण विशेषोक्तिरेवेति तात्पर्यम्।

सर्वमेतत् समर्थयते भर्तृहरि —

केषाञ्चित् साहचर्येण जाति. शक्त्युपलक्षणम्।
खदिरादिष्वशक्तेषु जातिः प्रतिनिधीयते॥
अस्वातन्त्र्यफलो बन्ध प्रमाणादौ च शिष्यते।
अतो जात्यभिधानेऽपि शक्तिर्हीनं न गृह्यते[1]॥

जातिशक्तिवादिना मीमासकाना मते जातौ बन्धनाद्यन्वयासम्भवाद् व्यक्तेराक्षेपेणोपपत्तौ सत्यामपि प्रतिनिधेर्ग्रहणमयुक्तमिति शङ्का समादधाति केषाञ्चिदित्यनेन केषाञ्चित् = जातिशक्तिवादिनाम्। साहचर्येण = एकस्मिन् खादिरादिरूपेऽर्थे समवायादिना सामानाधिकरण्येन। जाति = खादिरत्वादि। 'खादिरे बध्नाति' इत्यादौ खादिरत्वादिजाति स्वाधिकरणवृत्तिर्या बन्धनयोग्यतारूपा शक्ति, तस्या उपलक्षणम्। अन्यथा खादिरस्यालाभे जीर्णत्वादिना बन्धनायोग्यत्वे वा कर्मलोप स्यात्। तदाह—खादिरादिष्वशक्तेष्विति। जाति. = खदिरत्वादिः। गुणीभूतखादिरत्वस्य बाधेऽपि प्रधानीभूतबन्धनक्रियानुकूलशक्तेर्न बाध, काकादिपदे दध्युपघातकादेरिव तत्र जातेः शक्त्यु पलक्षणत्वात्। न चैवं श्रुतिविहितगवादेरप्यलाभे महिष्यादेरपि प्रतिनिधित्वप्रसङ्ग', प्रतिपादितप्रतिनिधिविषय एवोपलक्षणस्येष्टत्वात्।

**( ख ) नैयायिकमतप्रत्याख्यानम्**

यत्तु—'संस्कार पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभि.' इति प्रतिपाद्य 'यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतय. समन्त्रा प्रयुक्ता पुरुषमभिसंस्कुर्वते तथा व्रीह्याद्युद्देशेन प्रयुज्यमान प्रोक्षणादि पुरुषमेव संस्कुरुते' इत्युक्तम्[2]। तथा च पुरुषगतादृष्टं प्रति प्रोक्षितव्रीहे कारणत्वमिति तदभिमतं प्रतीयते। तत्, न, व्रीहित्वजाते· शक्त्यनुपलक्षणत्वे प्रतिनिधिग्रहणानापत्ते। ननु जातिशक्तिनयेऽपि प्रतिनिधेर्ग्रहणे मानाभाव· ? अत आह—अस्वातन्त्र्य इति। प्रमाणादौ = हिंसादौ, मीञ् हिंसायामिति स्मृते। पशोर्बन्ध अस्वातन्त्र्यफलः, तत्फलञ्चशक्तिविशिष्टे एव खदिरादौ स्यात्, नासमर्थे इति खादिरत्वादिजात्यभिधानेऽपि शक्तेरुपलक्षणत्वं स्वीकार्यमितिलक्षणं रहस्यम्।

इदमत्राकूतम्—जातेः शक्त्युपलक्षणत्वाभावेऽपि प्रातिपदिकार्थभूताया जातेर्गुणत्वात् प्रधानबन्धनक्रियाननुकूलत्वात् प्रतिनिधिरेव जातिशक्तिवादिनोपादेय·। तथात्वे च हिंसात्यागादेरुपपत्तिः। अन्यथा यागादेरसिद्धिः।

---

१. वा० प०-३।१।३-४।    २. कुसु० स्त० १।

**शुद्धव्यक्तीति**—जातिरहितव्यक्तीत्यर्थः। हरिणा, जातिः, जातिविशिष्टा व्यक्तिः; केवला व्यक्तिः; शक्येति मतत्रये निर्वाहे प्रदर्शितेऽपि तुर्यमतमनुसृत्य निर्वाहाप्रदर्शनात् न्यूनता परिहर्त्तुमाह—जातिशक्तिविशिष्टेति। जात्यदृष्टसाधनत्व-शक्त्युभयविशिष्टेत्यर्थः।

शक्तिश्चादृष्टसाधनत्वरूपैव। सापि योग्यतैवेति शाब्दिकाना हृदयमिति।

इति योग्यतानिरूपणम्।

---

# अथ पञ्चमोऽध्यायः

## शाब्दबोधकारणीभूतासत्तिपदार्थविचारः

### १. आसत्तिज्ञानस्य कारणत्वमिति प्राचीनमतनिरूपणम्

एतावता प्रबन्धेन 'शाब्दबोधसामान्यं प्रति वृत्तिज्ञानसहकृताकाङ्क्षावद्-योग्यपदज्ञानजन्यपदार्थोपस्थितिद्वारा पदज्ञानस्य कारणत्वमित्यायातम्। एवञ्च 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ वृत्तिज्ञानसहकृताकाङ्क्षावद्योग्यपदजन्य-पदार्थोपस्थितिद्वारा पदज्ञानात्मकस्य कारणस्य सत्त्वेऽपि शाब्दबोधाननुभवादन्व-यव्यभिचारः स्यादिति प्राचीना आसत्तिमपि शाब्दबोधे कारणमभ्युपगच्छन्ति। ययो. पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यम्, तयो पदयोरव्यवधानमासत्तिः। स्वरूपसत्यास्तस्याः कारणत्वे तु 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमदशायाम् 'अग्निमदभिन्नो गिरिः' इत्याकारकस्य शाब्दबोधस्योदयात् स्वरूपसत्या आसत्तेरभावाद् व्यतिरेकव्यभिचारः स्यात्। अतो भ्रमप्रमासाधारणमासत्तिज्ञानमेव शाब्दबोधकारणतयोपगन्तव्यमिति तात्पर्यम्। 'अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानमासत्तिः, तज्ज्ञानं शाब्दबोधे कारणम्' इति निष्कर्षः। अन्वयः = शाब्दबोधविषयीभूत संसर्गः, यथा 'गामानय' इत्यत्र द्वितीया-न्तगोपदार्थस्य आनयपदार्थेन सह निरूपकत्वसंसर्गः, तत्प्रतियोगि = गोकर्मकत्वम् तदनुयोगि = आनयनम्,तादृशार्थबोधकपदयोः = द्वितीयान्तगोपदानयपदयो-रव्यवधानम् = अविलम्बोच्चारणम्; आसत्तिपदार्थः। तज्ज्ञानम् = 'गाम्पदम् आनयपदाऽव्यवहितपूर्वम्' आनयपदं गोपदाव्यवहितोत्तरं वा' इति आसत्तिज्ञानं भ्रमप्रमासाधारणं शाब्दबोधे = गोकर्मतानिरूपकाऽऽनयनानुकूलकृतिमांस्त्वम्' इति बोधे सहकारिकारणं भवतीत्यर्थः।

प्रमात्मकस्य भ्रमात्मकस्य वासत्तिज्ञानस्य शाब्दबोधे कारणत्वम्। तेन 'नीलं कपालं द्रव्यं वस्त्रम्' इत्यादौ 'कपालं द्रव्यं नीलं च वस्त्रम्' इति वक्तुस्ता-त्पर्येऽपि व्यवहितेऽपि नीले द्रव्ये च कस्यचित् अनयोरव्यवधानमिति भ्रमो जातः। तत्र तस्य 'नीलाभिन्नं द्रव्यं कपालञ्च' इत्याकारकः प्रमात्मकः शाब्दबोधो जायते। अतः प्राचीना भ्रमप्रमासाधारणासत्तिज्ञानस्य शाब्दबोधे कारणत्वं स्वीकुर्वन्ति।

### २. प्राचीनाभिमतासत्तिज्ञानस्य शाब्दबोधे कारणत्वस्य निरसनम्

अव्यवधानादपि पदद्वयात् पदार्थद्वयोपस्थितिसत्त्वे पदाव्यवधानज्ञानं विनापि शाब्दबोधोऽनुभवसिद्धः। एवञ्च प्राक् प्रतिपादितासत्तिज्ञानस्य कारणता व्यभि-

चारिता। व्यभिचरितस्य कारणत्वं न सम्भवति। अतो नोक्तासत्तिज्ञानं शाब्दबोधे कारणम्, किन्तु पदद्वयोपस्थित्योरव्यवधानात्मिकाऽऽसत्तिः स्वरूपसत्येव शाब्दबोधकारणम्। 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ गिरिपदाग्निमत्पदोपस्थित्योरव्यवधानेन जायमानत्वे तु तत्र शाब्दबोधस्य सार्वजनीनानुभवसिद्धत्वात् प्राचीनोक्तासत्तिज्ञानस्य सर्वत्र शाब्दबोधात् पूर्वमपेक्षितत्वे मानाभावात्। एवञ्च यत्पदार्थेन सह यत्पदार्थस्यान्वयः शाब्दबोधविषयतयाऽभिमत., तादृशपदद्वयादिजन्योपस्थितिद्वयाव्यवधानमेव शाब्दबोधकारणमित्यभ्युपगन्तव्यम्।

## ३. पदजन्यपदार्थस्मरणस्यासत्ते. कारणत्वसमर्थनम्

कल्पनागौरवात् पदद्वयादुपस्थितिद्वयस्याव्यवधानात्मिकाऽऽसत्तिरपि स्वरूपसती न कारणम्। पदज्ञानजन्यपदार्थोपस्थिते. क्लृप्तकारणतया पदज्ञानजन्यपदार्थस्मरणमेवासत्तिः। सैव च कारणम्।

## ४. उक्तमतत्रयप्रत्याख्यानपुरस्सरं सिद्धान्तमतव्यवस्थापनम्

वस्तुतस्तु तात्पर्यविषयतत्तत्पदार्थान्वयबोधजनकपदज्ञानीयविषयताश्रयपदनिष्ठाऽव्यवहितस्मरणमासत्तिः। यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षित, तयोरव्यवधानमेवासत्तिरिति फलितोऽर्थ। तस्यैवाव्यवधानस्य स्मरणं शाब्दबोधे हेतुः। यथा 'गामानय' इत्यादौ येन पदार्थेन = द्वितीयान्तगोपदार्थेन गोकर्मत्वेन सह, यस्य पदार्थस्य = तिङन्तानयपदार्थस्य, अन्वयः = निरूपकत्वसंसर्गः, शाब्दबोधविषयतयाऽपेक्षितः = तात्पर्यविषयतयाऽभिमतः, तयोः = द्वितीयान्तगोपदतिङन्तानयपदयोः, अव्यवधानमेव = पदनिष्ठम् अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वेत्यन्तरदेव आसत्तिः। तस्य स्मरणं शाब्दबोधे हेतु.।

एवञ्च प्राचीनाभिमतं यत् पदनिष्ठाऽव्यवहितत्वज्ञानसामान्यम्, तत्; आसत्तिज्ञानं न, अव्यवहितत्वविशिष्टपदश्रवणोत्तरं पदनिष्ठाऽव्यवहितत्वस्मरणस्यैव शाब्दबोधे उपयोगात्।

यदपि पदोपस्थितिद्वयनिष्ठाऽव्यवहितत्वात्मिका आसत्तिः, तदपि न, कल्पनागौरवात्, शाब्दबोधकारणशरीरगौरवाच्च।

पदज्ञानजन्यपदार्थोपस्थितिरेव आसत्तिज्ञानम्, इत्यपि न; पदार्थोपस्थित्यव्यवहितत्वप्रयोजकतयाऽवश्यापेक्षणीयत्वपदनिष्ठाव्यवहितत्वस्यापलापापत्तेः।

सिद्धान्ते लक्षणे तात्पर्यविषयतत्तत्पदार्थान्वयबोधजनकपदज्ञाननिवेशेन 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इति वाक्यम् 'गिरिरग्निमान्' 'देवदत्तेन भुक्तम्' इति पृथगन्वयबोधेच्छयोच्चारितम्। तत्र गिरिरग्निमत्पदार्थान्वयबोधजनकपद-

ज्ञानविषयपदनिष्ठाऽव्यवधानस्मरणाभावात् 'अग्निमदभिन्नो गिरिः' इत्याकारकः शाब्दबोधो नोदेति, 'गिरिर्भुक्तम्' इति पदयोरव्यवधानसत्त्वेऽपि तयोस्तात्पर्य-विषयान्वयबोधप्रयोजकज्ञानविषयत्वाभावात् न तन्निष्ठाऽव्यवधानस्यासत्तित्वम्। न वा 'गिरिर्भुक्तम्' इत्यत्र समानलिङ्गकवृत्तितयाऽव्यवधानत्वश्रावणदोषविरहेणा-नुभवभ्रमाभावात् आसत्तिस्मरणभ्रमोऽपीति आसत्तिप्रकारकभ्रमादपि तत्र न शाब्दबोधः।

'घटो द्रव्यं नीलः पटः' इत्यन्वयतात्पर्येणोच्चारितवाक्ये नीलपटयोस्तात्पर्य-विषयान्वयबोधप्रयोजकज्ञानविषयत्वसत्त्वेऽपि तन्निष्ठाऽव्यवधानत्वाभावान्न भवति शाब्दबोध., यद्यपि नीलपदघटपदयोरव्यवधानसत्त्वेऽपि तयोः तात्पर्याऽविषयान्वय-बोधप्रयोजकज्ञानविषयत्वाभावात् न तन्निष्ठाऽव्यवधानस्याऽऽसत्तित्वम्, तथापि समानलिङ्गकवृत्तितयाऽव्यवधानत्वश्रावणदोषस्य कारणस्य 'नीलो घटः' इत्यत्र सत्त्वात् स्थलान्तीरय 'नीलाभिन्नघट' बोधतात्पर्योच्चारितवाक्यघटकनीलपद-घटपदगताऽव्यवधानत्वस्याभाववति 'नीलो घटो द्रव्यं पटः' इति वाक्यघटकनील-पदवटपदनिष्ठव्यवधाने तादृशान्यस्थलीयनिरुक्ताव्यवधानत्ववत्त्वभ्रमो जायते। तेन तादृशासत्तित्वप्रकारकासत्तिविशेष्यकभ्रमेण 'नीलाभिन्नघट.' इति शाब्दबोधो जायते।

## ५. आसत्तिभ्रमात् शाब्दबोधस्य भ्रमात्मकत्वनिरासः

आसत्तिभ्रमेण जायमानस्य शाब्दबोधस्य भ्रमात्मकत्वं प्राचीनाः स्वीकुर्वन्ति। तत् विचारकोटिं नाधिरोहति, आसत्तिभ्रमस्य शाब्दभ्रमेऽप्रयोजकत्वात्, योग्यता-भ्रमस्यैव शाब्दभ्रमे प्रयोजकत्वात्। 'नीलो घटो द्रव्यं पटः' इतिवाक्यघटकनील-पदघटपदाभ्यामासत्तिभ्रमादपि घटपदार्थे नीलपदार्थवत्त्वात्मकयोग्यताज्ञानस्य प्रमात्वेन जायमानशाब्दबोधस्य भ्रमत्वाऽभावे न काचिदापत्तिः। तादृशासत्तेः श्लोकघटकपदेष्वभावेन अभ्रान्तस्य तत्र शाब्दबोधाभाव इष्ट एव, श्लोकेभ्यो योजनावाक्यादेवाभिमतशाब्दबोधस्य स्वीकारात्। मौनिश्लोकादावपि तत्तत्पदा-व्यवधानस्मरणात् शाब्दबोधः सम्पद्यते।

अथ 'च्छत्री कुण्डली वासस्वी देवदत्तः' इत्यनेकविशेषणवाचकपदघटिते वाक्ये प्रयुक्ते शाब्दबोधाव्यवहितप्राक्क्षणे कुण्डलिपदस्मरणेन 'योग्यविभुविशेष-गुणाना स्वोत्तरवृत्तिगुणनाश्यत्व' नियमेन च्छत्रिपदस्मरणस्य नाशात् सकल-विशेषणपदानन्तरं प्रयुक्तस्य देवदत्तपदविशेष्यस्य प्रथमपदेनासत्त्यभावेन तत्स्मरणस्य चासंभवेन च्छत्रिपददेवदत्तपदाव्यवधानस्मरणाभावात् 'छत्रवदाद्यभिन्नो देवदत्तः' इति बोधाभावात् व्यभिचरितत्वाद् भवदभिमतमासत्तिस्मरणं शाब्दबोधं प्रति

कारणं न स्यादिति वक्तुं साहसमेव स्यात्। यतो हि तात्पर्यविषयाऽन्वयबोधजनक-ज्ञानविषयपदद्वयादिजन्योपस्थितिद्वयाद्यव्यवधानरूपाया आसत्तेः स्वीकारात् तत्तच्छत्रिकुण्डलीतिप्रत्येकपदश्रावणानुभवजन्यप्रत्येकपदविषयसंस्कारैः चरमपद-स्मरणकालपर्यन्तस्थायिभिः चरमदेवदत्तपदश्रावणप्रत्यक्षोत्तरकालिकस्य यावद्-विशेष्यविशेषणपदसमुदायविषयकस्य युगपदेकस्मरणस्याव्यवधानेन अभेदेनेति यावत् जननात् पदार्थोपस्थितीनामव्यवधानस्यासत्तितया 'छत्री कुण्डली वासस्वी देवदत्त' इत्यत्र प्रत्येकविशेषणपदार्थोपस्थितेः देवदत्तपदार्थेन सहाव्यवधानत्वा-भावेऽपि उत्तरपदादिस्मरणेन पूर्वपदादिस्मरणनाशसंभवेऽपि प्रथमतः पदश्रवणक्रमेण तदर्थश्रावणानुभवजन्ययावत्संस्कारैः विशेष्यपदार्थश्रावणप्रत्यक्षोत्तरतदीयसंस्कारेण सहभावापन्नैः यावद्विशेषणविशिष्टविशेष्यपदार्थस्मरणस्यैकस्य जननात् तादृश-पदार्थस्मरणस्याभेदात्मकेनाऽव्यवधानत्वेनासत्तिरूपेण कारणेन यावत्पदार्थविषयक-शाब्दबोधस्य जननात् आसत्तेः कारणत्वं कल्प्यत एव।

यथा एकस्मिन् काले घटचक्षुस्संयोगपटचक्षुस्सयोगाभ्यामेकम् 'घटपटौ' इति समूहालम्बनात्मकं प्रत्यक्षं जायते, तथा तत्तत्पदादिविषयकसंस्काराणां भिन्नविषयकत्वाशेऽजनकत्वेऽपि तत्रत्ययावत्संस्कारैः यावत्पदार्थविषयकसमूहा-लम्बनात्मकैकस्मृतेर्जननेऽपि न किमपि बाधकं भवति।

एतादृशस्थले च वाक्यघटकानां तावता पदाना श्रावणप्रत्यक्षविषयार्थ-बोधजन्यैः संस्कारैः सह समवायघटितसामानाधिकरण्येनात्मनि जायमानस्य चरमदेवदत्तपदश्रावणानुभवस्यैव स्वसंस्कारमादधतः पूर्वसंस्काराश्चोद्बोधयतो यावत्समुदायविषयकस्यैकस्य स्मरणस्य जनकत्वेन चरमपदानुभवस्यैवोद्बोधक-त्वम्। यदि चरमवर्णादेरुद्बोधकत्वं न स्यात् तदा यज्ञदत्तादिपदेऽपि य-ज्ञ-द-त्-त-प्रभृतिनानावर्णश्रावणानुभवजन्यप्रत्येकसंस्कारैः चरमवर्णश्रावणानुभवकालेऽनुद्बुद्धैः कथमेकं यावद्वर्णानुपूर्व्यवच्छिन्नयज्ञदत्तपदार्थस्मरणं स्यात्। एवञ्च सर्वत्र शाब्द-बोधानुपपत्तिः स्यात्। अतस्तत्र चरमवर्णश्रावणप्रत्यक्षस्य पूर्वपूर्ववर्णश्रावणानुभव-जन्यसंस्काराणामुद्बोधकत्वं मन्तव्यमेव। एवं वाक्येऽपि चरमपदश्रावणस्योद्-बोधकत्वमभ्युपगन्तव्यमेवेति आशुतरविनाशिनीनां पदजन्यपदार्थोपस्थितीनां समवायासंभवात् सर्वत्र शाब्दबोधे पदज्ञानजन्यपदार्थोपस्थितिरभिन्ना कारणमिति फलितोऽर्थः।

एतन्मते च वाक्यघटकयावत्पदार्थविषयकैकस्मरणात् एकस्मिन् काले समूहालम्बनस्मृतिविषयतावत्पदार्थानां क्रियापदार्थकारकपदार्थसमूहालम्बनभावेन पदार्थाना संसर्गविषयकः शाब्दबोधो भवति। तथा चोक्तम्—

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति ।
तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ॥[१]

यथा वृद्धयुवशिशुकपोता एककालावच्छिन्नखलवृत्तिसंयोगजनकक्रियानुकूल-यत्नवन्तः, तथैव = वृद्धयुवशिशुकपोतानामेककालावच्छेदेन खलपतनवत्, सर्वे पदार्थाः = पदद्वयादिव्यवहितपदोपस्थापिता, एकपदमात्रव्यवहितपदोपस्थापिताः अव्यवहितपदोपस्थापिताश्च पदार्थाः, परस्परेण = विशेष्यविशेषणभावेन, अत्राभेदे तृतीया, तस्यान्वयपदार्थैकदेशे विषयतायामन्वयः। युगपत् – अवान्तरशाब्दबोधोत्पत्तिसमये अन्वयिनो भवन्ति – शाब्दबोधनिरूपितविषयतावन्तो भवन्तीत्यर्थः।

अत्र कपोतपदेन सह वृद्धपदस्य पदद्वयव्यवधानम्, युवपदस्यैकपदव्यवधानम्, शिशुपदस्य त्वव्यवधानं दृष्टान्तत्वेनोपात्तम्, एवं कपोतानां युगपत्पतनमपि युगपत्संस्कारोद्बोधने च दृष्टान्तत्वेनोपात्तम्।

## ६. नव्यनैयायिकमतेनात्र गौरवोद्भावनपुरस्सरं शाब्दबोधप्रकारप्रदर्शनम्

उक्तमते नानापदविषयकैकस्मरणकल्पनम्, चरमवर्णज्ञानस्य तदुद्बोधकताकल्पनम् नानापदार्थविषयकैकस्मरणकल्पनञ्च गौरवमितीदं मतं नादरणीयम्। 'छत्री कुण्डली वासस्वी देवदत्तः' इत्यादौ—

'यद् यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥'[१]

इतिप्रशस्तपादाचार्यवचनात् युक्त्या च पदनिष्ठाव्यवधानस्वरूपासत्त्यप्रसिद्धिनिबन्धनशाब्दबोधानुपपत्तिर्न स्यात्।

तथा हि—प्राक्प्रतिपादितवाक्ये वाक्यश्रवणोत्तरं योजनावाक्यैरासत्त्यादिस्मरणेन 'छत्री' पदेन 'अधिकरणत्वं छत्रनिष्ठाधेयतानिरूपितम्' इत्यादिप्रत्येकखण्डबोधानन्तरम्, अथवा 'छत्रवदभिन्नो देवदत्तः', 'कुण्डलवदभिन्नो देवदत्तः', इत्येवं खण्डबोधानन्तरं तत्क्रमानुसारेण जायमानया पदार्थस्मृत्या विशिष्टवैशिष्ट्यावगाही 'छत्रवत्कुण्डलवद्वासस्व्यभिन्नो देवदत्तः' इति महावाक्यार्थबोधो निष्पद्यत इति न काचिदप्यनुपपत्तिः। कारिकार्थस्तु—'यत् यत् आकाङ्क्षितम्, यत् योग्यम्, यत् सन्निधानं प्रपद्यते, तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते' इति योजना। अनेन खण्डवाक्यार्थबोधजनकाङ्क्षादिज्ञानसम्पत्तिर्दर्शिता। तेनान्वितः = तत्पदार्थघटरूपार्थान्वयविशिष्टः, स्वार्थः = अम्पदार्थः कर्मत्वम्, पदैरेवघटपदअम्पदाभ्यामेव, प्रथमं खण्डवाक्यार्थतया अवगम्यते = ज्ञायते। यथा 'घटम्' इति वाक्यात् 'घटीयं कर्मत्वम्' इत्येवम्; इत्येतद्विशेषणतावच्छेदकप्रकारकनिश्चया-

---

१. उदयनाचार्यः, सि० मु० श० ख०।

नन्तरं विशिष्टवैशिष्ट्यावगाही महावाक्यार्थबोधो जायत इति। 'तेन तेन' इति द्विरुच्चारणम् 'धवखदिरौ' इत्यत्रच्छेदनक्रियाया धवेन खदिरेण च पृथक् पृथक् आसत्तिर्भवति ।

## ७. शाब्दिकसम्मतस्फोटप्रत्याख्यानम्

पूर्ववर्णानुभवजनितचरमवर्णानुभवरूपोद्‌बोधकोद्‌बोधितचरमवर्णानुभवजनित-संस्कारेणैव क्रमिकवर्णविशिष्टपदस्मरणरूपासत्त्या शाब्दबोधस्योपपादितत्वेन एकस्मिन् पदे विद्यमानैस्तावद्भिर्वर्णैः प्रकाश्यो वर्णवाचकत्वानुपपत्त्या कल्पनीयः पदस्फोटोऽपि नाभ्युपेयः ।

अयम्भावः—शाब्दिकाना मते प्रत्येकं वर्णा वाचका न सम्भवन्ति। यतो हि एकेनैव वर्णेन अभिमते बोधे सिद्धे अन्येषा नैरर्थक्यं स्यात्। सम्भूयापि ते न तथा, उत्पत्तिपक्षे युगपत् तेषामुत्पत्त्यभावात् समुदायो नोपपद्येत, अभिव्यक्ति-पक्षेऽपि क्रमेणाभिव्यक्तेरनुभवात् समुदायस्यासिद्धिः स्यात्। वर्णविषये चैतत् पक्षद्वयमेवाङ्गीक्रियते। इत्थं वर्णानामासत्त्यभावात् पदानां वाचकत्वं दूरापास्तं स्यात्। अतो वर्णव्यतिरिक्तश्चरमवर्णानुभवे सति तावद्वर्णाभिव्यङ्ग्यः स्फोट एव वर्णेषु पदेषु वाक्येषु च वाचकत्वेनोररीकर्त्तव्यः स्फुटति=अभिव्यक्तीभवत्यर्थो यस्मात् इति व्युत्पत्त्या अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं स्फोटत्वमिति स्फोटलक्षणं सिद्ध्यति ।

अयञ्च स्फोटः—वर्णस्फोटः, पदस्फोटः, अखण्डपदस्फोटः, वाक्यस्फोटः, अखण्डवाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्चेति अष्टविधः। साधुशब्दे 'पचति, रामः' इत्यादौ प्रयुज्यमानानां तिब्विसर्गादीनां वर्णानामेवान्वयव्यतिरेकाभ्या वाचकत्वात् वर्णे स्फोटत्वं निष्पद्यते। इत्थं वर्णानां वाचकत्वात् वर्णसमभिव्यवहाररूपस्य पदस्यापि वाचकत्वेन पदेऽपि स्फोटत्वं सिद्धं भवति। तद्वत् वाक्येन वाक्यार्थबोध इति वाक्येष्वपि वाक्यार्थशक्तिः स्वीक्रियत इति तत्रापि स्फोटत्वं स्फुटीभवति। 'सोऽयं ककारः, तदेवेदं पदम्, तदेवेदं वाक्यम्' इत्यबाधितप्रतीत्या तेषामखण्डत्वात् स्फोटस्याखण्डत्वमपि साधितं भवति। पदादेरखण्डत्वेऽपि पञ्चकोशादिवत् शास्त्रस्य प्रकृतिप्रत्ययाभ्यां व्युत्पादन-मात्रोपायत्वात् नाप्रामाण्यप्रसङ्गः ।

वर्णानां वाचकत्वापेक्षया लाघवात् जातेरेव वाचकत्वात् जातावपि स्फोटत्वं सिद्ध्यति। स च स्फोटः ब्रह्मैव। तस्यैकत्वेऽपि तत्तद्वर्णाभिव्यक्तिस्तत्तत्पदार्थोप-स्थापिकेति पटपदादौ उच्चारिते घटाद्युपस्थितिः सम्भवति। पदवाक्यस्फोटानां

१. कणादसूत्रम्–प्रशस्तपादभाष्यम्।

भेदव्यवहारस्तु पदवाक्याभिव्यक्तिभेदनिबन्धन इति सर्वं समुपपन्नं भवतीति शाब्दिकसम्मतः स्फोटसिद्धान्तः।

शास्त्रयुक्तिसाधितोऽप्ययं राद्धान्तो नाराध्यते तार्किकवरैः। यतो हि 'पचति, रामः' इत्यादिषु यदर्थवाचकतया तिवि विसर्गादौ स्फोटत्वं मन्यते तदर्थस्य व्याकरणाद्युपपादितेच्छात्मकशक्त्यैव बोधसम्भवेन अन्यथासिद्धस्य बोधप्रयोजकशक्तिमत्तयाऽतिरिक्तस्फोटस्य कल्पनाया अन्याय्यत्वं गौरवञ्च सम्पद्यते। एवं घटादिपदादौ स्फोटस्य चरमवर्णाभिव्यङ्ग्यत्वे अकारेणैव घटवाचकत्वनिर्वाहे घादिवर्णत्रयवैयर्थ्यं प्रसज्येतेति तादृशपूर्वपूर्ववर्णोच्चारणवैयर्थ्यापत्तिवारणाय पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णश्रावणस्य स्फोटव्यञ्जकत्वं स्वीक्रियते शाब्दिकैः। तत्र पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवेनैव शाब्दिकसम्मतस्फोटव्यञ्जकस्थाने नैयायिकैः तावद्वर्णसंस्कारोद्बोधकेन स्वीकृतेन समूहालम्बनस्मरणे सति उभयमतसिद्धात् अनुभवोद्बोध्यसंस्कारात् शाब्दबोधोपपत्तौ पुनरधिकस्य स्फोटस्य कल्पनं वैयाकरणाना गौरवमेव। एवं वाक्यस्फोटादयोऽपि निरर्थका एवेति न विस्मरणीयम्।

## ८. महावाक्यार्थबोधेऽवान्तरवाक्यार्थस्य, वाक्यार्थबोधे पदार्थस्मरणस्य कारणत्ववादिनां प्रभाकरमतानुयायिनां मतस्य प्रत्याख्यानम्

यत्किञ्चित्पदजन्यपदार्थोपस्थितिसत्त्वेऽर्थस्मरणसमूहात् शाब्दबोधो जायते। एवञ्च अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणस्य कारणत्वम्, न तु समूहालम्बनस्मरणस्य, न वा पदजन्यपदार्थस्मरणस्य, लाघवात् पदार्थस्मरणस्यैव कारणत्वात्। अतः 'द्वारम्' इत्यादौ 'पिधेहि' इति पदाध्याहारो न युक्तः, किन्तु अर्थाध्याहार एवेति प्राभाकरा वदन्ति।

तार्किकास्तु नैतत् सहन्ते। तथा हि—यथा शाब्दबोधविषययादृशार्थतात्पर्येण 'द्वारम्' इति वाक्यमुच्चारितम्, तथा तादृशतात्पर्यार्थविषयकः 'पिधेहि' इत्यध्याहृतपदज्ञानादेव पिधानार्थस्मृतिसत्त्वे 'द्वारकर्मकपिधानानुकूलकृतिमांस्त्वम्' इति बोधो जायते, न तु अध्याहृतस्य पिधानार्थस्य स्मृतिमात्रात्। केवलपदार्थस्मृतित्वेन शाब्दबोधहेतुत्वे प्रत्यक्षादिनोपस्थितानां तत्तत्पदार्थानां पदज्ञानमन्तरैव शाब्दबोधः स्यात्। अतो वृत्तिज्ञानसहकृततत्तत्पदज्ञानजन्यत्तत्पदार्थस्मृतित्वेनैव तत्तदर्थशाब्दबोधकारणत्वं वक्तव्यमिति नानुपपत्तिः।

अथ तात्पर्यज्ञानस्यापि शाब्दबोधहेतुत्वोपगमेन वक्तुरिच्छाया एव तात्पर्यरूपत्वात् पदस्यानुच्चारणेऽपि वक्तुरिच्छाविषयकत्वरूपतात्पर्यविषयत्वनिश्चयासंभवात् 'द्वारम्' इत्युच्चारणे सति वक्तुस्तात्पर्य ज्ञात्वाऽर्थाध्याहारेण बोधोपपत्तिः।

प्रत्यक्षस्थले चातात्पर्यार्थपटादेः न शाब्दबोधापत्तिरिति मीमांसकमतं समीचीन-मेवेति न मन्तव्यम्। यतो लोडन्तानयनादिक्रियापदाना द्वितीयान्तघटादिपदाना-मानयनपदेनैव सह द्वितीयान्तघटपदस्य, द्वितीयान्तघटपदेनैव सहानयनपदस्य यस्य पदस्य यत्पदविरहप्रयोज्यशाब्दबोधाजनकत्वम्, तत्पदे तत्पदवत्त्वरूपाकाङ्क्षावत्त्वात् 'घट. कर्मत्वम्, आनयनं कृति.' इत्यादौ शाब्दबोधवारणाय साकाङ्क्षापदानामेव शाब्दबोधे कारणत्वस्य वक्तव्यत्वेन 'द्वारम्' इत्यत्र 'पिधेहि' इति क्रियापदं विना द्वितीयान्तद्वारपदमात्रेण शाब्दबोधो न स्यात्। अतः 'पिधेहि' इति क्रियापदाध्याहार आवश्यकः।

अथ 'घटः कर्मत्वम्, आनयनं कृतिः' इति वाक्यात् शाब्दबोधवारणाय अभिमतशाब्दबोधौपयिकाकाङ्क्षादिमत् यत्किञ्चित्पदज्ञानं कारणं स्वीक्रियते, तावतैव प्रथमान्तघटपदादेराकाङ्क्षितपदत्वाभावेनोक्तस्थले शाब्दबोधो वारितो भवति। 'घटम् आनयनं कृतिः' 'घटः कर्मत्वम् आनय' इति वा वाक्यात् शाब्दबोध इष्ट एव, प्रत्यक्षानुमानादिना घटाद्युपस्थितेरिव अनाकाङ्क्षितपदज्ञानजन्यार्थो-पस्थितेरपि शाब्दबोधहेतुत्वस्वीकारात्। एवञ्च मीमासकमतं युक्तमेवेत्यपि न मन्तव्यम्, 'पुष्पेभ्यः' इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहारस्यावश्यकत्वात्।

तथाहि—'स्पृहार्थकधातुयोगे ईप्सित. सम्प्रदानसंज्ञः स्यात्' इत्यर्थकेन "स्पृहेरीप्सित."[१] इति सूत्रेण 'स्पृहयति' इति पदयोगे एव 'पुष्पेभ्य.' इत्यत्र चतुर्थीविधानेन क्रियापदाध्याहारं विना चतुर्थी न स्यादिति पदाध्याहार आवश्यक। एवञ्च पदजन्यपदार्थोपस्थितिरेव शाब्दबोधे हेतु., न तु पदार्थोपस्थितिमात्रम्, वाक्यं विनापि प्रत्यक्षादिनोपस्थितोदासीनपटादेरपि स्मरणापत्ते., शाब्दबोधौपयिका-काङ्क्षादिमत् यत्किञ्चित्पदज्ञानत्वेन कारणत्वे अनेकपदघटितवाक्ये विनिगमना-विरहप्रयुक्तानन्तकार्यकारणभावापत्तेश्चेति मीमांसकमतमनास्थेयमेव।

## ६. प्राचीनाभिमतासत्तेः शाब्दबोधेऽनुपयोगिताप्रदर्शनपरं नव्यशाब्दिकमतम्

तत्तत्पदार्थोपस्थित्यवहिततत्तत्पदार्थोपस्थितिरासत्ति.। अथैवमासन्नानासन्न-विभाग एव व्याहतः, समूहालम्बनपदार्थोपस्थितेरेव सर्वत्र शाब्दबोधोपयोगितया 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादावपि शाब्दानुभवाव्यवहितपूर्ववर्तिसमूहालम्बन रूपपदार्थोपस्थितिमादायाव्यवधानेनोपस्थितिसत्त्वात्, उपस्थितेश्चैकत्वेन व्यवधाना-सम्भव इति चेत्, मैवम्, भेदगर्भव्यवधानस्य पूर्वोत्तरसाधारणस्यात्र प्रवेशात्। तच्च ध्वंसाधिकरणभिन्नत्वे सति यः स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणक्षणः,

१. पा० सू० १।४।३६।

तदवच्छेदेन स्वसमवायिदेशोत्पत्तिकत्वे सति स्वभिन्नत्वम् । एवञ्च प्रथमं या प्रत्येकपदेभ्यः प्रत्येकपदार्थाना क्रमिकस्मृति., सैवासत्तिः । अत एवासत्तिज्ञानं हेतुः, प्रत्येकपदजन्यप्रत्येकपदार्थोपस्थितीनामाशुविनाशिनीना युगपच्छाब्दबोधात्पूर्वम- सम्भवेन स्वरूपसद्धेतुत्वासम्भवात् । अन्यत् पूर्वं नैयायिकमतप्रतिपादनावसरे निरूपितमिति प्राचीनमतम् ।

नागेशस्तु—आसत्तिरपि मन्दस्याविलम्बेन शाब्दबोधे कारणं मन्यते । अनेन च आसत्तेः शाब्दबोधे कारणत्वाभाव. सूच्यते । अविलम्बेनेत्यनेन मन्दस्यापि विलम्बेन बोधे कारणत्वाभावो ध्वनितः । एवञ्चैतन्मते आसत्तेः शाब्दबोधे कारणत्वं नैवास्तीति फलितम् ।

## १०. आसत्तेः कारणत्वाभावे भाष्यमतप्रदर्शनम्

आसत्ते. कारणत्वाभाव. "न पदान्त"[१] इतिसूत्रभाष्यसम्मतः । तथा हि— 'स्वरदीर्घयलोपविधिपु लोपरूपोऽजादेश एव न स्थानिवत्' इति वक्तव्यम्— चिकीर्षकः, प्रतिदीव्न, बाह्मणकण्डूतिः; एषु स्थानिवद्भावाभावात् स्वरादयो भवन्ति, पञ्चारत्न्य., किर्यो., वाय्वोः, एषु स्थानिवद्भावात् स्वरदीर्घ- यलोपादयो न भवन्ति, इत्युक्त्वा 'तत् तर्हि वक्तव्यम्, न वक्तव्यम्' इह हि लोपोऽपि प्रकृत., आदेशोऽपि विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसम्बन्धमात्रं कर्त्तव्यम्—स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति । आनुपूर्व्येण सन्निविष्टाना यथेष्टमभिसम्बन्धः शक्यते कर्त्तुम् ? न चैतान्यानुपूर्व्येण सन्निविष्टानि । अनानुपूर्व्येणापि सन्निविष्टाना यथेष्टमभिसम्बन्धो भवति । तद्यथा— 'अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः' इति । तस्य यथेष्टमभिसम्बन्धः—'उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति' इत्युक्तम् ।

अस्यायं भावः—स्वरदीर्घयलोपाना पदान्तरेणाव्यवधानरूपासत्त्या सूत्रे पाठाभावेऽपि अनुवृत्ताना लोपादीना द्विर्वचने लोपादेशस्यासम्भवात्, सवर्णादिविधौ तु तस्यैव सम्भवात् न तेषा लोपो विशेषणम्, पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तः, तथापि 'पदान्त' इति योगविभागात् तद्विधौ लोपो न विशेषणम्, इति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते ।

एवञ्चोक्तभाष्यात् स्पष्टं प्रतीयते यत् योजनयैव शाब्दबोधे निष्पन्ने आसत्तेस्तत्र कारणत्वं निष्फलमिति ।

---

१. पा० सू० १।१।५८ ।

## ११. अर्थयोजनया वाक्ययोजनाया अन्यथात्वसमर्थनम्

वस्तुत ईदृशव्यवधानघटितवाक्यस्थलेऽपि योजनावाक्यकल्पनाऽतीव निष्फला। योजनाकल्पकाकाङ्क्षातात्पर्यादिना अर्थयोजकवाक्यकल्पनेनैव अभिमतशाब्दबोधे ज्ञाते वाक्ययोजनाकल्पनस्यानौचित्यात्। परन्त्वेतत्तु निपुणं निरीक्षणीयं यत् साऽर्थयोजना मन्दस्य विलम्बेन भवति प्रतिभावतस्तु झटित्येवेति।

# शाब्दबोधकारणस्य तात्पर्यज्ञानस्य स्वरूपनिरूपणम्

## १. तार्किकाभिमततात्पर्यस्वरूपप्रदर्शनम्

'अस्मात् पदादयमर्थो ज्ञातो भवतु' इति प्रयोक्तरि समवायसम्बन्धेन वर्तमानेच्छा तात्पर्यम्। उच्चरितत्वसम्बन्धेनेच्छाप्रकारकम्, पूर्वोक्तेच्छयोच्चरितत्वप्रकारकं वा पदविशेष्यकं श्रोतृनिष्ठं ज्ञानं शाब्दबोधं प्रति कारणमिति निष्कर्षः। ननु सः=अर्थः, परः=प्रधानः, यस्य=पदस्येति व्युत्पत्त्या तदर्थस्मारकत्वमेव तात्पर्यं कथन्नेति चेत्, न, सैन्धवपदनिष्ठस्य लवणाश्वोभयस्मारकत्वस्याभिमतार्थबोधकत्वाभावात्। अतो लक्षणया तात्पर्यपदं वक्तुरिच्छाबोधकम्, न तु श्रोतुरिच्छाबोधकम्।

अथोक्ततात्पर्यज्ञानस्य शाब्दबोधे हेतुत्वं मास्तु, को दोष इति चेत्, सत्यम्, किन्तु तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य शाब्दबोधे कारणत्वाभावे नानार्थशक्तिकपदघटितवाक्यात् 'सैन्धवमानय' इति वाक्यात् अश्वतात्पर्यग्राहकप्रयाणप्रकरणे सत्यपि अश्वस्यैव, लवणतात्पर्यग्राहकभोजनप्रकरणे सत्यपि च लवणस्यैव बोधो भवतु इत्यत्र विनिगमकाभावात् अश्वलक्षणोभयबोधौपयिकसामग्र्या सर्वतोभावेन सत्त्वात् उभयोर्बोधः स्यात्, एकस्याः सामग्र्या अपरस्य बोधस्य प्रतिबन्धकत्वकल्पने तु शाब्दबोध एव विलयं यायात्। अतस्तात्पर्यज्ञानस्य शाब्दबोधं प्रति कारणत्वमवश्यं कल्प्यम्। तात्पर्यग्राहकाणां प्रकरणादीनामेव शाब्दबोधे कारणत्वं तु नैव कल्पनीयम्, यतो हि तात्पर्यग्राहकेषु सर्वेष्वपि अनतिप्रसक्तैकधर्माभावात् प्रातिस्विकरूपेण व्यभिचरितत्वाच्च तेषां शाब्दबोधहेतुता नैव स्यात्। अतोऽनुगतस्यैकस्य तात्पर्यज्ञानस्य हेतुताऽभ्युपगन्तव्येति। तात्पर्यज्ञानजनकत्वेनानुगतेनापि संयोगादीनां कारणत्वं न संभवति, गुरुभूततात्पर्यज्ञानजनकत्वापेक्षया तात्पर्यज्ञानत्वस्यैव लघुभूतस्य कारणतावच्छेदकस्य कल्पनस्यौचित्यात्।

## संयोगादीनामभिधानियामकत्वनिरूपणम्

तानि च प्रकरणादीनीत्थम्—

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥"[1]

संयोगः=सम्बन्धः, सम्बन्धत्वञ्चात्र नानार्थकशब्दशक्यान्तरवृत्तितयाऽप्रसिद्धत्वे सति तच्छक्यवृत्तित्वेन प्रसिद्धत्वम्। यथा 'सवत्साऽऽनीयताम्' इत्यादौ वत्सपदस्य गोरपत्यस्यैव वाचकत्वेन तत्सम्बन्धात् गौरेवानीयते, न तु महिष्यादिः। धेनुशब्दस्य नवप्रसूतामात्रवाचकत्वमतेनेदमुदाहरणम्, नवप्रसूतगवीमात्रवाचित्वे तु 'सशङ्खचक्रो हरिः' इत्युदाहरणं बोध्यम्। अत्र शङ्खचक्रसंयोगात् विष्णुरेव बोध्यते न तु इन्द्रादि.।

विप्रयोगः=विश्लेषः। यथा 'अवत्साऽऽनीयताम्' इत्यत्र निषेधस्य प्राप्तिपूर्वकत्वात् प्राप्तेश्च तत्रैव सम्भवात् 'अवत्सा' पदेन गौरेवानीयते।

साहचर्यम्=सादृश्यम्, न तु सहचरणम्, भाष्यविरोधात्। सदृशयोरेव सहचरणस्य दृष्टतया लक्षणया 'सहचरण'शब्दस्य सदृशार्थबोधकत्वेन साहचर्यं सादृश्यमुच्यते। अथ सहचरणरूपसादृश्यग्रहणे दशरथापत्ययोरेव सहचरणात् तयोरेव 'रामलक्ष्मणौ' इत्यत्र ग्रहणं सिद्ध्यति, सादृश्यग्रहणे त्वेकस्य नियतत्वे हि तत्सादृश्यमन्यस्मिन् वाच्यमिति 'रामलक्ष्मणौ' इत्यत्र द्वयोरपि नानार्थकतया परस्परसादृश्यग्रहणेऽन्योन्याश्रय इति चेत्, उच्यते, "अपपरि०[2]" इति सूत्रस्थभाष्यप्रामाण्यात् सदृशयोरेव सहप्रयोगनियमेन युगपदेवोभयो. सादृश्यनियमनात्।

विरोधिता=विरोधः। अस्योदाहरणम् 'रामार्जुनगतिस्तयो.' इति। अत्र विरोधात् परशुरामकार्तवीर्ययोर्बोधः। अथ 'रामादिपदस्य भार्गवादावभिधानियमने विरोधः, विरोधश्च चाभिधानियमनम्' इत्यन्योन्याश्रय इति न; 'तयोः' इत्यत्र तत्पदस्य परस्परविरोध्यर्थप्रतिबिम्बनप्रयोजकत्वेन युगपदेव विरोधस्फूर्तेः।

अर्थः=प्रयोजनम्। अस्योदाहरणम्—'स्थाणुं वन्दे भवच्छिदे।' अत्र भवच्छेदनरूपप्रयोजनात् स्थाणुः=शिवः।

प्रकरणस्योदाहरणम्—'सैन्धवमानय'। भोजनकाले सैन्धवपदेन लवणबोधः, यात्राकाले अश्वबोधः। प्रकरणम्=वक्तृश्रोतृबुद्धिस्थता।

१. वा० प० का० २, का० ३१७-३१८। २. पा० सू० १।४।८८।

लिङ्गस्योदाहरणम्—'अक्ताः शर्करा उपदधाति' इत्यादौ 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गात् 'अक्ताः' इत्यस्य घृतसाधनाञ्जनपरत्वम्। क्षुद्रपाषाण प्राया. शर्करा.। यद्यपि 'अक्ताः' इत्यत्र न विशेषार्थो नापि 'तेजो वै घृतम्' इति विधि., तथापि 'यः स्तूयते, स विधीयते' इति न्यायेन विधायकत्वमप्यस्य कल्प्यम्। शर्करोपाधानञ्चाग्न्याधानार्थम्।

लिङ्गत्वञ्च संयोगातिरिक्तसम्बन्धेन सम्बद्धत्वे सति व्यावर्तकधर्मवत्त्वम्। नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षात् शब्दवेद्यो धर्म इति निष्कर्ष.। लौकिकमुदाहरणञ्च—'कुपितो मकरध्वज.' इत्यत्र समुद्रव्यावृत्तकोपरूपाल्लिङ्गात् 'मकरध्वजशब्देन कामो गृह्यते। लिङ्गं चिह्नमिति तु नात्र ग्राह्यम्, व्याप्यधर्मस्यैव चिह्नत्वात्, कोपस्य च कामव्याप्यत्वाभावात्।

सन्निधेरुदाहरणम्—'रामो जामदग्न्यः' इति। अत्र 'जामदग्न्य' पद-सन्निधानेन रामः = परशुरामो गृह्यते। अन्यस्य शब्दस्य सन्निधानञ्च नानार्थक-पदस्यैकार्थमात्रवाचकपदसमभिव्यवहारः।

सामर्थ्यस्योदाहरणम्—'अभिरूपाय कन्या देया' इति। अत्र सामर्थ्यात् 'अभिरूपतराय' इति प्रतीयते। सामर्थ्यम्—निर्दिष्टजननशक्ति., कारणता वा।

औचित्यस्योदाहरणम्—

'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याभ्या सर्वस्य कटुरेव स.॥'[१] इति।

अत्रौचित्यात् 'परशुना' इत्यस्यच्छेदनार्थत्वम्। औचिती = योग्यता।

देशस्योदाहरणम्—'भात्यत्र परमेश्वरः' इति। अत्र राजधानीरूपाद् देशात् 'परमेश्वर' पदं भूपतिबोधकम्, न तु ईश्वरबोधकम्। देशो ग्रामादि.। कालस्योदाहरणम्—'चित्रभानुर्भाति' इति। अत्र रात्रौ वह्निवाचकः, दिवा सूर्यवाचकः, चित्रभानुशब्दः। कालो दिवसादिः।

व्यक्तिः—पुंनपुंसकस्त्रीत्वानि। उदाहरणञ्च—'मित्रो भाति' 'मित्रं भाति' इति। अत्राद्ये सूर्यः, अन्त्ये च सुहृत्।

स्वरः—उदात्तादिः। उदाहरणञ्च 'स्थूलपृषतीम्' इति। स्थूला चासौ पृषती, तथा स्थूलानि पृषन्ति यस्यामिति संशये पूर्वप्रकृतिस्वरेण बहुव्रीह्यर्थ-निर्णयः।

'स्वरादयः' इत्यादिपदेन षत्वसत्वणत्वनत्वादीनि ग्राह्याणि। यथा 'सुषिक्तम्' इत्यत्रोपसर्गोऽन्यार्थः, 'सुसिक्तम्' इत्यत्र पूजार्थः सुः कर्मप्रवचनीयः। प्रणायकः =

१ वा० प० टी० का० २, का० ३१६।

= प्रणयनक्रियाकर्त्ता, णत्वात् । प्रनायक: = प्रगतनायकदेश:, णत्वाभावात् ।

क्वचिच्च प्रकरणादिनाऽर्थबोधानन्तरं वक्तुर्बोद्धव्यस्य च देवदत्तादेर्वैलक्षण्येन नवनवोन्मेषशालिन्या प्रतिभया च व्यङ्ग्योऽप्यर्थः प्रतीयते। यथा 'गतोऽस्तमर्क' इत्यादौ यदि वक्ता धार्मिक:, तर्हि तेन वाक्येन सन्ध्यावन्दनसमयो गम्यते, यदा बोद्धव्योऽपि तादृश:, तदापि स एवार्थो गम्यते। तयोर्दुष्टत्वे तु स्तेयाद्यवसरावगमो भवति। प्रतिभाशालिनामेव द्वितीयार्थबोधो नान्यथा।

एते च संयोगादय: शब्दार्थस्यानवच्छेदे = संशये, तदपाकरणद्वारा विशेषस्मृतिहेतव: = निर्णयहेतवो भवन्ति। शक्त्योपस्थितानामनेकेषामर्थानामेकतरमात्रार्थे तात्पर्यस्य निर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका भवन्तीति तात्पर्यम्।

सर्वमेतत् "बहुगणवतुडति संख्या[१]" इति सूत्रे भाष्ये स्पष्टम्।

तत्र हि अर्थात् 'प्रकरणाद् वा लोके कृत्रिमाकृत्रिमयो: कृत्रिमे कार्यसम्प्रत्ययो भवति' अर्थो वाऽस्यैवं संज्ञके न भवति, प्रकृतं वा तत्र भवति। इदमेवं संज्ञके न कर्त्तव्यमिति' अनेनभाष्येण स्पष्टमेव लभ्यते यदर्थसंशयेऽर्थात् प्रकरणाद् वा निर्णयो विधेय इति। तात्पर्यनिर्णायकाना संयोगादीनामपि तुल्यत्वादिदमुपलक्षणम्।

अत्र सामर्थ्यमेवैकं मुख्यं निर्णायकम्, संयोगादयस्तु तद्व्यञ्जकप्रपञ्च:। अस्येदं तात्पर्य यत् सामर्थ्यस्य शक्तिरूपत्वेन कारणतारूपत्वेन वा संयोगादीनां सामर्थ्यद्योतकत्वमेव। द्योतितञ्च सामर्थ्यमविवक्षितार्थविषयकतात्पर्यसंनिसन्धानं विवक्षितार्थविषयकमेव तात्पर्यमव धारयति। अतस्ते संयोगादिभि: सामर्थ्यस्यैवाभिव्यक्तिर्भवतीति तत्त्वविदो विदन्ति।

## ३. अनीश्वरवादिमीमांसकमतप्रत्याख्यानपुरस्सरं स्वमतप्रतिष्ठापनम्

वेदस्य नित्यत्वेन तत्कर्त्तुरप्यभावात् तत्र तात्पर्यकल्पनस्य शशविषाणायमानत्वेन वेदस्थले शाब्दबोधसम्पादनाय संयोगादीनामेव कारणत्वं कल्पनीयम्, न तु तात्पर्यज्ञानस्येति मीमांसकसिद्धान्तोऽपाक्रियते—

अयम्भाव:—लाघवात् शाब्दबोधसामान्यं प्रति तदर्थप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानसामान्यस्य कारणत्वसिद्धौ वेदवाक्याधीनशाब्दबोधस्थलेऽपि तत्प्रतीतीच्छयोच्चरितत्वात्मकतात्पर्यज्ञानरूपकारणसम्पत्त्यर्थं सर्वार्थदर्शी ईश्वरोऽनुमीयते। अनुमानप्रकारश्च—'वेदवाक्याधीनशाब्दबोध:, तदर्थतात्पर्यज्ञानजन्य:, शाब्दत्वात्, 'सैन्धवमानय' इति वाक्याधीनशाब्दवत्, इत्यनुमानात् तात्पर्यज्ञानसिद्धौ जीवानां तदसम्भवात् यस्य तादृशज्ञानम्, स एव ईश्वर:। एवञ्च वेदवाक्यस्थलेऽपि ईश्वरस्य तात्पर्यज्ञानं शाब्दबोधे कारणमिति सिद्धम्। ननु वैदिकवाक्य-

१. पा० सू० १।१।२३।

जन्यबोधे गुरोः 'अस्मात् पदादिदमर्थबोधो भवतु' इति तात्पर्यज्ञानमेव कारणं भवतु:; किमीश्वरस्कल्पनयेति चेत्, न, सृष्ट्यव्यवहितप्राक्काले जन्यद्रव्यसामान्याभावात्मकखण्डप्रलयसत्त्वात् तदानीमीश्वरातिरिक्ताध्यापकस्यैवाभावात् तत्तात्पर्याभावादीश्वरतात्पर्यस्यैव कल्पयितुं शक्यत्वात्। अथ जन्यद्रव्यानधिकरणात्मकखण्डप्रलय एवाप्रसिद्ध.। एवञ्च सर्गस्यादेरेवाप्रसिद्धत्वात् सर्वदा सर्गस्य सत्त्वात् तत्र तत्र विद्यमानानामध्यापकानां तात्पर्येणैव निर्वाहे ईश्वरकल्पनैव व्यर्थेति चेत्, सत्यम्, 'धाता यथापूर्वमकल्पयत्[१]' 'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्नचान्यत्[२]' इत्यागमप्रामाण्यात् प्रलयस्य सिद्धत्वेन सर्गीयप्राथमिकपुरुषसमवेतवेदवाक्याधीनशाब्दबोधं प्रति पुरुषान्तराप्रसक्त्या तादृशतात्पर्यज्ञानवत्तया ईश्वरसिद्धेर्निराबाधत्वात्।

शाब्दबोधसामान्यं प्रति तात्पर्यज्ञानत्वेन हेतुतासिद्धौ सत्या यत्र प्राणिमात्रोच्चारितस्वस्वभाषासंवादिवाक्याधीनशाब्दबोध, तत्रापि 'तादृशशुकाद्युदीरितवाक्यादेतदर्थबोधो भवतु' इति तद्भाषाप्रवर्तकेश्वरतात्पर्यज्ञानमेव कारणम्, अन्येषा वक्तुमशक्यत्वात्। न च शाब्दत्वावच्छिन्नान्तर्गतविफलप्रवृत्तिजनकशुकादिवाक्यबोधं प्रति कस्यापि तात्पर्यज्ञानस्य हेतुत्वाभावात् व्यतिरेकव्यभिचारः, न हि तत्र पुरुषान्तरीयतात्पर्यज्ञानस्य कारणत्वं सम्भवति, विनिगमनाविरहेण पुरुषविशेषस्य निर्णेतुमशक्यत्वात्, विसंवादित्वेन चेश्वरतात्पर्यस्यासंभवात् तात्पर्यज्ञानस्य कारणत्वं दूरापास्तमेवेति वाच्यम्; विफलप्रवृत्तिजनकशुकोच्चारितवाक्याधीनशाब्दबोधेऽपि शुकस्य वाक्योच्चारणसामर्थ्यसम्पादकपुरुषस्यैव शुकोच्चारित' 'सीताराम'शब्दात् 'सीताराम'बोधो भवतु' इति तात्पर्यज्ञानस्य कारणत्वात्, सीतारामशब्दात् शुकस्य बोधाभावात् विसंवादित्वस्य युक्तत्वात्। एवञ्च तत्रापि तात्पर्यज्ञानत्वेन हेतुतायाः सत्त्वात् कुतो व्यभिचारवार्ता अतो। न तात्पर्यज्ञानस्य कारणत्वानुपपत्तिः।

## ४. शाब्दसामान्यं प्रति तात्पर्यज्ञानस्याकारणत्वं वदतां गङ्गेशोपाध्यायानां मतनिरूपणम्

गृहीतनानार्थकपदघटितवाक्याधीनशाब्दबोधे गृहीतैकार्थशक्तिकगृहीतापरार्थलक्षणाकपदघटितवाक्याधीनशाब्दबोधे च क्वचिदेवावश्यकस्थलविशेषे एव तात्पर्यज्ञानं हेतुत्वेन कल्प्यम्। यथा लवणतात्पर्येणोक्ते 'सैन्धवमानय इत्यादौ। 'सैन्धवः प्रमेयः' इत्यादौ तु सैन्धवानां प्रमाविषयत्वबोधे क्षतेरभावात् तात्पर्यज्ञानस्य कारणत्वं निरर्थकमेव। एवम् 'गङ्गायां घोषः' इत्यत्रान्वयानुपपत्त्या लक्षणाज्ञानाधीनपदज्ञानजन्यपदार्थस्मृतया 'गङ्गासमीपतीरवृत्त्याभीरपल्ली' इति बोधात् तात्पर्य-

१ ऋक् सं० १०।१९०।३। २. वि० पु० अं० १ अ० २ श्लो० २३।

ज्ञानस्याकारणत्वं स्पष्टमेव। 'गङ्गाया घोषमत्स्यौ' इति वाक्ये तु गङ्गापदं प्रवाहतीरोभयतात्पर्येणोच्चारितमिति तात्पर्यज्ञानसहकृतशक्तिलक्षणाज्ञानाभ्यां जायमान-प्रवाहतीरस्मृत्या 'प्रवाहवृत्तिर्मत्स्यः, तीरवृत्तिर्घोषः' इत्याकारको बोधः सम्पद्यते। अतः शुकादिवाक्ये निष्प्रयोजनत्वात् सर्वथैव तात्पर्यज्ञानस्य कारणता नास्ति। संवाद्यसंवाद्युभयसाधारणशुकसामान्योच्चारितवाक्ये तदर्थप्रतीतीच्छयोच्चरिततत्वरूप-तात्पर्यज्ञानमन्तरैव तादृशवाक्याधीनशाब्दबोधो भवत्येव।

एवञ्च शाब्दबोधसामान्यं प्रति तात्पर्यज्ञानस्य हेतुत्वे मानाभावेन संवादि-शुकवाक्याधीनशाब्दबोधेऽपि तात्पर्यज्ञानस्य कारणत्वाप्रसक्त्या तद्धेतुतात्पर्यज्ञान-वत्तयेश्वरकल्पनमनुचितमेव।

अथेश्वराभावे 'व्रीहीनवहन्ति' इत्यत्र बहुत्वावच्छिन्नव्रीहौ द्वितीयाबहुवचना-न्तव्रीहिपदस्य 'कपिञ्जलानालभेत' इत्यत्र त्रित्वावच्छिन्नकपिञ्जले द्वितीयाबहुवचना-न्तकपिञ्जलपदस्य कस्यापि तात्पर्यज्ञानाभावात् वेदवाक्ये बोधकता न स्यादिति चेत्, मैवम्; वेदवाक्यघटकपदानान्तु आद्याना गौतमजैमिन्यादिमहर्षीणामबाधित-त्वेन निर्णीतैर्लाघवविपक्षाबाधकग्रहाद्यात्मकैस्तर्कैः सहकृतपदज्ञानैरेवार्थस्मरणे 'व्रीहीनवहन्ति' इति श्रुतिघटकबहुवचनस्य त्रित्वार्थकव्रीहित्रयावहननप्राप्त्या तावन्मात्रस्य च पुरोडाशचरुसाधकत्वाभावेन यागाऽनुपयुक्तत्वात्मकबाधकसत्त्वात् लाघवस्याकिञ्चित्करत्वेन त्रित्वार्थकत्वासंभवात् पुरोडाशाद्युपयोगिनो यावन्तो व्रीहयः, तावन्मात्रवृत्तिबहुत्वसंख्यार्थकत्वात्।

कपिञ्जलपदोत्तरबहुवचनस्य तु त्रित्वार्थकत्वे बाधकाभावेन बाधकाभाव-विशिष्टलाघवसत्त्वात् तत्र कारणसामग्र्या त्रित्वसंख्यार्थकत्वात्।

इत्येवं निर्वाहे वेदे तात्पर्यज्ञानार्थमीश्वरकल्पनमन्याय्यम्, किन्तु क्षित्यङ्कु-रादिकर्तृत्वेनेश्वरः साधनीयः।

## ५. गङ्गेशोपाध्यायसिद्धान्तसमीक्षणम्

श्रीमदुपाध्यायस्य सिद्धान्तोऽयं समीचीनविचारकोटिं नाधिरोहति प्रेक्षावताम्। यतो हि तात्पर्यज्ञानमन्तरा या या शाब्दबोधाभिव्यक्तिर्नोपपद्यते तां तां शाब्दबोध-व्यक्तिं प्रति तस्यता तस्याः तात्पर्यव्यक्तेर्विशिष्यकारणताकल्पनमननुगममूलकं गौरवं स्यात्। प्रत्युत, गृहीतनानार्थवृत्तिकपदज्ञानजन्यानुभवत्वापेक्षया पदज्ञान-जन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वकल्पने लाघवम्।

वस्तुतस्तु—मनुष्यादिवर्णात्मिकभाषासु प्रतिदिनमनुभूयते यत् अर्थबोधेच्छां विना कस्यापि पुरुषस्य प्रवृत्तिर्न भवति। अतस्तात्पर्यज्ञानस्य वाक्यार्थबोधं प्रति

कारणता निष्प्रत्यूहैव। वेदवाक्यानामपि निश्चितार्थे तात्पर्यनिर्णयार्थमेव गौतम-जैमिन्यादितर्काणां प्रवृत्तेरीश्वरतात्पर्यस्य तत्रावश्यकत्वात्।

वानरगोशुकादीना भाषासु तु 'किल-किल' 'मां' 'चिक्चिक' आद्यस्पष्टाक्षरान्वितशब्दप्रयोगात् तेषा वाक्ये च तात्पर्यज्ञानमत्यावश्यकम्। अन्यथा समानानुपूर्वीकतया प्रतीयमानेन तदीयवाक्येनानेकविधा प्रवृत्तिस्तेषां नोपपद्येतेति सर्वत्र तात्पर्यज्ञानस्य कारणत्वं प्रेक्षावद्भिः कल्पनीयमेवेति।

## ६. शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणत्वाभावप्रदर्शकं नागेशमतम्

"बहुगणवतुडति संख्या[१]" इतिसूत्रभाष्यात् तात्पर्यज्ञानस्य कारणत्वं शाब्दिका न सहन्ते। तथा हि—तत्र लोके प्रसिद्धानां पञ्चादीनां संख्यासंज्ञार्थ संख्याग्रहणं कर्त्तव्यमिति सन्दिह्य 'नार्थः संख्याग्रहणेन, ननु चोक्तम्—इतरथा हि असंप्रत्ययः, अकृत्रिमत्वात्, यथा लोके इति। नैष दोषः, अर्थात् प्रकरणाद् वा लोके 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति' अर्थो वाऽस्यैवं संज्ञकेन भवति, प्रकृतं वा तत्र भवति, इदमेवं संज्ञकेन कर्तव्यमिति। आतश्चार्थात् प्रकरणाद् वा—अङ्ग हि भवान् ग्राम्यं पाशुलपादमप्रकरणज्ञमागतं ब्रवीतु—'गोपालकमानय' 'कटजकमानय' इत्युभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति' इति। अत्र 'उभयगतिस्तस्य भवति' इत्यंशस्यापाततोऽपि पर्यालोचनेन स्फुटं प्रतीयते यत् तात्पर्यज्ञानाभावेऽपि शाब्दबोधो निष्पद्यते इति तात्पर्यज्ञानस्य कारणत्वं नास्त्येव।

यदि 'उभयगतिः' इत्यनेन तादृशस्थले पदार्थोपस्थितिरेव, न तु शाब्दबोध इत्युच्यते, तदा 'पय आनय' इतिवत् 'पयः कर्मत्वम् आनयनम् प्रेरणा' इति पदसमुदायस्थलेऽपि उक्तवाक्यस्थल इव पदार्थोपस्थितेस्तुल्यत्वात् शाब्दबोधापत्तिः। सर्वत्रैवमापत्तौ शाब्दबोधोच्छेदापत्तिश्च। एतादृशस्थले मानस एव बोधः, उपस्थितपदार्थानां संसर्गाभावाज्ञानमात्रेण प्रश्नादेरुपपत्तिश्चेत्यपि न, संसर्गज्ञानविशिष्टशब्दजन्यमानसबोधस्यैव शाब्दबुद्धित्वात्, 'शाब्दयामि' इत्यनुव्यवसायदर्शनाच्च।

## ७. तात्पर्यस्य शाब्दिकनये शाब्दज्ञाने प्रामाण्यप्रयोजकत्वनिरूपणम्

अयम्भावः—भाष्यप्रामाण्यात् तात्पर्यस्य शाब्दबोधं प्रति हेतुत्वं नास्ति, किन्तु शाब्दज्ञाने प्रामाण्यनिश्चयद्वारा प्रकरणाद्यनुगृहीतस्य तस्य प्रवृत्तावुपयोगः। क्वचिच्चानेकपदार्थस्यान्वययोग्ये 'द्वारम्' इत्यादौ 'पिधेहि' 'विवृणु' इत्यनयोर्द्वयोरप्यध्याहारे प्रसक्ते विवृते द्वारे 'द्वारम्' इत्युक्तौ विवरणस्य स्वतः सिद्धत्वात् 'पिधेहि' इत्यस्यैवाध्याहारायाप्युपयोगः।

---

१. पा१ सू० १।१।२३।

अथ तात्पर्यज्ञानस्य बोधहेतुत्वपक्षे 'गेहे सैन्धवमस्ति' इति वाक्येनाश्व-विषयकतात्पर्यग्राहकसामग्रीसत्त्वेऽश्वविषयकबोधरूपप्रतिबन्धकवशादश्वविषयकसन्देहाभावेऽपि लवणविषयकनिश्चयरूपप्रतिबन्धकाभावाल्लवणविषयकसन्देहो जायते। तात्पर्यज्ञानस्य बोधं प्रति कारणत्वाभावे तु उक्तवाक्यात् पदार्थोपस्थित्यादि-कारणसत्त्वादुभयविषयकबोधे जाते उभयविषयकसन्देहस्योक्तबोधरूपप्रतिबन्धक-सत्त्वात् 'गेहे लवणमस्ति न वा' इति संशयो न स्यादिति चेत्, उच्यते, तात्पर्य-वशादश्वविषयकबोधे प्रामाण्यनिश्चये अश्वेतरलवणविषयकज्ञाने अप्रामाण्यबुद्ध्यु-दयेन लवणविषयकनिश्चयात्मकज्ञानरूपप्रतिबन्धकाभावेन संशयोच्छेदात्।

तद्विषयकतात्पर्याभावज्ञानान्यविषयकतात्पर्यज्ञानयोः सत्त्वे तद्विषयक-बोधादर्शनात् तद्विषयकबोधं प्रति उक्तज्ञानयोः प्रतिबन्धकत्वमपि नास्ति किन्तु तत्परत्वाभावज्ञानान्यपरत्वज्ञानयोरपि तद्बोधेऽप्रामाण्यग्रहजनकतैव। एवञ्च क्वचिदप्रामाण्यग्राहकत्वम्, क्वचिच्च प्रतिबन्धकत्वमिति वैरूप्यमप्येतन्मते नास्ति।

## आकाङ्क्षादिसहकृतशब्दनिष्ठशक्तिज्ञानजन्यशाब्दबोधविषयीभूतार्थस्वरूप-निरूपणम्

शब्दस्वरूपतन्निष्ठशक्तिस्वरूपनिरूपणप्रस्तावे 'सिद्धे शब्दार्थसम्बन्धे[1]' इति भाष्यवार्तिकमुपक्रम्य सिद्धस्य=नित्यस्य; अखण्डात्मकवाक्यस्फोटस्य तन्निष्ठायाश्च शक्तेः स्वरूपं निरूप्य वादिनामनेके पक्षाः प्रदर्शिताः, तत्समर्थकयुक्तयोऽपि साधक-बाधकप्रमाणाभ्यां निरूपिताः। तयोः स्वरूपनिरूपणानन्तरमर्थस्वरूपनिरूपणमव-शिष्यतेऽधुना। तन्निरूपयितुमुपक्रम्मते—

अर्थविषयेऽपि वादिनां सन्त्यनेके पक्षाः। तेऽपि तत्तच्छास्त्रवासनावशात् कल्पिता एव। यथा मीमांसकेषु कुमारिलभट्टोऽभिहितान्वयवादी संसर्गमेव वाक्यार्थं मनुते, अन्विताभिधानवादी प्रभाकरस्तु संसर्गं पदार्थं स्वीकरोति, शाब्दिकाश्च प्रतिभां वाक्यार्थमुररीकुर्वन्ति। एवम् 'जातिः पदार्थः' व्यक्तिर्वा, इत्यादि। तथा चोक्तम्—

> एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
> नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः॥[2] इति।

अत एव 'घटः' इति प्रयुक्ते वैशेषिकोऽतिरिक्तमवयविनं बुध्यते, गुणसमूहं= सांख्यः, परमाणुसमूहं बौद्धादिः। यद्यपि ऋषीणां दर्शनं तत्त्वविषयकं भवति,

---

१. पस्प० भा० वा०। २. वै० भू० सा० का० २५।

तत्त्वञ्चैकमेव न तु भिन्नमिति महान् तावान् भेदः परिलक्ष्यते, तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवात् व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा नानाप्रकारैर्व्यवहरन्तीति भेदः परिलक्ष्येतैव।

## १. अभिहितान्वयवादिमीमांसकमतप्रदर्शनम्

अयमभिप्रायः—पदानामप्यर्थवत्त्वे पदार्थमात्रनिरूपितैव शक्तिस्तेषु, न तु संसर्गांशनिरूपिता, एकपदार्थनिरूपितसंबन्धानामानन्त्येन तत्र शक्तिकल्पने गौरवात्, आकाङ्क्षालभ्यत्वेन 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायाच्च। एवञ्च पदात् प्रथमं पदार्थमात्रोपस्थितिः' पश्चादाकाङ्क्षादिवशात् संबन्धांशरूपवाक्यार्थस्योपस्थितिः। तथा च तात्पर्यवशादशक्य एव संबन्धांशरूपो वाक्यार्थः शाब्दबोधे प्रतीयते। तदुक्तं भाष्ये—'यदाधिक्यं स वाक्यार्थः' इति। न चाशक्यस्य शाब्दविषयत्वे घटपदादेकसम्बन्धिविधयोपस्थितस्याकाशस्यापि शाब्दबोधविषयत्वरूपातिप्रसङ्गः स्यादिति वाच्यम्, स्वरूपसतः शक्यार्थान्वयस्य शाब्दबोधे नियामकत्वात्।

अत्रायं निष्कर्षः—अभिहितानाम् = स्वस्वपदैरुपस्थितानामर्थानामन्वयोऽभिहितान्वयः इति भाट्टमीमासकाः। अत एवाभिहितान्वयवादिन एते। एतन्मते तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानस्य कारणत्वम्। तथा च संसर्गे प्रकारताया विशेष्यताया वाऽसत्त्वेन शक्तिज्ञानविषयस्यैव प्रकारतया विशेष्यतया वा भाननियमेन शक्तिज्ञानविषयत्वाभावेऽपि न क्षतिः, आकाङ्क्षादिनैवान्वयबोधसम्भवात्, संसर्गविशेषबोधायाभिहितान्वयवादिनोऽप्याकाङ्क्षाज्ञानकारणत्वस्यावश्यकत्वात्। एवञ्च 'संसर्गो वाक्यार्थः' इति समीचीनमेव। आकाङ्क्षादिमत्पदसमूहस्यैव वाक्यत्वात् 'आकाङ्क्षाभाष्यः संसर्गः' इत्यपि व्यवहारस्तत्र।

## २. भाट्टमतप्रत्याख्यानप्रकारप्रदर्शनम्

'संसर्गो वाक्यार्थः' इति विचारो विदुषां मनांसि नावर्जयति। यतो हि पदानामाशुविनाशित्वेन समुदायासम्भवात् वाक्यस्यैवाभावात्। न च स्मृतिविषयतया समुदायसम्भव इति वाच्यम्, एवमपि सामान्येऽवस्थितानां पदाना विशेषेऽवस्थानस्य दुरुपपादत्वात्, अशक्यस्याप्युपस्थितौ शब्दार्थसंबन्धस्यानियतापत्तेश्च। वाक्यार्थस्य शाब्दविषयत्वाभावे पदार्थोऽपि शाब्दाविषय एव स्यात्, वर्णानामाशुविनाशित्वात्।

अन्विताभिधानवादिनः प्राभाकरास्तु—स्वार्थप्रतियोगिकपरार्थानुयोगिक-सम्बन्धविशिष्टानामर्थानामभिधानमन्विताभिधानमिति अन्विताभिधानवादिन एते। 'देवदत्त गामानय' इत्युत्तमवृद्धवाक्यप्रयोगाद् देशात् देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद् वाक्यादयमर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावरूपं सम्बन्ध-मवधार्य व्युत्पद्यते तटस्थः। ततस्तेनैवोत्तमेन 'चैत्र अश्वमानय' 'देवदत्त गां नय' इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्धारे च यस्य पदस्य येनार्थेन सहान्वयव्यतिरेकौ उपलभते, तत्र तस्य शक्तिं निश्चिनोति।

तच्च शक्त्यवधारणमन्विते एव पदार्थे, पूर्वमन्वयएव वाक्यस्य शक्तिग्रहात्, पदार्थमात्रे शक्तावुपजीव्यविरोधात्, व्यवहारेणान्वयविशिष्टज्ञानस्यैवोपस्थापनाच्च। न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः व्यवहारेणैवाद्यव्युत्पत्तेः, प्रवृत्तिनिवृत्तिरूपस्य च व्यवहारस्य पदमात्रेण कर्त्तुमशक्यत्वात्। अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु शक्तिग्रहादन्विता एव पदशक्याः। एतन्मते 'तद्विषयकशाब्दबोधं प्रति तद्विषयकशक्तिज्ञानं कारणम्' इत्येव कार्यकारणभाव इति संसर्गविषयकबोधं प्रत्यपि शक्तिज्ञानस्य कारणत्वमपेक्षितम्। ननु तथापि संसर्गविशेषोऽशक्य एव पदार्थसामान्यान्वित एव शक्तिग्रहात्। अन्यथा 'गामानय' इति पदं श्रुत्वा 'अश्वमानय' इति वाक्ये 'तदेवेदमानयपदम्' इत्यादिप्रत्यभिज्ञा न स्यात्, पूर्वस्य गवान्वितानयपदस्य अश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन भेदादिति चेत्, न; पदार्थत्वेन सामान्येन विशेषाणामन्वये शक्तिग्रहात्। 'नहि निर्विशेषं सामान्यम्' इत्याहुः। एवञ्चैतन्मतेऽपि सामान्यरूपेणैव संसर्गः पदशक्यः, विशेषरूपेण तु पदशक्यो वाक्यशक्य एव।

## ३. अभिहितान्वयान्विताभिधानवादिसिद्धान्तसमीक्षा

वस्तुतस्तु—अभिहितान्वयवादिमतमेव ज्यायः। यतो हि—विधिवाक्यात् कार्यान्वितत्वेन बोधेऽपि कार्यांशत्यागवत् अन्वयांशत्यागस्याप्याकाङ्क्षादिलभ्यत्वेन 'अनन्य लभ्योहि शब्दार्थः' इति न्यायेनौचित्यम्। किञ्च, अन्वयविशेषस्य विशेषरूपेण भानाय आकाङ्क्षादिकमवश्यं कारणं वाच्यम्। एवञ्चैतन्मतेऽपि विशेषरूपेण संसर्गः शक्य एव।

किञ्च, संसर्गस्यापि प्राक्पदेनोपस्थितावगृहीतग्राहित्वरूपं प्रामाण्यं शब्दस्य भज्येतैव, अन्वयव्यतिरेकाभ्यां तस्यान्यलभ्यत्वाच्च। न च लक्षणा, लक्षणाप्रयोजक-शक्यार्थान्वयबाधादीनामसत्त्वात्। इति तत्त्वम्।

यथा बलवता प्रेरित इषुर्यथा एकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणापहरणं च रिपोर्विधत्ते, तथैक एव शब्दोऽभिधाख्यव्यापारेण पदार्थोपस्थितिं वाक्यार्थबोधञ्च जनयेत्, 'यत्परः, शब्दः, स शब्दार्थः' इति न्यायात् इत्यपि वक्तुं न शक्यते, 'यत्परः शब्दः' इत्यस्य हि उपात्तशब्दशक्यार्थेषु यदंशे विधेयत्वम्, तत्र वाक्यतात्पर्यम् यत्र तात्पर्यम्, स शब्दार्थः, तदंशे शब्दस्यानधितार्थगतत्वरूपं प्रामाण्यम्। ननु यत्तात्पर्येण शब्दः, स शब्दार्थ इति चेत्, मैवम्, तात्पर्यस्यानियतत्वेन शक्तेरप्यनियतत्वापत्तेः।

ननु मीमांसकमते विधेयत्वं प्रवर्तनारूपविधिविषयत्वम्। तच्च क्रियाया एव न द्रव्याद्रव्यादेरिति 'दध्ना जुहोति' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ लोहितोष्णीषत्वस्य दधिकरणत्वस्य च विधेयत्वं न स्यादिति चेत्, न, भूतभव्यसमुच्चारणे 'भूतं भव्यायोपदिश्यते' इति न्यायेन सिद्धसाध्ययोः समभिव्याहारे कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि साध्यक्रियावैशिष्ट्येन साध्या इव भवन्ति। तथा च 'अदग्धदहन' न्यायेन पूर्ववाक्यात् प्रचरणस्य हवनस्य च प्राप्तत्वात् लोहितोष्णीषत्वं दध्नः करणत्वं च विधेयम्। विधेयता च तत्रारोपितैव न वास्तविकी।

## ४ शाब्दिकसम्मतं प्रतिभाया वाक्यार्थत्वं निरूप्यते

इदमत्राकूतम्—शाब्दिकैः वाक्यस्फोट एव सिद्धान्तत्वेन स्वीक्रियते। वाक्यस्फोटस्य चाखण्डत्वं तैरभ्युपगम्यते। एवञ्च पदपदार्थयोरभावात् क्रियापदस्य कारकपदस्य चासत्त्वात् 'क्रियाकारकभावरूपसम्बन्ध एव वाक्यार्थः' व्यवहारोऽयं खपुष्पायेतेति तैः प्रतिभाया वाक्यार्थत्वं स्वीक्रियते। समर्थयते चामुमर्थं महावैयाकरणो भर्तृहरिः—

'विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥'[1] इति।

अस्यार्थः—विच्छिन्नेभ्यो देवदत्तादिपदेभ्यः, तदर्थानां विच्छेदेनैव ग्रहणे प्रत्ययवेलायामेका पदार्थमतिव्यतिरिक्तैव प्रतिभा जायते। ताञ्च वाक्यार्थं वैयाकरणा आहुः। तस्याः प्रतिभाया उपायमाह—'पदार्थैः' इति। असत्यैरेवोपाधिभूतैः पदार्थैः उपपादिताम् = अभिव्यक्ताम्।

---

1. वा० प० २. का० १४५।

'देवदत्तो ग्रामं गच्छति' इति वाक्ये देवदत्तादिपदानां पृथक् पृथक् अर्थे ज्ञायमाने पदार्थविषयकज्ञानातिरिक्ता, असत्यैरेवोपाधिभूतैः पदार्थैरभिव्यक्ता विलक्षणा काचन प्रतिभोपजायते। ताञ्च प्रतिभां शाब्दिकाः वाक्यार्थं वदन्ति। एवञ्च पदार्थस्यासत्यत्वम्, वाक्यार्थस्य च सत्यत्वं सूचितमिति निष्कर्षः।

प्रतिभायाः स्वरूपमाह—

"इदं तदिति सान्येषामनाख्येया कथञ्चन।
प्रत्यात्मवृत्तिसिद्धा सा कर्माणि न निरूप्यते॥[1] इति।

उपजायमाना सा च प्रतिभाऽन्यस्याख्यातुं न शक्यते, किन्तु स्वसंवेदनसिद्धैव। अर्थात्—समुत्पन्नाऽपि सा स्वसंवेदनसमये 'इदमाकारिका इयम्' इति विशिष्या-न्यस्य निरूपयितुं न शक्यते।

प्रतिभायाः स्वभावमाह—

"उपश्लेषमिवार्थानां सा करोत्यविचारिता।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते॥[2] इति।

असंसृष्टानां पदार्थानामियं प्रतिभाऽज्ञातापि उपश्लेषम्=मेलनं करोति। सर्वप्रकारके च वाक्येऽसौ पदार्थानां विषयो भवति।

प्राणिमात्रमपि तां प्रतिभां नातिवर्तत इत्याह—

"साक्षाच्छब्देन जनिता भावनानुगमेन वा।
इति कर्त्तव्यतायां ता न कश्चिदतिवर्तते॥[3] इति।

कदाचित् सा व्यवहारकाले साक्षाच्छब्देन जन्यते, कदाचिच्च जन्मान्तर-भावनावशेन। गजवाजिप्रभृतीनां सर्वेषामपि तन्मूल एव सर्वव्यवहारः।

इयञ्च प्रतिभा सर्वस्य सिद्धैवेत्याह—

"यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्॥[4] इति।

यथा मनुष्यादीनां काचन प्रवृत्तिः शिक्षामन्तरैव सम्पद्यते, तस्याश्च परिज्ञानं परिणामैः भवति, तथैव पशुपक्षिणामपि प्रयत्नाः केनाप्यशिक्षिताः जन्मान्तर-

१. वा० प० २, का० १४६।
२. वा० प० २, का० १४।
३. वा० प० २, का० १४।
४. वा० प० २, का० १४६।

संस्कारवशादुत्पद्यन्ते। अन्तःकरणवृत्तिविशेषरूपा चेयं प्रतिभा एतज्जन्मसंस्कारजा जन्मान्तरसंस्कारजाऽपि। समर्थयते चामुमर्थं भर्तृहरिः—

"स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः।
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः॥"[1] इति।

मधुमासे पञ्चमस्वरविरावः केन शिक्षितः? लूतातन्तूनां कुलायरचना च प्रतिभामाहात्म्यादेव जायते।

एवञ्च 'अखण्डः स्फोटलक्षण एकः शब्दो वाक्यम्, प्रतिभा च वाक्यार्थः, अध्यास एव सम्बन्धः, वाच्यवाचकभावापरपर्याया शक्तिः, तस्या ज्ञापकमितरेतराध्यासमूलं तादात्म्यम्' इति फलितम्।

इति पञ्चमोऽध्यायः॥



१. वा० का० २, का० १५१।

# उपसंहारः

## वृत्तिसामान्यस्वरूपप्रतिपादनम्

तत्तद्भाषाविद्भिरपि प्रतिदिनं तत्तद्भाषाणामनेके शब्दाः सम्यक् श्रावण-प्रत्यक्षविषया विधीयन्ते, किन्तु तथाविधा अपि ते सर्वे शब्दाः सर्वमर्थं न गोचरयन्ति। तेषु केचिदेव काश्चिदेव कदाचिदेव। तद्यथा—साधु श्रुतिविषयतां गतमपि गङ्गापदं प्रवाहमेवार्थं बोधयति न तत्तीरे चरतो गवादीन्, नापि तत्तीररुहान् वृक्षादीन् वा। अतस्तत्र केनापि महता हेतुना भवितव्यम्। अन्विष्यमाणे कारणेऽन्वयव्यतिरेकाभ्यामिदमेव कारणं हस्तगतं भवति यत् यमर्थं यत्पदमवभासयति, तेनार्थेन साकं तस्य पदस्य कश्चन सम्बन्धोऽवश्यं स्यादेव। अन्यथा तमेवार्थं कथमवगमयति, अर्थान्तरमप्यवगमयेत्। लोके दृष्टचरमप्येतद् यत् चक्षुरादीनि प्रमाणानि सम्बद्धमेवार्थं घटपटादिकं प्रकाशयति, नासम्बद्धम्। शब्दोऽपि अन्यतमत् प्रमाणमिति सम्बद्धमेवार्थमवभासयेत्। अत एव ते ते शब्दा घटादयस्तान् तान् कम्बुग्रीवादिमदर्थानेव प्रबोधयन्ति सम्बद्धत्वात्, असम्बद्धत्वात् पटादीन् नेति शब्दार्थयोः कश्चन सम्बन्धः कल्पनीय एव। अयमेव च सम्बन्धो वृत्तिपदेन शब्दव्यापारादिपदेन चोच्यत इत्यादि विस्तरेणोपक्रमे प्रतिपादितम्।

## वृत्त्याश्रयशब्दस्वरूपप्रतिपादनम्

अयञ्च प्रागुक्तः सम्बन्धो यत्र अर्थविषयकबोधनिष्ठजन्यतानिरूपितजनकताख्य-विषयताश्रयत्वसम्बन्धेन तिष्ठेत्, स वाचकः शब्दः, यत्र च अर्थविषयक-जन्यतावद्बोधनिष्ठविषयितानिरूपितविषयताश्रयत्वसम्बन्धेन तिष्ठेत्, स वाच्योऽर्थः। इदञ्च तार्किकमतम्। शाब्दिकमते स्वरूपसम्बन्धेन उक्तसम्बन्धाश्रयत्वं वाचकत्वम्, निरूपकतासम्बन्धेन उक्तसम्बन्धाश्रयत्वं वाच्यत्वम्।

वृत्तेरस्या आश्रयो वर्णाः सन्तीति मीमांसका मन्यन्ते। तन्न समीचीनम्। तथा हि—यदि प्रत्येकं वर्णाः पर्याप्तिसम्बन्धेन वृत्त्याश्रयः, तर्हि द्वितीयादिवर्णो-च्चारणस्य व्यर्थता संपद्येत। वर्णसङ्घातस्यापि वृत्त्याश्रयत्वं न सम्भवति, योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमाद् युगपद् वर्णसमुदायासम्भवेन

वर्णसङ्घातस्य वाचकत्वस्य खपुष्पायमाणत्वाद्, वर्णनित्यत्ववादिनां मतेऽभिव्यक्तेः, वर्णानित्यत्ववादिनां मत उत्पत्तेर्वा क्षणस्थायित्वात् क्षणात्मककालस्य प्रत्यक्षा-योग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात्। अत्र क्षणशब्देन तदाधारः कालो ग्राह्यः। क्षणो नाम शब्दतन्मात्राद्वारा प्रकृतेः परिणामविशेषः क्षणधारारूपकालस्य परमापकर्षाऽवधिः। यथा परमाणुरवयवधारायाः परमापकर्षावधिः। स च न प्रत्यक्ष इति तदधिकरणवर्णस्यापि प्रत्यक्षत्वानुपपत्तिः।

अत्र तार्किकाः—वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्व-मव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वात् शाब्दबोधः।

यद्वा, यथोत्पन्ना वीचिर्वीच्यन्तरमुत्पादयति, तथैव शब्दाच्छब्दान्तरोत्पत्तिः।

एवं क्रमेण श्रोत्रदेशपर्यन्तं गतः शब्दः श्रोत्रेण गृह्यते, स एव तज्जन्य-प्रत्यक्षगोचरः। गृहस्थः शब्दः श्रूयते इति साजात्येन व्यवहारः। एतावानेव तत्र विशेषो यद् वीचयो वीच्यन्तरमुत्पाद्य नश्यन्ति, वर्णास्तु चरमवर्णोत्पत्तिपर्यन्तं सजातीयवर्णानुत्पादयन्त एव तिष्ठन्तीति युगपदेव सर्ववर्णोपलब्धिः सुलभेत्याहुः।

नैतत् सारम्—आद्ये नष्टविद्यमानयोः पौर्वापर्यस्य वक्तुमशक्यत्वेन, द्वितीये च युगपदेवोत्पन्नत्वेन तदसम्भवात्।

अथ च येन क्रमेणानुभवः, तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगम-काभावात् 'सरो रसः, नदी दीनः' इत्यादौ विपरीतसंस्काराद् बोधेन प्रत्येकमन्यार्थ-प्रत्ययापत्तिः स्यात्।

एवञ्च पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः। तदुक्तं हरिणा— 'अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्[१]' इति।

पदसमुदायरूपवाक्यस्यैव वर्णसमुदायरूपपदस्याप्यभावः स्यात्। तथा च महत्यामस्यां विप्रतिपत्तौ को नाम वृत्त्याश्रयः शब्द इति प्रश्ने स्फोटात्मकः शब्द इत्युत्तरम्।

अयञ्च स्फोटः शाब्दिकैः परमसिद्धान्तत्वेनाभिमतः। शास्त्रान्तरेष्वप्यस्य महती चर्चा श्रूयते। प्रकृतशोधप्रबन्धे चायमेव शब्दस्वरूपत्वेनाङ्गीकृत इति तस्य स्वरूपं किञ्चित् संक्षिप्योपस्थाप्यते।

१. वा० प० २।१६।

परा, पश्यन्ती, मध्यमा, वैखरी चेति चतुर्विधा वाक् सिद्धान्तत्वेनाङ्गी-क्रियते। तत्र मूलाधारस्थपवनसंस्कृता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। मूलाधारलक्षणन्तु—षण्णवत्यङ्गुलो देहायामः—

तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमधः।
उपरि च परित्यज्यैकाङ्गुलपरिमितं मूलाधारः[१] ॥

तदुक्तम्—

पायुवन्ताद्द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते ॥
गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥
आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम्[२] ॥

मूलाधार एव पवन उत्पद्यते। तदुक्तम्—

'देहेऽपि मूलाधारे तु समुदेति समीरणः[३]।'

नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद् द्वयं वाग्ब्रह्म योगिना समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते।

ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोट-रूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते।

तत्र आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तस्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरीवागुच्यते।

तदाह—

परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥ इति।

---

१. पा० यो० द०।
२ संगी० र० १।२।११९, १२०, १४५।
२. प्रपञ्चसा० तं० पट० १२ श्लो० ६१।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः। वैखरीनादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः।

मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च। तदाह हरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1] ॥ इति।

स च यद्यप्येकोऽखण्डश्च, तथापि पदं वाक्यं जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जकोपरागवशाद् लोहितः पीतः स्फटिक इति ज्ञानवद् वर्णव्यङ्ग्यो वर्णरूपः, पदव्यङ्ग्यः पदरूपः, वाक्यव्यङ्ग्यो वाक्यरूपश्च। तदुक्तम्—

पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन[2] ॥ इति।

अथ च बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् व्यञ्जकध्वनिगतकत्वगत्वादिकं स्फोटात्मके शब्दे भासते। यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदः। एवं स्फोटो व्यञ्जकध्वनिगतकत्वादिभानात् ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः। उपाधिः घटकत्वादिर्भिन्नः, उपधेयस्तु आकाशस्फोटादिरेक एवेति भावः।

इदमत्र रहस्यम्—प्राकृतो वैकृतश्चेति द्विविधो ध्वनिः। तत्र प्राकृतध्वनिं विना सामान्यरूपेण विशेषरूपेण वा स्फोटो नैव भासते इति प्राकृतध्वनिव्यतिरेकेण स्फोटानुपलम्भात् प्राकृतध्वनि स्फोटस्वरूपमिव मन्यन्ते शाब्दिकाः। प्राकृतध्वनिरेव च ह्रस्वदीर्घप्लुतादिभेदव्यवहारहेतुरिति प्राकृतध्वनिगतकालभेदस्य प्राकृतध्वन्यभिन्नत्वेन प्रतीते स्फोटे बाधकाभाव इति 'अत्' इत्युच्चारणे अतत्कालस्य दीर्घादेर्व्यावृत्तिर्युक्ता। वैकृतध्वनिस्तु प्राकृतध्वनिप्रतीतं स्फोटमुत्तरकालं स एवायम् इत्युल्लेखेन चिरकालमुपलम्भयतीति स्फोटप्रतीत्युत्तरकालभावितया स्फोटवैलक्षण्येनावभासमानो द्रुतादीनां वृत्तीनां भेदे कारणमिति तद्गतकालभेदस्य तद्भिन्नत्वेन प्रतीते स्फोटे न प्रतीतिरिति वैकृतध्वनिभिः स्फोटो न भिद्यते। हरिरप्याह—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृतः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते[3] ॥ इति।

---

१. वा० प० १।१। २. वा० प० १।७३। ३. वा० प० १।७७।

ननु यद्ययं स्फोटात्मको वृत्त्याश्रयः शब्दो नित्यः, तर्हि कुतो न सर्वदोपलभ्यते इति चेत्, इत्थम्—'स एवायमकार' इति प्रत्यभिज्ञानात् स्फोटस्य नित्यत्वे सिद्धे सर्वदा तदुपलम्भाभावो व्यञ्जकाभावकृतः, न तु स्वभावकृतः। यथा मेघान्धकारे विद्युज्जनिता घटबुद्धिर्न चिरमनुवर्तते। तत्र व्यञ्जकाभाव एव कारणम्, न तु घटाभावः कारणम्। तपरसूत्रे भाष्यकृतापि समर्थितमेतत् स्फोटः शब्दः, ध्वनि शब्दगुण इति[१]।

स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसारणद्वारा स्वधर्मरूषिततदुपलब्धि-हेतुत्वेन ध्वनिः स्फोटाख्यस्य शब्दस्य गुणः—उपकारक इति भाष्यतात्पर्यम्।

शोधप्रबन्धेऽस्मिन् वृत्त्याश्रयत्वेन विवक्षितं शब्दस्वरूपं समासतोऽत्र निबद्धम्। विस्तरस्तु तत्र तत्र प्रकरणे भूमिकायाञ्च द्रष्टव्यः।

## वृत्तिभेदस्वरूपप्रतिपादनम्

**शक्तिविचारः—**

शब्दस्य प्रमाजनकत्वे सर्वैः शब्दैः सर्वेषां श्रोतृणां श्रवणमात्रेण बोधः स्यादिति तन्निष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यताकबोधं प्रति तन्निष्ठप्रकारतानिरूपिततन्निष्ठ-विशेष्यतावन्निरूपितवृत्तिज्ञानं कारणं स्वीक्रियते। यथा घटत्वप्रकारकघटविशेष्यकबोधे घटत्वप्रकारकघटविशेष्यकवृत्तिज्ञानस्य हेतुत्वेन घटपदान्न पटादिबोधः। नापि घटप्रकारकघटत्वविशेष्यको बोधः, नाप्यज्ञातवृत्तिकात् तस्माद् बोधः। एतादृशकार्य-कारणभावस्वीकारेण गुडत्वप्रकारकगुडविशेष्यकवृत्तिज्ञानेन मधुरत्वप्रकारकबोधो न भवति।

सा च वृत्तिः शक्तिलक्षणाव्यञ्जनान्यतमरूपा। तत्र ईश्वरेच्छारूपा शक्तिरिति प्राचीनतार्किकाः। तेषां नये आधुनिकसंकेतेऽपि शक्तिरस्त्येव, 'एकादशेऽहनि पिता नाम कुर्यात्' इति ईश्वरेच्छायास्तत्रापि सत्त्वात्।

सम्प्रदायविदस्तु–आधुनिकसंकेते न शक्तिरिति मन्यन्ते। नवीनतार्किकास्तु इच्छामात्रं शक्तिर्न त्वीश्वरेच्छा। एवञ्चाधुनिकसंकेतेऽपि शक्तिरस्त्येवेति स्वीकुर्वन्ति। तत्र शक्तिस्तावन्न ईश्वरेच्छारूपा, इच्छारूपा वा, शक्तेः पदपदार्थयोः सम्बन्धरूपत्वेन इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात्। अस्मा-च्छब्दादयमर्थो बोद्धव्यः, इदं पदममुमर्थं बोधयत्वित्याकारकेच्छाया विषयता-बोधे, तद्विषयता पदेऽर्थे चास्ति। नहि पदं पदार्थो वा इच्छाविषयः। स्वविषयविषयत्वसम्बन्धेनेच्छायाः पदपदार्थयोः सत्त्वेऽपि तेन सम्बन्धेनायमर्थ

१. पा० सू० १ अ० १।७० म० भा०।

इच्छावान् शब्दो वा इच्छावान् इति प्रतीत्यभावात्। एवञ्च सम्बन्धिनोः पदपदार्थयोराश्रयतानियामकत्वस्य इच्छायामभावादिच्छायाः शक्तित्वमपि नास्तीति पदपदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभावापरपर्याया शक्तिरिति मञ्जूषाकाराः।

प्राचीनवैयाकरणास्तु बोधजनकता शक्तिमाहुः। तथा चोक्तं भूषणे—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता तथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[1]॥

नवीनानां वैयाकरणाना वाच्यवाचकभाव एव शक्तिः। तादात्म्यञ्च सम्बन्धः। योऽर्थः स शब्दः, यः शब्दः सोऽर्थ इत्याकारक इतरेतराध्यासात्मकसङ्केतः शक्तिग्राहकः। पदपदार्थयोरितरेतराध्यासश्च शब्दार्थयोस्तादात्यमेवेति निष्कर्षः। वन्ध्यासुतादीनामर्थवत्त्वात् प्रतिपादिकत्वानुरोधेन बौद्धार्थस्फोटात्मकपदयोस्तादात्म्यस्वीकारेण नेयायिकैरुद्भावितो दोषो निराकृतः। तदनु शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वेन साधुषु अपभ्रंशेषु च शक्तिं स्वीकृत्य साधुष्वेव शक्तिमातिष्ठमानास्तार्किका. प्रत्याख्याताः। उक्तरूपायाः शक्तेस्त्रैविध्यं प्रदर्श्य नानार्थेषु तस्या नियामकत्वेन संयोगादयः संगृहीताः।

## लक्षणाविचारः

शक्यसम्बन्धो लक्षणा इति नैयायिकाः। लक्षणायाञ्च तात्पर्यानुपपत्तिरेव बीजम्। स्वनये वाक्ये शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति। यत्र 'गभीराया नद्या घोषः' इत्युक्तम्, तत्र नदीपदस्य नदीतीरे लक्षणा, गभीरपदार्थस्य नद्या सहाभेदेनान्वयः, क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। यदि तत्रैकदेशान्वयो न स्वीक्रियते, तदा नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरपदं तात्पर्यग्राहकम्। सा च गौणी, शुद्धा चेति द्विधा। प्रकारन्तरेणापि सा द्विधा जहत्स्वार्था, अजहत्स्वार्था च। सा च तात्स्थ्यादिनिमित्तिका इत्याहुः।

मीमांसकास्तु, वाक्यशक्तिस्वीकारेण 'गभीरायां नद्या घोष.' इत्याद्यनुरोधेन स्वबोध्यसम्बन्धो लक्षणा। गभीरायां नद्यामिति वाक्यस्य बोध्या गभीराभिन्ना नदी, तत्सम्बन्धस्तीरे इति वाक्येऽपि लक्षणा। अत्र प्रकृतिभागस्य गभीरत्वविशिष्टनदीतीरस्य निष्ठत्वसम्बन्धेन सप्तम्यर्थाधिकरणतायाम्, तस्या निरूपितत्वसम्बन्धेनाधेयतायां तस्याश्च स्वरूपसम्बन्धेन घोषे। एवञ्च गभीरत्वविशिष्टनदीतीरनिष्ठाधिकरणतानिरूपिताधेयताश्रयो घोष इति बोधः। परम्परासम्बन्धरूपा लक्षणा लक्षितलक्षणा। स च सम्बन्धः स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपः। तथा च

१. शक्तिनि० ३७ का०।

द्विरेफपदवाच्यरेफद्वयघटितभ्रमरपदवाच्यमधुकरे लक्षणा। प्रयोजनवती, रूढा चेति द्विधा लक्षणा इत्याहु.।

परमलघुमञ्जूषाकारश्च लक्षणां पृथग्वृत्ति नाङ्गीकरोति। लक्षणाङ्गीकारे वृत्तिद्वयमवच्छेदकद्वयञ्च कल्पनीयं भवति। शाब्दबोधे लक्षणाजन्योपस्थिते. पृथक् कारणत्वं वक्तव्यम्। एवं पदार्थोपस्थितावपि तज्ज्ञानस्य हेतुत्वं स्वीकार्यम्। परस्परजन्यबोधे परस्पराभावमादाय व्यभिचारवारणाय अव्यवहितोत्तरत्वनिवेशे महद् गौरवम्। अतो गङ्गापदात् तीरप्रत्ययार्थं गङ्गापदे एव शक्तिद्वयं स्वीकार्यम्। एका प्रसिद्धा, अपरा अप्रसिद्धा। भगीरथरथखातावच्छिन्नपय.प्रवाहनिरूपिता प्रथमा शक्ति, सामीप्यसम्बन्धावच्छिन्नतीरत्वावच्छिन्नविषयकत्वावच्छिन्नार्थ-निरूपिता शक्तिर्द्वितीया। एवञ्च लक्षणया प्रतिपिपादयिषितस्यार्थस्याप्रसिद्धशक्त्यैव बोधनिर्वाहे कोऽभिनिवेशो लक्षणायां प्रेक्षावताम्।

## व्यञ्जनाविचारः

अत्र व्यञ्जनां लक्षणायामन्तर्भावयन्तो नैयायिका निराकृताः सन्ति। व्यञ्जनास्वीकारे प्रमाणं निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च इति हरिमत-मुपन्यस्तम्। द्योतकत्वस्य व्यञ्जकत्वरूपत्वात्, वैयाकरणानामपि व्यञ्जनास्वीकार आवश्यकः। लक्षणायाः पदवृत्तित्वेन व्यञ्जनायाश्च पदतदेकदेशवृत्तित्वेन मुख्यार्थबाधनिरपेक्षबोधजनकत्वेन च लक्षणायामन्तर्भावो भवितु नार्हति। निपातानां स्वशक्यार्थाभावाल्लक्षणाया असम्भवाद् व्यञ्जकतारूपैव द्योतकता। आदौ व्यञ्जनाया लक्षणन्निरूपितमस्ति।

## आकाङ्क्षाविचारः

शाब्दबोधे वृत्तिज्ञानाधीनोपस्थितपदपदार्थधियः कारणत्वेन तद्घटक-वृत्त्यादीन् निरूप्य सहकारिकारणनिरूपणाय आकाङ्क्षायोग्यतासत्तितात्पर्यप्रकरणानि प्रारब्धानि। सह करोतीति व्युत्पत्त्या कारणविशेषलाभेन केन सह करोतीत्याका-ङ्क्षाया कारणेनेति वाच्यम्। एवञ्च सहकारिकारणं गौणकारणभिन्नत्वमिति लक्षणं पर्यवसितम्। घटकार्यं प्रति कपालस्य मुख्यं कारणत्वम्। एवं यागादेः स्वर्गं प्रति मुख्यकारणत्वम्, अपूर्वस्य तु सहकारिकारणत्वम्। प्रकृते पदज्ञानं शाब्दबोधे मुख्यकारणम्, पदार्थोपस्थित्यादीनां तु सहकारिकारणत्वम्।

यद्वा, स्वावच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वं सहकारिकारणत्वम्। अत्र स्वपदेन सहकारित्वेनाभिमतं विवक्षितम्। तथा च दण्डत्वा-वच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्कपालत्वावच्छिन्नकत्वं दण्डादिष्विति लक्षणसमन्वयः। वाक्यशक्तिग्राहकत्वेनाकाङ्क्षाया उपयोगः। घटपदादिरूपार्थ-

ज्ञानानन्तरं तदर्थान्वययोग्यार्थस्यानयनादेर्यज्ज्ञानं तद्विषयिणीच्छा आकाङ्क्षा। विषयतासम्बन्धस्य विशिष्टबुद्धिनियामकत्वाभावेन समवायसम्बन्धेन चेच्छाया अर्थे विरहेऽपि अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् तस्या अर्थे आरोपः। पदे नारोपः।

## योग्यताविचारः

शाब्दबोधसहकारिकारणस्य योग्यताया निर्वचनाय प्रकरणमिदमारब्धम्। 'अत्र नैयायिका.'—बाधाभावो योग्यता। सा च तात्पर्यविषयीभूतपदार्थसम्बन्धे पदपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावः। यथा पयसा सिञ्चतीत्यत्र तात्पर्यविषयीभूतजलकरणकत्वसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इत्याहुः, तत्, न; विशिष्टधीमात्रे बाधाभावस्यैकरूपेण कारणत्वासम्भवात् पृथग्रूपेण शाब्दबोधे कारणत्वकल्पने तु तदपेक्षया योग्यताज्ञानस्यैव कारणत्वौचित्यात्।

केचित्तु शाब्दबोधं प्रति योग्यताज्ञानस्य कारणत्वं नाङ्गीकुर्वन्ति, किन्तु वह्निना सिञ्चतीत्यादौ बोधादर्शनेनायोग्यतानिश्चयः प्रतिबन्धक। तदभावस्य कारणत्वमिति मन्यन्ते, तदपि न, यद्विषयकानुमित्यादिज्ञानं न जातम्, शाब्दबोध एव जातः, तद्विशिष्टबुद्धौ अयोग्यताज्ञानाभावापेक्षया लाघवाद् योग्यताज्ञानत्वेनैव कारणतासिद्धेः।

प्रथमं नागेशेन योग्यता परिष्कृता, पयसा सिञ्चतीत्यादौ समन्वयोऽपि कृतः। 'वह्निना सिञ्चति' एतादृशस्थले नान्वयबोधः, किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकमतं दूषितम्। स्वोक्तौ हरिमतं प्रमाणत्वेनपोन्यस्तम्।

## आसत्तिविचारः

अत्रादौ आसत्तेः स्वरूपं प्रदर्शितम्। सा च प्रकृतान्वयबोधाननुकूलपदाव्यवधानरूपा, 'गिरिरग्निमान्' इति वाक्ये आसत्तिरस्ति, 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र तु नासत्तिरिति पुनस्तस्या मन्दबुद्धेरबिलम्बेन शाब्दबोधे हेतुतायां 'न पदान्त०'[1] इति सूत्रस्थं भाष्यं प्रमाणत्वेनोपन्यस्तम्।

## तात्पर्यविचारः

प्रथमं स्वमतेन तात्पर्य लक्षितम्। तत्र चोपात्तमीश्वरपदं वक्तुरुपलक्षणम्। एवञ्च वक्तुरिच्छा तात्पर्यमिति पर्यवसन्नम्।

अन्ये तु तदितरमात्रबोधेच्छयाऽनुच्चरितत्वे सति तत्तदर्थबोधजननयोग्यत्वम् इति परिष्कुर्वन्ति।

---

१. पा० सू० १।१।५८।

केचित्तु न शाब्दबोधमात्रे तात्पर्यस्य कारणत्वम्, अपि तु सैन्धवमानयेत्यादिनानार्थकेषु शब्देष्वेव। तत्र च तात्पर्यनिर्णायकप्रकरणादेवार्थनिर्णयसम्भवे तात्पर्यस्यातिरिक्तं शाब्दमतौ कारणत्वं नेच्छन्ति। पुनः स्वमते नागेशः प्रमाणमुपन्यस्तवान्। शक्त्या तात्पर्यस्य निर्वाह्यत्वं युक्त्या निराकृत्य प्रकरणमिदं समापद् ग्रन्थकारः।

## निबन्धस्यास्योपयोगः

लोक एव व्याकरणस्य सर्वतो महदावपनमिव उररीक्रियते निखिलैर्विद्वद्भिः, विशेषतः शाब्दिकैः। तत्र च प्रत्यहं पारेसहस्रं शब्दा. प्रयुज्यन्ते, तेषामर्थाश्चावगम्यन्ते लोकैरिति सर्वैनुभूयत एव। शब्दाना गवेषणाया शब्दैः सहार्थाना सम्बन्धनिर्धारणे तन्निर्धारणाय लोकाना ज्ञप्तौ च यावान् मनोयोगो भारतीयै शब्दशास्त्रविद्भिर्दत्तः, न केनाप्यन्यैः। महती परम्परेयमद्याप्यक्षुण्णा विराजते। अत एव महाभारते शाब्दिका महता आदरेण स्मर्यन्ते।

सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
प्रत्यक्षदर्शी लोकाना सर्वदर्शी भवेन्नरः॥[1]

सर्वेषां शब्दानां व्याकृतिः, विवेचनम्, निर्वचनम्, प्रकृतिप्रत्ययानां पृथक् पृथग् निर्धारणम्, अर्थसम्बन्धनिरूपणम् इत्येतदखिलमपि कर्तव्यत्वेनापतति शाब्दिकानां शिरसि। ये शब्दा अस्माभिः श्रूयन्ते, किं त एव शब्दा, आहोस्वित् केचनान्ये। अर्थात् तेषा वास्तविकं स्वरूपं किम्? अथ च त एवार्थैः सम्बद्धाः, आहोस्विदन्ये इत्यादि सर्वमपि विवेचनीयम्। विवेचनीयेष्वनेकेषु प्रकारेषु शाब्दबोधविवेचनप्रकारोऽप्येको मूर्द्धन्यः प्रकारः कर्तव्यकोटौ वर्तते। शाब्दबोधप्रकारेषु प्रथमं शब्दस्वरूपनिर्धारणम्, ततस्तेषामर्थसम्बन्धनिर्धारणम्, तत सम्बन्धस्वरूपनिर्धारणं विधेयम्। प्रस्तुतशोधप्रबन्धे केवलं शब्दस्वरूपनिर्धारणम्, तच्छक्तिस्वरूपनिर्धारणञ्चैव विवेचनीयत्वेनाङ्गीकृतम्। तदेव यथामति यथाशक्ति च निर्धारितम्। तन्निर्धारणप्रसङ्गेन अनपेक्षितानि तर्कानारूढानि दर्शनान्तरीयाणि मतान्यपि प्रत्याख्यातानीति 'अनवसरपठिता वाणी' न्यायो न मन्तव्यो भविष्यति।

यथा चात्र शोधप्रबन्धे शास्त्रकाराणां मतानि सम्यक् समीक्ष्य प्रतिपादितानि। तत्र गुणदोषावपि प्रदर्शितौ, तयोः समर्थननिराकरणेऽपि विहिते। तत्र चानेकानि प्रमाणानि पुरस्कृतानि। शाब्दबोधप्रकारस्य च महान् राजमार्गः परिष्कृतो निर्मितश्च। मन्ये, प्रकृतशोधप्रबन्धनिबद्धविषयेण न केवलं छात्राणाम्, अपि तु विदुषामपि

१. उद्योग० ४३।३६।

शाब्दबोधविषये महान् उपकारो भविष्यति। अत्र मया गजनिमीलिकयैव आचार्याणां मतानि नावलोकितानि, किन्तु अन्तः प्रविश्य सारासारविवेकेन अनेन शोधप्रबन्धेन शब्दस्वरूपतच्छक्तिस्वरूपविवेचनोद्याने विहरतां सहृदयानां कुसुमनिचयाना सौरभग्रहणे नवीना काचन घ्राणशक्तिरुदियात्, तथापि—

आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥

इति कालिदासं भूयो भूयः स्मरन् विदुषो निवेदये यत्—

'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः' इति प्रकृतिसिद्धोऽयं परिणामो महतापि वारयितुं न शक्यते प्रयत्नसहस्रेणापि किं मादृशेनेति पुनः सहृदयान् विदुषः सम्प्रार्थ्य विरमामि।



# सहायकग्रन्थसूची


| ग्रन्थनाम | प्रकाशन-संस्था | वर्ष |
| --- | --- | --- |
| अमरकोष ( सरला व्याख्या ) | नवलकिशोर प्रेस, लखनऊ | सं० १९७५ |
| अर्थविज्ञान ओर व्याकरण दर्शन —डा० कपिलदेव द्विवेदी | हिन्दुस्तान एकेडमी उ० प्र०, इलाहाबाद | सन् १९५१ |
| अर्थ-संग्रह श्री ए० बी० गजेन्द्रगडकर | इलफिन्स्टेनकालेज, बम्बई | सन् १९३४ |
| आप्टे संस्कृत-इंग्लिश डिक्शनरी | मोतीलाल बनारसी दास | सन् १९६३ |
| ऋग्वेद भाष्य-भूमिका —श्री सायणाचार्य | विद्याभवन संस्कृत ग्रन्थमाला–४५ | सन् १९६० |
| कारिकावली —वी० के० शास्त्री | ज्योतिष प्रकाश प्रेस, वाराणसी | सन् १९४० |
| काव्यप्रकाश ( बालबोधिनी टीका ) | भण्डारकर ओ० सी, पूना | सन् १९५० |
| काशिका | चौखम्बा-संस्कृत पुस्तकालय | सन् १९५२ |
| काशिका | तारा मुद्रणालय | सन् |
| काशी की सारस्वत साधना —पं० गोपीनाथ कविराज | विहार राष्ट्रभाषाषा परिषद, पटना | सन् १९६५ |
| कुसमाञ्जलि | हरिकृष्णदास, बनारस | सन् १९१३ |
| कोविदानन्दः | सारस्वतीसुषमा, संस्कृत विश्वविद्यालय | सं० २०१८ |
| खण्डनखण्डखाद्य | अच्युतग्रन्थमाला कार्यालय, काशी | सं० २०१८ |

| | | |
|---|---|---|
| चित्सुखी | उदासीन संस्कृत विद्यालय, काशी | सन् १९५६ |
| जैमिनीयन्यायमाला (सविस्तार) | आनन्दाश्रमसंस्कृतग्रन्थावली | सन् १९१६ |
| तत्त्वचिन्तामणि | मिथिला विद्यापीठ, दरभंगा | सन् १९५६ |
| तत्त्वसंग्रह | बौद्धभारती, वाराणसी | सन् १९६८ |
| तन्त्रवार्त्तिक | बनारस संस्कृत सीरीज | सन् १९०३ |
| तर्कभाषा | चौखम्बा संस्कृत सीरीज | सन् १९६३ |
| तर्कताण्डव तात्पर्याख्यावृत्ति | चौखम्बा संस्कृत सीरीज | सन् १९२५ |
| तैत्तिरीय आरण्यक | कलकत्ता | सन् १९७२ |
| तैत्तिरीय ब्राह्मण | पूना | सन् १९३४–३८ |
| तैत्तिरीयसंहिता (सायणभाष्य-सहित) भाग १-९ | पूना | सन् १९००–१९०५ |
| निरुक्त ( दो भाग ) | आनन्दाश्रम प्रेस, पूना | सन् १९२१ |
| न्यायकन्दली | वा० सं० वि० वि०, वाराणसी | सन् १९६३ |
| न्यायदर्शन | कालिका संस्कृत ग्रन्थमाला | सन् १९३६ |
| न्यायदर्शनम् ( वात्स्यायनभाष्य ) | भारतीय विद्या प्रकाशन | सन् १९७९ |
| न्यायपरिशुद्धि | संस्कृत कालेज कलकत्ता | सन् १९११ |
| न्यायमञ्जरी | चौखम्बा संस्कृत सीरीज | सन् १९३६ |
| न्यायसूत्रम् | आनन्दाश्रम पूना | सन् १९५३ |
| प्रमाणवार्त्तिकम् | चौखम्बा संस्कृत सीरीज, वाराणसी | |
| परमलघुमञ्जूषा | संस्कृत महाविद्यालय, म० सं० विश्व-विद्यालय, बड़ौदा | सं० २०१७ |
| परिभाषेन्दुशेखर (गदा टीका) | आनन्दाश्रम प्रेस, पूना | सन् १९१३ |
| पाणिनिसूत्रपाठ-शब्दकोष | भण्डारकर ओ० रि० ई०, पूना | सन् १९३५ |
| पातञ्जलयोगदर्शनम् —श्री ब्रह्मलीनमुनि महाराज | सूरज, गुजरात | सन् १९५८ |

| | | |
|---|---|---|
| पारस्करगृह्यसूत्रम् | विद्याविलास प्रेस, काशी | सन् १९२५ |
| प्रौढमनोरमा ( टीका-चतुष्टयोपेत ) | चौखम्बा संस्कृत सीरीज | सन् १९३९ |
| बृहच्छब्दरत्न | हिन्दूविश्वविद्यालय | ... ... |
| बृहच्छब्देन्दुशेखर ( ३ भाग ) | सरस्वतीभवन-ग्रन्थमाला | सन् १८८२ |
| बृहद् वैयाकरणभूषण —सम्पादक पं० रामकृष्ण शास्त्री | बनारस संस्कृत सीरीज | सन् १९०० |
| ब्रह्मसूत्रशाङ्करभाष्य | निर्णयसागर प्रेस | सन् १९३८ |
| महाभाष्य ( नवाह्निक ) | निर्णयसागर प्रेस | सन् १९५१ |
| महाभाष्यशब्दकोष | भण्डारकर रि० इ०, पूना | सन् १९२७ |
| मीमांसाकोष ( भाग १–६ ) केवलानन्द सरस्वती | प्राज्ञपाठशाला मण्डल वाई (सतारा) | सन् १९६२ |
| मीमांसानुक्रमणिका —मण्डन मिश्र | चौखम्बा संस्कृत सीरीज | सं० १९८७ |
| मीमांसा न्यायप्रकाश | काशी संस्कृत सीरीज | सन् १९४८ |
| मीमांसाश्लोकवार्त्तिकम् | चौखम्बा सं० ग्रन्थमाला ( सं० ३ ) | सन् १८९८ |
| वाक्यपदीय ( वृत्तिसमुद्देश ) | ट्रावङ्कुर विद्यालय, संस्कृत सीरीज | सन् १९४२ |
| लीलावती | चौखम्बा, वाराणसी | सन् १९६१ |
| रसगङ्गाधर | निर्णयसागर प्रेस, बम्बई | सन् १९७० |
| वाक्यपदीय— अम्बाकर्त्रीव्याख्या (प्रथमकाण्ड) | संस्कृत विश्वविद्यालय, वाराणसी | सन् १९६३ |
| वाक्यपदीय ( तृतीयकाण्ड ) के० ए० सुब्रह्मण्य एय्यर, | पूना | सन् १९६३ |
| वाक्यपदीय ( सम्पूर्ण ) | पूना | सन् १९६५ |
| वैयाकरणभूषणसार ( शाङ्करीटीका ) | आनन्दाश्रम प्रेस, पूना | ... ... |
| वैयाकरणभूषणसार ( प्रभा ) | ज्योतिष प्रकाश प्रेस, काशी | ... ... |

| | | |
|---|---|---|
| वैयाकरण-सिद्धान्तलघुमञ्जूषा ( २ भाग ) | चौखम्बा संस्कृत सीरीज | सन् १९२५ |
| वैशेषिकदर्शन —ढुण्ढिराज शास्त्री | चौखम्बा संस्कृत सीरीज | सन् १९६६ |
| व्याकरणदर्शनभूमिका —रामाज्ञापाण्डेय | सरस्वतीभवन प्रकाशन | सं० २०१० |
| व्याकरणमहाभाष्य ( भाग ३ ) | मोतीलाल बनारसीदास | सन् १९६७ |
| व्युत्पत्तिवाद —डा० उमेश मिश्र | इलाहाबाद | सन् १९५३ |
| शतपथब्राह्मण | अच्युतग्रन्थमाला कार्यालय, काशी | सं० १९९७ |
| शब्दकौस्तुभ ( २ भाग ) | चौखम्बा सं० सीरीज | सन् १९३३ |
| शब्दशक्तिप्रकाशिका ( प्रथम भाग ) | कालिकाता-विश्वविद्यालय | सन् १९१४ |
| शाबरभाष्य | आनन्दाश्रम संस्कृत ग्रन्थावली | सन् १९२९ |
| शास्त्रदीपिका | निर्णयसागर प्रेस, बम्बई | सन् १९१५ |
| श्लोकवार्त्तिक —न्यायरत्नाकर व्याख्या | — | — |
| सर्वदर्शनसंग्रह | चौखम्बा विद्याभवन, वाराणसी | सन् १९६४ |
| संस्कृतग्रामर डिक्शनरी | गायकवाड ओ० सी० | सन् १९६१ |
| संस्कृत व्याकरणशास्त्र का इतिहास ( प्रथम भाग ) | वैदिक यन्त्रालय, अजमेर | सं० २०२० |
| संस्कृत व्याकरणशास्त्र का इतिहास ( २ भाग ) | प्राच्य विद्याप्रतिष्ठान, अजमेर | सं० २०१९ |
| संस्कृत शास्त्रों का इतिहास —बलदेव उपाध्याय | शारदा मंदिर, वाराणसी | सन् १९६९ |

| | | |
|---|---|---|
| साङ्ख्यसूत्र प्रवचन भाष्य —डा० रामशङ्कर भट्टाचार्य | भारतीय विद्याप्रकाशन, वाराणसी | सं० २०२२ |
| साहित्यदर्पण ( लक्ष्मीटीका ) | चौखम्बा सं० सीरीज | सन् १९५५ |
| सिद्धान्तकौमुदी ( २ भाग ) | मोतीलाल बनारसीदास | सन् १९५६ |
| सिद्धान्तकौमुदी ( २ भाग ) लक्ष्मीटीका | मोतीलाल बनारसीदास | सन् १९६५ |
| सूतसंहिता | आनन्दाश्रम संस्कृत ग्रन्थावलि, पूना | सन् १९१५ |
| स्फोटदर्शन —रङ्गनाथ पाठक | बिहार राष्ट्रभाषा परिषद् | सन् १९६७ |
| स्फोटवाद सम्पादक–कृष्णामाचार्य | आडियार लाइब्रेरी, मद्रास | सन् १९४६ |
| स्फोटसिद्धि | पाण्डिचेरी | सन् १९५८ |

